# अथ अकारादिक्रमेण श्रीमद्भगवद्गीतायाः पदानां व्युत्पत्तिः

1. अकर्तारम् (अ.4-श्लो.13, अ.13-श्लो.29) – न कर्ता अकर्ता, तम्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कर्ता इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।
2. अकर्म (4-16,18) – न कर्म, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि, ए.व.।
3. अकर्मकृत् (3-5) – न कर्मकृत् – अकर्मकृत्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कर्मकृत् इत्यत्र कर्म करोति इति कर्मकृत् इति विग्रहे कर्मन् इत्युपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुगागमः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। कर्मन् इत्यत्र कृ-धातोः ((डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि, ए.व.।
4. अकर्मणः (3-8,8, 4-17) – न कर्मणः, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73), कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अकर्मन्, नपुं. ष.वि.ए.व.।
5. अकर्मणि (2-47, 4-18) – न कर्मणि, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि, ए.व.।
6. अकल्मषम् (6-27) – अविद्यमानं कल्मषं यस्मिन्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। कल्मष इत्यत्र कर्म स्यति इति विग्रहे कर्मन् इति उपपदे सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति सूत्रेण साधुत्वम्, तस्मादेव रेफस्य लत्वम्, षत्वञ्च, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि, ए.व.।
7. अकारः (10-33) – अ इति वर्णात् **वर्णात्कारः** (वा. 2227) इति वर्णनिर्देशे कार-प्रत्ययः। पुं. प्र.वि, ए.व.।
8. अकार्यम् (18-31) – न कार्यम् , **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कार्य इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः। नपुं. प्र.वि, ए.व.।
9. अकीर्तिकरम् (2-2) – न कीर्तिकरम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कीर्तिकर इत्यत्र कीर्तिं करोति इति विग्रहे कीर्ति इत्युपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञो हेतुताच्छील्यानुलोम्येषु** (पा.सू. 3-2-20) इति ट-प्रत्ययः। कीर्ति इत्यत्र कृत्-धातोः (कृत संशब्दने, चुरादिः, सि.कौ. - धा.सं.

1654) **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** (उणा. 4-118) इति इन्-प्रत्ययः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः, **र्वोरुपधायाः दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः। नपुं. प्र.वि, ए.व.।

10. अकीर्तिम् (2-34) – न कीर्तिम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कीर्ति इत्यत्र कृत्-धातोः (कृत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** (उणा. 4-118) इति इन्-प्रत्ययः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः, **र्वोरुपधायाः दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः। स्त्री. द्वि.वि,, ए.व.।
11. अकीर्तिः (2-34) – न कीर्तिः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कीर्ति इत्यत्र कृत्-धातोः (कृत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** (उणा. 4-118) इति इन्-प्रत्ययः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः, **र्वोरुपधायाः दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः। स्त्री. प्र.वि,, ए.व.।
12. अकुर्वत (1-1) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लङ्, तस्य झ, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उ-प्रत्ययः, **आत्मनेपदेष्वनतः** (पा.सू 7-1-5) इति अत्-आदेशः झस्य, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः। लङ्, प्र.पु, ब.व.।
13. अकुशलम् (18-10) – न कुशलम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कुश्-धातोः (कुश श्लेषणे, दिवादिः, मा.धा.वृ. - धा.सं. 117) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। नपुं. द्वि.वि, ए.व.।
14. अकृतबुद्धित्वात् (18-16) – कृता बुद्धिः यस्य सः कृतबुद्धिः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः, न कृतबुद्धिः अकृतबुद्धिः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः, अकृतबुद्धेः भावः अकृतबुद्धित्वम्, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, तस्मात् अकृतबुद्धित्वात्। कृत इत्यत्र कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) कर्मणि **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नपुं. पं.वि, ए.व.।
15. अकृतात्मानः (15-11) – न कृतात्मानः अकृतात्मानः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कृतात्मन् इत्यत्र कृतः आत्मा येषां ते कृतात्मानः इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) कर्मणि **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि, ब.व.।
16. अकृतेन (3-18) – न कृतम् अकृतम्, तेन, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कृत इत्यत्र कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। नपुं. तृ.वि, ए.व.।
17. अकृत्स्नविदः (3-29) – न कृत्स्नविदः अकृत्स्नविदः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। कृत्स्नविद् इत्यत्र कृत्स्नं विदन्ति इत्यर्थे, कृत्स्नम् इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) क्विप्-प्रत्ययः, कृत्स्न इत्यत्र कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि, ब.व.।
18. अक्रियः (6-1) – अविद्यमाना क्रिया यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. -

धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति श-प्रत्ययः, **रिङ्शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङ्। पुं. प्र.वि, ए.व.।

19. अक्रोधः (16-2) – न क्रोधः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि, ए.व.।
20. अक्लेद्यः (2-4) – न क्लेद्यः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्लेद्य इत्यत्र क्लिद्-धातोः (क्लिदू आर्द्रीभावे, दिवादिः, सि.कौ. - धा.सं. 1242) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **अचो यत्** (पा.सू. 3-1-124) इति कर्मणि यत् , **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि, ए.व.।
21. अक्षयम् (5-21) – अविद्यमानः क्षयः यस्य सः, तम् अक्षयम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। क्षय इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. द्वि.वि, ए.व.।
22. अक्षयः (10-33) – अविद्यमानः क्षयः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। क्षय इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि, ए.व.।
23. अक्षरसमुद्भवम् (3-15) – अक्षरं (ब्रह्म) समुद्भवः (कारणम्) यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अक्षर इत्यत्र न क्षरम् अक्षरम् इति विग्रहे **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, यद्वा अक्षर इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति सर-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, अष् सर, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कः, अक् सर, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्यय-सस्य मूर्धन्यादेशः, अक् षर – अक्षर। समुद्भव इत्यत्र सम्-पूर्वकात् उत्पूर्वकात् च भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. द्वि.वि, ए.व.।
24. अक्षरम् (8-3,11, 10-25, 11-18,37, 12-1,3) – न क्षरम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच् । यद्वा अक्षर इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति सरप्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, अष् सर, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कः, अक् सर, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्ययसस्य मूर्धन्यादेशः, अक् षर – अक्षर। नपुं. प्र.वि, ए.व.।
25. अक्षरः (8-21, 15-16) – न क्षरः । **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच् । यद्वा अक्षर इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति सर-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, अष् सर, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कः, अक् सर, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्यय-सस्य मूर्धन्यादेशः, अक् षर अक्षर। पुं. प्र.वि, ए.व.।

26. अक्षराणाम् (10-33) – न क्षराणि अक्षराणि, तेषाम्। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच् । यद्वा अक्षर इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति सरप्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, अष् सर, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कः, अक् सर, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्यय-सस्य मूर्धन्यादेशः, अक् षर अक्षर। नपुं. ष.वि, ब.व.।
27. अक्षरात् (15-18) न क्षरम्, तस्मात्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच् । यद्वा अक्षर इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति सर-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, अष् सर, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कः, अक् सर, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्यय-सस्य मूर्धन्यादेशः, अक् षर अक्षर। नपुं. पं.वि, ए.व.।
28. अखिलम् (4-33, 7-29, 15-12) – अविद्यामानं खिलं यस्य – अखिलम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। खिल इत्यत्र खिल्-धातोः (खिल कणशः आदाने, तुदादिः, इति वाचस्पत्यम्) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि, ए.व.।
29. अगतासून् (2-11) – गताः असवः येषां ते गतासवः तान्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, न गतासवः अगतासवः, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, असु इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. द्वि.वि, ब.व।
30. अग्निः (4-37, 8-24, 9-16, 11-39, 18-48) – अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146), इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, अन् ग् **अङ्गेर्नलोपश्च** (उणा. 4-50) इति निप्रत्ययः नलोपश्च। पुं. प्र.वि, ए.व.।
31. अग्नौ (15-12) – अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146), इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, अन् ग् **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः नलोपश्च। पुं. स.वि, ए.व.।
32. अग्रे (18-37,38,39) – अग्-धातोः (अग कुटिलायां गतौ, भ्वादिः, सि.कौ. - धा.सं. 793) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति उणादिना साधुः। नपुं. स.वि, ए.व.। पुरस्तात् इत्यर्थे अव्ययमपि।
33. अघम् (3-13) – अघ्-धातोः (अघ पापकरणे, चुरादिः, सि.कौ. - धा.सं.) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. द्वि.वि, ए.व.।
34. अघायुः (3-16) – अघः आयुः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अघ इत्यत्र अघ्-धातोः (अघ पापकरणे, चुरादिः इति वाचस्पत्यम्) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। आयुः इत्यत्र इण् इत्यस्मात् (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **छन्दसीणः** (उणा. 1-2) इति उण्-प्रत्ययः। पुं. प्र.वि, ए.व.।
35. अङ्गानि (2-58) – अगि-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146), **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। नपुं. द्वि.वि, ब.व.।

36. अचरम् (13-15) – न चरः अचरः, तम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चर इत्यत्र चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि, ए.व.।
37. अचलप्रतिष्ठम् (2-70) – अचला प्रतिष्ठा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इत्यनेन पूर्वपदस्य पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। अचला इत्यत्र चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। प्रतिष्ठा इत्यत्र प्रतिपूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, स्त्रियाञ्च **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति सूत्रेण सस्य षत्वम्। पुं. द्वि.वि, ए.व.।
38. अचलम् (6-13, 12-3) – न चलम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चल इत्यत्र चल-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. प्र.वि, ए.व.।
39. अचलः (2-24) – न चलः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चल इत्यत्र चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. प्र.वि, ए.व.।
40. अचला (2-53) – न चला, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चला इत्यत्र चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि, ए.व.।
41. अचलाम् (7-21) – न चला, अचला ताम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चला इत्यत्र चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि, ए.व.।
42. अचलेन (8-10) – न चलः, अचलः तेन, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चल इत्यत्र चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. तृ.वि, ए.व.।
43. अचापलम् (16-2) – न चापलम् – अचापलम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चापल इत्यत्र चपलस्य भावः कर्म वा इत्यर्थे चपल-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 4-1-130) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, चपल इत्यत्र **चुपेरच्चोपधायाः** (उणा. 1-108) इति चुप्-धातोः (चुप मन्दायां गतौ, भ्वादिः, सि.कौ. - धा.सं. 403) कल-प्रत्ययः। नपुं. प्र.वि, ए.व.।
44. अचिन्त्यरूपम् (8-9) – न चिन्त्यम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। अचिन्त्यं रूपं यस्य सः अचिन्त्यरूपः, तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। चिन्त्य इत्यत्र चिति-धातोः (चिति स्मृत्याम्, भ्वादिः, सि.कौ. - धा.सं. 1535) इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **ऋहलोर्ण्यत्** (3-1-124) इति ण्यत्। रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. द्वि.वि, ए.व.।

45. अचिन्त्यम् (12-3) – न चिन्त्यम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चिन्त्य इत्यत्र (चिति स्मृत्याम्, भ्वादिः, सि.कौ. - धा.सं. 1535) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्। नपुं. द्वि.वि, ए.व.।
46. अचिन्त्यः (2-25) – न चिन्त्यः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चिन्त्य इत्यत्र चिन्त्-धातोः (चिति स्मृत्याम्, भ्वादिः, सि.कौ. - धा.सं. 1535) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **ऋहलोर्ण्यत्** (3-1-124) इति ण्यत्। पुं. प्र.वि, ए.व.।
47. अचिरेण (4-39) – न चिरम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। चिर इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) बाहुलकात् रक्। नपुं. तृ.वि, ए.व.।
48. अचेतसः(3-32, 15-11, 17-6) – अविद्यमानं चेतः अस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि, ब.व.।
49. अच्छेद्यः (2-24) – न छेद्यः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। छेद्य इत्यत्र छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः।
50. अच्युत (1-21, 11-42, 18-73) – अविद्यमानं च्युतं यस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपश्च** (वा. 1361) इति समास उत्तरपदलोपश्च। च्युत इत्यत्र च्यु-धातोः (च्युङ् गतौ स्मृत्याम्, भ्वादिः, सि.कौ. - धा.सं. 955) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। पुं. सम्बो.वि, ए.व.।
51. अजस्रम् (16-19) – न जस्यति, नञ्पूर्वात् जस्-धातोः (जसु मोक्षणे, दिवादिः, सि.कौ. - धा.सं. 1211) , **नमिकम्पिस्म्यजसकमहिंसदीपो रः** (पा.सू. 3-2-157) इति र-प्रत्ययः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। नपुं. द्वि.वि, ए.व.।
52. अजम् (2-21, 7-25, 10-3,12) – न जायते, नञ्-उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति कर्त्तरि ड-प्रत्ययः, डित्त्वात् टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। पुं. द्वि.वि, ए.व.।
53. अजः (2-20, 4-6) – न जायते नञ्-उपपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति कर्त्तरि ड-प्रत्ययः, डित्त्वात् टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) उपपदसमासः। पुं. प्र.वि, ए.व.।
54. अजानता (11-41) – न जानता, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। जानता इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **वर्तमाने लट्** (पा.सू. 3-2-123) इति लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ। पुं. तृ.वि, ए.व.।
55. अजानन्तः (7-24, 9-11, 13-25) – न जानन्तः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। जानन्त इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **वर्तमाने लट्** (पा.सू. 3-2-123) इति लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः। पुं. प्र.वि, ब.व.।
56. अज्ञः (4-40) – न ज्ञः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञ इत्यत्र **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) क-प्रत्ययः **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि, ए.व.।
57. अज्ञानजम् (10-11, 14-8) – अज्ञानात् जातम्, पञ्चम्युपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति डप्रत्ययः। डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। **उपपदमतिङ्** (पा.सू. 2-2-19) इति

समासः। अज्ञान इत्यत्र न ज्ञानम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः। नपुं. द्वि.वि, ए.व.।

58. अज्ञानविमोहिताः (16-15) – अज्ञानेन विमोहिताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। अज्ञान इत्यत्र न ज्ञानम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः विमोहित इत्यत्र विपूर्वकात् मुह्-धातोः (मुह वैचित्त्यै, दिवादिः, सि.कौ. - धा.सं. 1198) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि, ब.व.।

59. अज्ञानसम्भूतम् (4-42) – अज्ञानेन सम्भूतम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। अज्ञान इत्यत्र न ज्ञानम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। सम्भूत इत्यत्र सम्पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **गत्यर्थाकमर्मकश्लिशीङ्स्थासवरजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। पुं. द्वि.वि, ए.व.।

60. अज्ञानसम्मोहः (18-72) – अज्ञानोत्पन्नः सम्मोहः, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्** (वा. 1310) इति वार्तिकेन उत्पन्नपदस्यलोपे तत्पुरुषसमासोऽयं सम्पन्नः। अज्ञान इत्यत्र न ज्ञानम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः सम्पूर्वकात् मुह्-धातोः (मुह वैचित्त्यै, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. प्र.वि, ए.व.।

61. अज्ञानम् (5-16, 13-11, 14-16,17 16-4) – न ज्ञानम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः नपुं. प्र.वि, ए.व.।

62. अज्ञानाम् (3-26) – न ज्ञाः – अज्ञाः, तेषाम्। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञ इत्यत्र जानाति इति ज्ञः, ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति कप्रत्ययः। पुं. ष.वि, ए.व.।

63. अज्ञानेन (5-15) – न ज्ञानेन, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्। **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. तृ.वि, ए.व.।

64. अणीयांसम् (8-9) – अतिशयेन अणुः, अणु इति शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्। अणु इत्यत्र **धान्ये नित्** (उणा. 1-109) इति सूत्रेण अण्-धातोः (अण प्राणने, दिवादिः, सि.कौ. - धा.सं. 1175) उप्रत्ययः। पुं. द्वि.वि, ए.व.।

65. अणोः (8-9) – **धान्ये नित्** (उणा. 1-109) इति अण्-धातोः (अण प्राणने, दिवादिः, सि.कौ. - धा.सं. 1175) उ-प्रत्ययः। स च नित्। पुं. पं.वि, ए.व.।

66. अतत्त्वार्थवत् (18-22) – न तत्त्वार्थवत्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। तत्त्वस्य अर्थः तत्त्वार्थः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तत्त्वम् इत्यत्र तत्-शब्दात् तस्य भावः इत्यर्थे **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, स्वादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञाम्, चुरादिः, सि.कौ.

- धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। तत्त्वार्थ इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्। नपुं. प्र.वि, ए.व.।

67. अतन्द्रितः (3-23) – न तन्द्रितः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। तन्द्रित इत्यत्र तन्द्रा-शब्दात् **तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति इतच्-प्रत्ययः। तन्द्रा इत्यत्र तत् द्राति इति विग्रहे तद् इति उपपदे द्रा-धातोः (द्रा कुत्सायां गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, अत्र **स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्** (पा.सू. 3-2-158) इति निर्देशात् तद् इति शब्दः दकारान्तः निपात्यते। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, स्वादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। पुं. प्र.वि, ए.व.।

68. अतपस्काय (18-67) – अविद्यमानं तपः यस्मिन् अतपस्कः, तस्मै – अतपस्काय। **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। अतपस् इत्यस्मात् **शेषाद्विभाषा** (पा.सू. 5-4-154) इति कप्रत्ययः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं.च.वि. ए.व.।

69. अतः (2-12, 9-24, 12-8, 13-11, 15-18) – एतद्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्, **एतदोऽन्** (पा.सू 5-3-5) इति अन्। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः। अव्ययम्।

70. अतितरन्ति (13-15) – अति-पूर्वकात् तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) लट्, लटः स्थाने झिः। **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु, ब.व.।

71. अतिनीचम् (6-11) – अतिशयेन नीचम्, **प्रादयः गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। नीच इत्यत्र नि-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **अन्येभ्योऽपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **उपसर्गस्य घञ्यमनुष्ये बहुलम्** (पा.सू. 6-3-122) इत्यत्र बहुलग्रहणसामर्थ्यात् नि इत्यस्य इकारस्य दीर्घः। नपुं. प्र.वि, ए.व.।

72. अतिमानिता (16-3) – अतिशयेन मानः, **प्रादयः गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। अतिमान-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, अतिमानिन्, तस्मात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति तल्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। अतिमान इत्यत्र अति-पूर्वकात् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। स्त्री. प्र.वि, ए.व.।

73. अतिरिच्यते (2-34) – अति-पूर्वकात् रिच्-धातोः (रिचिर् विरेचने, रुधादिः, सि.कौ. - धा.सं. 1441) लट्, लटः स्थाने त-प्रत्ययः। **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्। **भावकर्मणोः** (पा.सू. 1-3-14) इति आत्मनेपदम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु, ए.व.।

74. अतिवर्तते (6-44, 14-21) – अति-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः स्थाने त-प्रत्ययः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। लट्, प्र.पु, ए.व.।

75. अतिस्वप्नशीलस्य (6-16) – स्वप्नः शीलं यस्य सः – स्वप्नशीलः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अतिशयेन स्वप्नशीलः **प्रादयः गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। स्वप्न इत्यत्र स्वप्-धातोः (ञिष्वप शये, अदादिः, सि.कौ. - धा.सं. 1068) **स्वपो नन्** (पा.सू. 3-3-91) इति नन्-प्रत्ययः। शील इत्यत्र शील्-धातोः (शील समाधौ, भ्वादिः, सि.कौ. - धा.सं. 523) **भावे** (पा.सू. 3-3-18) इत्यनेन घञ्-प्रत्ययः। पुं. ष.वि, ए.व.।

76. अतीतः (14-21, 15-18) – अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुह-जीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण। पुं. प्र.वि, ए.व.।
77. अतीत्य (14-20) – अति-पूर्वकात् इण्धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (6-1-71) इति तुक्। अव्ययम्।
78. अतीन्द्रियम् (6-21) – इन्द्रियाणि अतिक्रान्तम्, **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा. 1336) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. द्वि.वि, ए.व.।
79. अतीव (12-20) – अतिशयः इव अथवा अत्येव, अत्र इव अवधारणे, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति प्रादिसमासः, अवधृतातिशयेऽत्यन्तातिशये च। अव्ययम्।
80. अत्यद्भुतम् (18-77) – अतिशयेन अद्भुतम्, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः। अद्भुत इत्यत्र **अदि भुवो डुतच्** (उणा. 5-1) इति उणादिसूत्रेण अदि उपपदे भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) डुतच्-प्रत्ययः, अद्भुत इति, डित्त्वसामर्थात् टेः लोपः। नपुं. द्वि.वि, ए.व.।
81. अत्यन्तम् (6-28) – अन्तम् अतिक्रान्तम्, **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा.1336) इति समासः। अन्त इत्यत्र अत्-धातोः, (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अथवा अन्त, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. द्वि.वि, ए.व.।
82. अत्यर्थम् (7-17) – अर्थम् अतिक्रान्तम्, **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा.1336) इति समासः। अत्यन्तमित्यर्थः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. द्वि.वि, ए.व.।
83. अत्यश्नतः (6-16) – अति-पूर्वकात् अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) **वर्तमाने लट्** (पा.सू. 3-2-123), तस्य स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः अश्नत् इति। **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना-प्रत्ययः। पुं. ष.वि, ए.व.।
84. अत्यागिनाम् (18-12) – न त्यागी अत्यागी, तेषाम्। **नञ्** (पा.सू 2-2-6) इति समासः। त्यागिन् इत्यत्र **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) घिनुण्-प्रत्ययः, **जोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. ष.वि, ब.व.।
85. अत्युच्छ्रितम् (6-11) – अतिशयेन उच्छ्रितम्, उच्छ्रित इति उद्-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण क्त-प्रत्ययः। नपुं. द्वि.वि, ए.व.।
86. अत्येति (8-28) – अतिपूर्वकः इण्-धातुः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) लट्, लटः स्थाने तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। लट्, प्र.पु, ए.व.।
87. अत्र (1-4,23, 4-16, 8-2,4,5, 10-7, 18-14) – अस्मिन् इति सप्तम्यर्थे एतद्-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्, **एतदोऽन्** (पा.सू. 5-3-5) इति अन्-आदेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः। अव्ययम्।

88. अथ (1-20,26, 2-26,33, 3-36, 11-5,14, 12-9,11, 18-58 ) – अर्थ-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति वार्तिकेन ड-प्रत्ययः, पृषोदरादित्वात् (पा.सू. 6-4-109) रेफस्य लोपश्च। अव्ययम्।
89. अथवा (6-42, 10-42, 11-42) – अथ इत्यत्र अर्थ-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति वार्तिकेन ड-प्रत्ययः, पृषोदरादित्वात् (पा.सू. 6-4-109) रेफस्य लोपश्च। वा इत्यत्र वा-धातोः बाहुलकात् क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अथ वा इत्यनयोः समुदायरूपम् इदम् अव्ययम्।
90. अथो (4-35) – अर्थ-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **उणादयो बहुलम्** (पा.सू. 3-3-1) इति बाहुलकात् डो-प्रत्ययः, पृषोदरादित्वात् (पा.सू. 6-4-109) रेफस्य लोपः। अव्ययम्।
91. अदक्षिणम् (17-13) – अविद्यमाना दक्षिणा यस्मिन्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति दक्षिणा इत्यस्य आकारस्य ह्रस्वः। दक्षिणा इत्यत्र दक्ष्-धातोः (दक्ष वृद्धौ शीघ्रार्थे च, भ्वादिः, सि.कौ. - धा.सं. 608) **दृदक्षिभ्यामिनन्** (उणा. 2-51) इति इनन्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. द्वि.वि. ए.व.।
92. अदम्भित्वम् (13-7) – दम्भित्वस्य अभावः **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः। दम्भ इत्यत्र दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं. 1270) **भावे** (पा.सू. 3-3-18) इत्यनेन घञ्। दम्भिन् इत्यत्र दम्भ-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। दम्भित्व इत्यत्र दम्भिनः भावः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। नपुं. प्र.वि. ए.व.।
93. अदाह्यः (2-24) – न दाह्यः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दाह्य इत्यत्र दह्-धातोः (दह भस्मीकरणे, भ्वादिः, सि.कौ. - धा.सं. 991) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्। **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि, ए.व.।
94. अदृष्टपूर्वम् (11-45) – दृष्टं पूर्वम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। न दृष्टपूर्वम् अदृष्टपूर्वम्। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दृष्ट इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः। **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. द्वि.वि, ए.व.।
95. अदृष्टपूर्वाणि (11-6) – न दृष्टपूर्वाणि अदृष्टपूर्वाणि। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दृष्ट इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः। **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. द्वि.वि. ए.व.। नपुं. द्वि.व, ब.व.।
96. अदेशकाले (17-22) – देशश्च कालश्च तयोः समाहारः देशकालम्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। न देशकालम् अदेशकालम्, **नञ्** (पा.सू 2-2-6) इति समासः, तस्मिन्। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। देश इत्यत्र दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इत्यनेन अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण उपधागुणः। काल इत्यत्र कल्-धातोः (कल शब्दसङ्ख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञि निष्पन्नम्। **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। अथवा ण्यन्तात्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. प्र.वि. द्वि.व.।

97. अद्भुतम् (11-20, 18-74, 76) – अद्भुत इत्यत्र **अदि भुवो डुतच्** (उणा. 5-1) इति उणादिसूत्रेण अदि उपपदे भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) डुतच्-प्रत्ययः, अद्भुत इति, डित्त्वसामर्थात् टेः लोपः। अद् इति आश्चर्यार्थम् अव्ययम्। अव्ययम्।

98. अद्य (4-3, 11-7, 16-13) – अस्मिन् अहनि, **सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्यु-रन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः** (पा.सू. 5-3-22) इति सूत्रेण अद्य इति निपात्यते। अव्ययम्।

99. अद्रोहः (16-3) – न द्रोहः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। द्रोह इत्यत्र द्रुह्-धातोः (द्रुह जिघांसायाम्, दिवादिः, सि.कौ. - धा.सं. 1197) **भावे** (पा.सू. 3-3-18) घञ्-प्रत्ययः। पुं. प्र.वि, ए.व.।

100. अद्वेष्टा (12-13) – न द्वेष्टा, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। द्वेष्टृ इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः। पुं. प्र.वि, ए.व.।

101. अधमाम् (16-20) – अव्-धातोः (अवँ रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अवद्यावमाधमार्वरेफाः** (उणा. 5-54) इति सूत्रेण अम-प्रत्ययः, वस्य धादेशः, अधम इत्यस्मात् **अजाद्यतष्टाप्** (पा.सू. 4-1-1) इति टाप्। स्त्री. द्वि.वि, ए.व.।

102. अधर्मस्य (4-7) – न धर्मः अधर्मः तस्य, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि, ए.व.।

103. अधर्मम् (18-31, 32) – न धर्मः अधर्मः तम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

104. अधर्मः (1-40) – न धर्मः अधर्मः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

105. अधर्माभिभवात् (1-41) – अधर्मस्य अभिभवः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अधर्म इत्यत्र **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अभिभव इत्यत्र अभिपूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पं.वि. ए.व.।

106. अधः (14-18, 15-2) – **पूर्वाधरावराणामसि पुरधवश्चैषाम्** (पा.सू. 5-3-39) इति अधरशब्दात् असि-प्रत्ययः अधरस्य अधस् इति आदेशः च। अधर इत्यत्र नञ् इति उपपदे धृ-धातोः (धृङ् अनवस्थाने, तुदादिः, सि.कौ. - धा.सं. 1412) **पुंसि संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

107. अधःशाखम् (15-1) – अधः शाखाः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अधः इत्यत्र **पूर्वाधरावराणामसि पुरधवश्चैषाम्** (पा.सू. 5-3-39) इति अधर-शब्दात् असिप्रत्ययः अधरस्य अधस् इति आदेशः च, अधर इत्यत्र नञ् इति उपपदे धृ-धातोः (धृङ् अनवस्थाने, तुदादिः, सि.कौ. - धा.सं. 1412) **पुंसि संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। शाखा इत्यत्र शाख्-धातोः (शाखृ व्याप्तौ, भ्वादिः,

सि.कौ. - धा.सं. 126) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। पुं. द्वि.वि. ए.व.।

108. अधिकतरः (12-5) – द्वयोः अतिशयेन अधिकः इति विग्रहे **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57)। अधिक इत्यत्र अधि इत्यस्मात् स्वार्थे **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

109. अधिकम् (6-22) – अधि इत्यस्मात् स्वार्थे **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

110. अधिकः (6-46) – अधि इत्यस्मात् स्वार्थे **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

111. अधिकारः (2-47) – आधिक्यस्य करणम्, अधि-पूर्वकात् कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ए.व.।

112. अधिगच्छति (2-64, 71, 4-39, 5-6, 24, 6-15, 14-19, 18-49) – अधि-पूर्वकात् गम-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) कर्तरि लट्, तस्य तिप्। भ्वादिः अयं धातुः अतः **कर्तरि शप्** (पा.सू. 3-1-68) इति उत्सर्गः शप् कर्तरि सार्वधातुके च परे। शिति **इषुगमियमां छः** (पा.सू. 7-3-77) इति मस्य छकारः, **छे च** (पा.सू. 6-1-73) इति तुक्-आगमः। लट्, प्र.पु, ए.व.।

113. अधिदैवतम् (8-4) – दैवते। **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः। देवता एव दैवतम्, स्वार्थे **प्रज्ञादिभ्यश्च** (पा.सू.5-4-38) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आकारलोपः। देवता इत्यत्र देवशब्दात् **देवात्तल्** (पा.सू. 5-4-27) इति सूत्रेण तल्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

114. अधिदैवम् (8-1) – दैवे। **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्य-थानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः। देवस्य इदम् दैवम्, **तस्येदम्** (पा.सू. 4-3-120) इति अण्। देव इत्यत्र दिव्-धातोः (दिवुँ क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

115. अधिभूतम् (8-1, 4) – भूते। **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः। भूत इत्यत्र भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। अव्ययम्।

116. अधियज्ञः (8-2, 4) – अधिकृतः यज्ञः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्। पुं. प्र.वि. ए.व.।

117. अधिष्ठानम् (3-40, 18-14) – अधिष्ठीयते अत्र इति, अधि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इत्यनेन ल्युट् अधिकरणार्थे, **युवोरनाकौ** (पा.सू.7.1.1) इत्यनेन

अनादेशः, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनय- सेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति सस्य षत्वम्। नपुं. प्र.वि. ए.व.।

118. अधिष्ठाय (4-6, 15-9) – अधि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, तस्य ल्यप् आदेशः **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति सूत्रेण, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति सस्य षत्वम्। अव्ययम्।

119. अध्यक्षेण (9-10) – अधिगतः अक्षम्, **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** इति समासः। अध्यक्ष इत्यत्र अधि-पूर्वकात् अक्ष्-धातोः (अक्षू व्याप्तौ, भ्वादिः, सि.कौ. - धा.सं. 654) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. तृ.वि. ए.व.।

120. अध्यात्मचेतसा (3-30) – अध्यात्मं चेतः, तेन अध्यात्मचेतसा, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। आत्मनि इति अध्यात्मम्, **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति सूत्रेण अधि आत्मन् इत्यनयोः अव्ययीभाव-समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। चेतः इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. तृ.वि. ए.व.।

121. अध्यात्मज्ञाननित्यत्वम् (13-12) – अध्यात्मं ज्ञानम्, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। अध्यात्मज्ञानस्य नित्यत्वम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अध्यात्मम् अर्थात् आत्मनि, **अव्ययम् विभक्तिसमीपसमृद्धिव्यृद्ध्यर्ताभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। ज्ञानम् इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्। **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नित्य इत्यत्र नि इत्यस्मात् **अव्ययात् त्यप्** (पा.सू. 4-2-104) इति त्यप्। नित्यत्व इत्यत्र नित्य-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, नित्यत्वम्। नपुं. प्र.वि. ए.व.।

122. अध्यात्मनित्याः (15-5) – अध्यात्मं नित्याः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। अध्यात्मम् अर्थात् आत्मनि, **अव्ययम् विभक्तिसमीपसमृद्धिव्यृद्ध्यर्ताभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथा-नुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। नित्य इत्यत्र नि इत्यस्मात् **अव्ययात् त्यप्** (पा.सू. 4-2-104) इति त्यप्। पुं. प्र.वि. ब.व.।

123. अध्यात्मविद्या (10-32) – अध्यात्मसम्बद्धा विद्या, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्य उपसंख्यानम्** (वा. 1310) इति कर्मधारयः। अध्यात्मम् अर्थात् आत्मनि, **अव्ययम् विभक्तिसमीपसमृद्धिव्यृद्ध्यर्ताभावात्ययासम्प्रति-शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। विद्या इत्यत्र विद्-धातोः (विद ज्ञाने,

अदादिः, सि.कौ. - धा.सं. 1064) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

124. अध्यात्मसंज्ञितम् (11-1) – अध्यात्म इति संज्ञा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, अध्यात्मसंज्ञा अस्य जाता इति विग्रहे **तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति सूत्रेण इतच्-प्रत्ययः। अध्यात्मम् अर्थात् आत्मनि, **अव्ययम् विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. प्र.वि. ए.व.।

125. अध्यात्मम् (7-29, 8-2, 3) – आत्मनि, **अव्ययम् विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अनश्च** (पा.सू. 5-4-108) इति समासान्तः टच्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। आत्मा इत्यत्र **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः। अव्ययम्।

126. अध्येष्यते (18-70) – अधिपूर्वकात् इङ्-धातोः (इङ् अध्ययने, अदादिः, सि.कौ. - धा.सं. 1046) (इङ् अध्ययने, अदादिः, सि.कौ. - धा.सं. 1046) लृट्, तस्य च त-आदेशः। अधि इ त, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, अधि इ स्य त, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लृट्, प्र.पु. ए.व.।

127. अध्रुवम् (17-18) – न ध्रुवम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। ध्रुव इत्यत्र ध्रु-धातोः (ध्रु स्थैर्ये, भ्वादिः, सि.कौ. - धा.सं. 943) (ध्रु स्थैर्ये, भ्वादिः, सि.कौ. - धा.सं. 943) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः उवङ्-आदेशः। नपुं. प्र.वि. ए.व.।

128. अनघ (3-3, 14-6, 15-20) – अविद्यमानम् अघं यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। अघ इत्यत्र अघ्-धातोः (अघि गत्याक्षेपे, भ्वादिः, सि.कौ. - धा.सं. 109) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, यद्यपि धातोः अत्र इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमा भाव्यं तथापि आगमशास्त्रस्य अनित्यत्वात् लक्ष्यानुरोधेन नुम् नात्र भवति। पुं. सम्बो.वि. ए.व.।

129. अनन्त (11-37) – अविद्यमानः अन्तः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। पुं. सम्बो.वि. ए.व.।

130. अनन्तबाहुम् (11-19) – अनन्ताः बाहवः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य सः इत्यर्थे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। बाहु इत्यत्र **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति बाध् (बाधृ लोडने, भ्वादिः, सि.कौ. - धा.सं. 5) इत्यस्मात् कु-प्रत्ययः धस्य हः च। पुं. द्वि.वि. ए.व.।

131. अनन्तरम् (12-12) – नास्ति अन्तरं यस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। अन्तर इत्यत्र अन्त-पूर्वकात् रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। नपुं. प्र.वि. ए.व.।

132. अनन्तरूप (11-38) – अनन्तानि रूपाणि यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः । अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः । पुं. सम्बो.वि. ए.व.।

133. अनन्तरूपम् (11-16) – अनन्तानि रूपाणि यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः । अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः । पुं. द्वि.वि. ए.व.।

134. अनन्तविजयम् (1-16) – अनन्तः विजयः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः । अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। विजय इत्यत्र वि-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

135. अनन्तवीर्यः (11-40) – अनन्तं वीर्यं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः । अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। वीर्य इत्यत्र वीर-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इत यत्, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

136. अनन्तवीर्यम् (11-19) – अनन्तं वीर्यं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनन्त इत्यत्र अविद्यमानः अन्तः यस्य इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः । अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58)

इति धातोः नुम्-आगमः। वीर्य इत्यत्र वीर-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इत यत्, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

137. अनन्तम् (11-11, 47) – अविद्यमानः अन्तः यस्य तम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। नपुं. द्वि.वि. ए.व.।

138. अनन्तः (10-29) – अविद्यमानः अन्तः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। पुं. प्र.वि. ए.व.।

139. अनन्ताः (2-41) – अविद्यमानः अन्तः येषां ते, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

140. अनन्यचेताः (8-14) – अन्यस्मिन् चेतः यस्य सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः अन्यचेताः, न अन्यचेताः, अनन्यचेताः। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। अन्य इत्यत्र अन्-धातोः (अन् प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने बन्धने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

141. अनन्यभाक् (9-30) – न अन्यभाक्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अन्यभाक् इत्यत्र अन्यान् भजते इति अन्यभाक्, **भजो ण्विः** (पा.सू. 3-2-62) इति अन्योपपदात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) ण्वि-प्रत्ययः, ण्वेः सर्वलोपः - **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **चुटू** (पा.सू. 1-3-7) इति णकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकयोः लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। पुं. प्र.वि. ए.व.।

142. अनन्यमनसः (9-13) – अन्यस्मिन् मनः येषां ते, अन्यमनसः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। न अन्यमनसः, अनन्यमनसः **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः , **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. प्र.वि. ब.व.।

143. अनन्यया (8-22, 11-54) – न अन्या, तया। **नञ्** (पा.सू 2-2-6) इति समासः। अन्या इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्, अन्यशब्दात् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

144. अनन्येन (12-6) – न अन्यः, अनन्यः, तेन। **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। पुं. तृ.वि. ए.व.।

145. अनन्ययोगेन (13-10) – न अन्ययोगः अनन्ययोगः, तेन। **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अन्ययोग इत्यत्र अन्यः योगः, अन्ययोगः। **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ए.व.।

146. अनन्याः (9-22) – न अन्याः अनन्याः। **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्। पुं. प्र.वि. ब.व.।

147. अनपेक्षः (12-16) – अविद्यमाना अपेक्षा यस्य **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। अपेक्षा इत्यत्र अप-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अङ्। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। पुं. प्र.वि. ए.व.।

148. अनपेक्ष्य (18-25) – न अपेक्ष्य, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अपेक्ष्य इत्यत्र अपपूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वास्थाने ल्यप्। अव्ययम्।

149. अनभिष्वङ्गः (13-9) – न अभिष्वङ्गः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अभिष्वङ्ग इत्यत्र अभिपूर्वकात् ष्वञ्ज्-धातोः (ष्वञ्ज परिष्वङ्गे, भ्वादिः, सि.कौ. - धा.सं. 976) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति सूत्रेण सस्य षत्वम्। पुं. प्र.वि. ए.व.।

150. अनभधाय, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अभिसंधाय इत्यत्र अभि-सम्पूर्वकात् धाधातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, तस्य च **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

151. अनभिस्नेहः (2-57) – न अभिस्नेहः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अभिस्नेह इत्यत्र अभिपूर्वकात् ष्णिह्-धातोः (ष्णिह प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1200) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

152. अनयोः (2-16) – इदम्-शब्दात् ओस्-प्रत्ययः, **अनाप्यकः** (पा.सू. 7-1-112) इति इदः अनादेशः। **ओसि च** (पा.सू. 7-3-104) इति एत्वम्। **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. द्वि.व.।

153. अनलः (7-4) – अन् (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) इत्यस्मात्, **वृषादिभ्यश्चित्** (उणा. 1-106) इति उणादिसूत्रेण कल-प्रत्ययः, सः चित्। पुं. प्र.वि. ए.व.।

154. अनलेन (3-39) – अन् (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) इत्यस्मात्, **वृषादिभ्यश्चित्** (उणा. 1-106) इति उणादिसूत्रेण कल-प्रत्ययः, सः चित्। पुं. तृ.वि. ए.व.।

155. अनवलोकयन् (6-13) – न अवलोकयन्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अवलोकयन् इत्यत्र अव-पूर्वकात् लोकृ-धातोः (लोकृ भाषायाम्, चुरादिः, सि.कौ. - धा.सं. 1777) चुरादित्वात् **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच् स्वार्थे, तस्मात् लट्, तस्य **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-प्रत्ययः। पुं. प्र.वि. ए.व.।

156. अनवाप्तम् (3-22) – न अवाप्तम् , **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अवाप्त इत्यत्र अवपूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **निष्ठा** (पा.सू. 2-2-36) इत्यनेन क्त-प्रत्ययः। नपुं. प्र.वि. ए.व.।

157. अनश्नतः (6-16) – न अश्नतः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अश्नतः इत्यत्र अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) इत्यस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः। पुं. ष.वि. ए.व.।

158. अनसूयन्तः (3-31) – न असूयन्तः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। असूयन्तः इत्यत्र असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक्, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः। पुं. प्र.वि. ब.व.।

159. अनसूयवे (9-1) – न असूयुः, अनसूयुः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। असूयु इत्यत्र कण्ड्वादेः असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **यक्**, तस्मात् **उन्** इति वाचस्पत्यम्। पुं. च.वि. ए.व.।

160. अनसूयः (18-71) – अविद्यमाना असूया यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। असूया इत्यत्र असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक्, **अ प्रत्ययात्** (पा.सू. 3-3-102) इति अप्रत्ययः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

161. अनहङ्कारः (13-8) – न अहङ्कारः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। कार इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्। अहम् इत्यस्य कारः अहङ्कारः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पुं. प्र.वि. ए.व.।

162. अनहंवादी (18-26) – न अहंवादी। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। अहम्पूर्वकात् वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

163. अनात्मनः (6-6) – अविद्यमानः आत्मा यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण अत्-इति धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः। पुं. ष.वि. ए.व.।

164. अनादित्वात् (13-31) – अविद्यमानः आदिः यस्य सः अनादिः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। अनादेः भावः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। आदि इत्यत्र आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः। **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. पं.वि. ए.व.।

165. अनादिमत् (13-12) – न आदिमत् अनादिमत्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। आदिमत् इत्यत्र आदिरस्ति अस्य इति आदिमत्, **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इत्यनेन आदि-शब्दात् मतुप्-प्रत्ययः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः। **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. प्र.वि. ए.व.।

166. अनादिमध्यान्तम् (11-19) – आदिश्च मध्यश्च अन्तश्च आदिमध्यान्ताः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। अविद्यमानाः आदिमध्यान्ताः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। मध्य इत्यत्र मध्यशब्दात् **अ साम्प्रतिके** (पा.सू. 4-3-9) इति सूत्रेण अप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मध्य इति मन् धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययान्तः नकारस्य धकारादेशत्वेन निपात्यते। अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अथवा **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. द्वि.वि. ए.व.।

167. अनादिम् (10-3) – अविद्यमानः आदिः यस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ए.व.।

168. अनादी (13-19) – अविद्यामानः आदिः ययोः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. द्वि.व.।

169. अनामयम् (2-51, 14-6) – आम इत्यत्र अम्-धातोः (अम रोगे, चुरादिः, सि.कौ. - धा.सं. 1721) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, आमय इत्यत्र आमं यान्ति अनेन इत्यत्र आम-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इत्यनेन ड-प्रत्ययः। अनामय इत्यत्र आमयस्य अभावः इत्यर्थे **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव- पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति नञा अव्ययीभावः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। नपुं. द्वि.वि. ए.व.।

170. अनारम्भात् (3-4) – न आरम्भः अनारम्भः, तस्मात् अनारम्भात्। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। आरम्भ इत्यत्र आङ्पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **रधिजभोरचि** (7-1-61) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः मकारः। पुं. पं.वि. ए.व.।

171. अनार्यजुष्टम् (2-2) – न आर्याः अनार्याः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अनार्यैः जुष्टम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः।

अथवा आर्यैः जुष्टम् **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। न आर्यजुष्टम् **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। आर्य इत्यत्र ऋधातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्। जुष्ट इत्यत्र जुष्-धातोः (जुषी प्रीतिसेवनयोः, तुदादिः, सि.कौ. - धा.सं. 1288) कर्मणि क्त-प्रत्ययः **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

172. अनावृत्तिम् (8-23, 26) – न आवृत्तिः अनावृत्तिः। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। आवृत्ति इत्यत्र आङ्पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्। स्त्री. द्वि.वि. ए.व.।

173. अनाशिनः (2-18) – नाशः अस्ति अस्य इति नाशी, **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। न नाशी अनाशी, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। तस्य अनाशिनः। नाश इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1154) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. ष.वि. ए.व.।

174. अनाश्रितः (6-1) – न आश्रितः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। आश्रित इत्यत्र आङ्पूर्वकात् श्रिधातोः (श्रिञ् सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 897) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः अभावः। पुं. प्र.वि. ए.व.।

175. अनिकेतः (12-19) – अविद्यमानः निकेतः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। निकेत इत्यत्र निकेतति अस्मिन् इति अर्थे नि-पूर्वकात् कित्-धातोः (कित निवासे रोगापनयने व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च, भ्वादिः, सि.कौ. - धा.सं. 993) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ् आधारे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

176. अनिच्छन् (3-36) – न इच्छन्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। इच्छन् इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) **वर्तमाने लट्** (पा.सू. 3-2-123) इति लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-प्रत्ययः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, तस्य शित्त्वात् **इषुगमियमां छः** (पा.सू. 7-3-77) इति षस्य छः। पुं. प्र.वि. ए.व.।

177. अनित्यम् (9-33) – न नित्यम् अनित्यम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे इति वक्तव्यम्** (वा. 4-2-104) इति वार्तिकेन नि इत्यस्मात् त्यप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

178. अनित्याः (2-14) – न नित्याः अनित्याः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे इति वक्तव्यम्** (वा. 4-2-104) इति वार्तिकेन नि इत्यस्मात् त्यप्-प्रत्ययः। पुं. प्र.वि. ब.व.।

179. अनिर्देश्यम् (12-3) – न निर्देश्यम् अनिर्देश्यम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। निर्देश्य इत्यत्र निर्-पूर्वकात् दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत् निर्देश्यम्। नपुं. द्वि.वि. ए.व.।

180. अनिष्टम् (18-12) – न इष्टम् अनिष्टम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। इष्ट इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः। **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम् नपुं. प्र.वि. ए.व.।

181. अनीश्वरम् (16-8) – अविद्यमानः ईश्वरः यस्मात् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। ईश्वर इत्यत्र **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) वरच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

182. अनुकम्पार्थम् (10-11) – अनुकम्पायै इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। अनुकम्पा इत्यत्र अनु-पूर्वकात् कम्प्-धातोः (कपि चलने, भ्वादिः, सि.कौ. - धा.सं. 375) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, तस्मात् स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। नपुं. प्र.वि. ए.व.।

183. अनुचिन्तयन् (8-8) – अनुपूर्वकात् चित्-धातोः (चित् सञ्चेतने, चुरादिः, सि.कौ. - धा.सं. 1674) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) नुमागमे चिन्त् इति जातः, ततः **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिचि चिन्ति इति, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः। पुं. प्र.वि. ए.व.।

184. अनुतिष्ठन्ति (3-31, 32) – अनुपूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, अनु स्था लट्, लटः झि-आदेशः, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। कर्त्रर्थे **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्-प्रत्ययः, तस्य च शित्त्वात् **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति स्थाधातोः तिष्ठ-आदेशः। लट्, प्र.पु. ब.व.।

185. अनुत्तमम् (7-24) – अविद्यमानः उत्तमः यस्मात् तम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्रपदलोपः** (वा.1361) इति समासः। उत्तम इत्यत्र उद्-पूर्वकात् तम्-धातोः (तमु काङ्क्ष्यायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञा वा निष्पन्नम्। पुं. द्वि.वि. ए.व.।

186. अनुत्तमाम् (7-18) – अविद्यमाना उत्तमा यस्याः ताम् **नञोऽस्त्यर्थानां वाच्यो वा चोत्रपदलोपः** (वा.1361) इति समासः। उत्तमा इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्ष्यायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ् वा। स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

187. अनुद्विग्नमनाः (2-56) – न उद्विग्नम् अनुद्विग्नम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अनुद्विग्नं मनः यस्य सः अनुद्विग्नमनाः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उद्विग्न इत्यत्र उद्-पूर्वकात् विज्-धातोः (ओविजी भयचलनयोः, तुदादिः, सि.कौ. - धा.सं. 1289) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति इडागमनिषेधः. **ओदितश्च** इति निष्ठातकास्य नकारः। मनः इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. प्र.वि. ए.व.।

188. अनुद्वेगकरम् (17-15) – न उद्वेगकरम् अनुद्वेगकरम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। उद्वेगकर इत्यत्र उद्वेगं करोति इति विग्रहे उद्वेग इति उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञो हेतुताच्छील्यानुलोम्येषु** (पा.सू. 3-2-20) इति सूत्रेण ट-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। उद्वेग इत्यत्र उद्-पूर्वकात् विज्-धातोः (ओविजी भयचलनयोः, तुदादिः, सि.कौ. - धा.सं. 1289) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः इकः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। नपुं. प्र.वि. ए.व.।

189. अनुपकारिणे (17-20) – न उपकारिन् अनुपकारिन्, तस्मै, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। उपकारिन् इत्यत्र **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति उपपूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) णिनि-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. च.वि. ए.व.।

190. अनुपश्यति (13-30, 14-19) – अनुपूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, अनु दृश् लट्, लटः तिबादेशः। कर्त्रर्थे शप् इति विकरणप्रत्ययः **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण। **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति दृशधातोः पश्य-आदेशः। लट्, प्र.पु. ए.व.।

191. अनुपश्यन्ति (15-10) – अनुपूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, । अनु दृश् लट्, लटः झि-आदेशः। **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। कर्त्रर्थे शप् इति विकरणप्रत्ययः **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण। **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति दृशधातोः पश्य-आदेशः। लट्, प्र.पु. ब.व.।

192. अनुपश्यामि (1-31) – अनुपूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, । अनु दृश् लट्, लटः मिबादेशः। कर्त्रर्थे शप् इति विकरणप्रत्ययः **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण। **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति दृशधातोः पश्य-आदेशः। लट्, उ.पु. ए.व.।

193. अनुप्रपन्नाः (9-21) – अनुप्र-इति-उपसर्गद्वयपूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवस- जनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति दकारस्य तकारस्य च नकारः। पुं. प्र.वि. ब.व.।

194. अनुबन्धम् (18-25) – अनु-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **अकर्तरि च कारके सञ्ज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। पुं. द्वि.वि. ए.व.।

195. अनुबन्धे (18-39) – अनु-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **अकर्तरि च कारके सञ्ज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। पुं. स.वि. ए.व.।

196. अनुमन्ता (13-22) – अनु-पूर्वकात् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्। पुं. प्र.वि. ए.व.।

197. अनुरज्यते (11-36) – अनु-पूर्वकात् रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) लट्, लटः तिप्, दिवादित्वात् **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नकारस्य लोपः, अनुरज्यते। लट्, प्र.पु. ए.व.।

198. अनुवर्तते (3-21) – अनुपूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण शप्। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः इकः गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति सूत्रेण टेः एत्वम्। लट्, प्र.पु. ए.व.।

199. अनुवर्तन्ते (3-23, 4-11) – अनुपूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्। लटः झ-आदेशः। **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण शप्। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः इकः गुणः। **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति सूत्रेण टेः एत्वम्। लट्, प्र.पु. ब.व.।

200. अनुवर्तयति (3-16) – अनुपूर्वकात् वृत्-धातोः (वृतु भाषायाम्, चुरादिः, सि.कौ. - धा.सं. 1782) **सत्यापपाशरूपवीणातूलश्लोकसेनालोम- त्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः वर्ति इति णिजन्तः सम्पन्नः, तस्मात् लट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शपि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

201. अनुविधीयते (2-67) – अनु-वि-इत्युपसर्गद्वयपूर्वकात् धाधातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) कर्मणि लट्, लटः त-आदेशः, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति सूत्रेण यकि आकारस्य ईकारः। कर्मणि लट्, प्र.पु. ए.व.।

202. अनुशासितारम् (8-9) – अनुपूर्वकात् शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति कर्तरि तृच् – अनुशासितृ। पुं. द्वि.वि. ए.व.।

203. अनुशुश्रुम (1-44) – अनुपूर्वकात् श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **परोक्षे लिट्** (पा.सू. 3-2-115) इति लिट्, लिटः स्थाने मिप्, मिपः **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति सूत्रेण म-आदेशः। **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिः हल् शिष्यते। लिट्, उ.पु. ब.व.।

204. अनुशोचन्ति (2-11) – अनुपूर्वकात् शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 183) लट्, लटः स्थाने झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। लट्, प्र.पु. ब.व.।

205. अनुशोचितुम् (2-25) – अनुपूर्वकात् शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 183) **तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्** (पा.सू. 3-3-10) इति सूत्रेण तुमुन्। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। अव्ययम्।

206. अनुषज्जते (6-4, 18-10) – अनुपूर्वकात् षस्ज्-धातोः (षस्ज गतौ, भ्वादिः, सि.कौ. - धा.सं. 202) लट्, **धात्वादेः षः सः** (पा.सू. 6-1-64) इति धातोः षकारस्य सकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्, **सज्ज** इति सम्पन्नम्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्। लट्, प्र.पु. ए.व.।

207. अनुसन्ततानि (15-2) – अनुपूर्वकः सन्ततशब्दः, सम्-पूर्वकात् तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति नलोपः, **समो हिततयोर्वा लोपः** इति मस्य विकल्पेन लोपः। नपुं. प्र.वि. ब.व.।

208. अनुस्मर (8-7) – अनुपूर्वकात् स्मृधातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) लोट् । लोटः स्थाने सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हिः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। **अतो हेः** (पा.सू. 6-4-105) इति हेः लोपः। लोट्, म.पु. ए.व.।

209. अनुस्मरन् (8-13) – अनुपूर्वकात् स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

210. अनुस्मरेत् (8-9) – अनुपूर्वकात् स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) लिङ्। लिङः स्थाने तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति या-स्थाने इय्-आदेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **इतश्च** (पा.सू. 3-4-100) इति अन्त्यस्य इकारस्य लोपः। वि.लि, प्र.पु. ए.व.।

211. अनेकचित्तविभ्रान्ताः (16-16) – न एकानि अनेकानि, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अनेकानि चित्तानि, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, अनेकचित्तैः विभ्रान्ताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति इटः निषेधः। विभ्रान्त इत्यत्र

वि-पूर्वकात् भ्रम्-धातोः (भ्रमु चलने, भ्वादिः, सि.कौ. - धा.सं. 850) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) **इति** क्त-प्रत्ययः। **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति उपधायाः दीर्घः। पुं. प्र.वि. ब.व.।

212. अनेकजन्मसंसिद्धः (6-45) – न एकानि अनेकानि, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। अनेकानि जन्मानि, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अनेकजन्मभिः संसिद्धः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) मनिन्-प्रत्ययः **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति सूत्रेण। संसिद्ध इत्यत्र सम्-पूर्वकात् सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) कर्तरि क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः॥ पुं. प्र.वि. ए.व.।

213. अनेकदिव्याभरणम् (11-10) – न एकानि अनेकानि, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। दिव्यानि आभरणानि **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अनेकानि दिव्याभरणानि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। दिव्य इत्यत्र दिवि भवः इत्यर्थे दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इत्यनेन यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः। आभरण इत्यत्र आ-पूर्वकात् भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति नस्य णत्वम्। नपुं. द्वि.वि. ए.व.।

214. अनेकधा (11-13) – न एकः अनेकः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। **सङ्ख्याया विधार्थे धा** (पा.सू. 5-4-42) इति धाप्रत्ययः अनेकधा। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

215. अनेकबाहूदरवक्त्रनेत्रम् (11-16) – बाहू च उदरञ्च वक्त्रञ्च नेत्रे च एतेषां समाहारः **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (पा.सू. 2-4-2) इति एकवद्भावः, बाहूदरवक्त्रनेत्रम्, अनेकं बाहूदरवक्त्रनेत्रं यस्य सः अनेकबाहूदरवक्त्रनेत्रः, तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। बाहु इत्यत्र **अर्जिदृशिकम्यमिपंसिबाधामृजिपशि तुक् धुक् दीर्घहकाराश्च** (उणा.सू. 2-27) इति बाध् (बाधृ लोडने, रोटने भ्वादिः, सि.कौ. - धा.सं. 5) इत्यस्मात् कुप्रत्ययः धस्य हः च। उदर इत्यत्र उद्-पूर्वकात् ऋधातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। वक्त्र इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा.सू. 4-166) इति त्र-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। नेत्रम् इत्यत्र नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण ष्ट्रन् इति प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

216. अनेकवक्त्रनयनम् (11-10) – वक्त्रञ्च नयने च वक्त्रनयनम्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वसमासः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** इति एकवद्भावः। अनेकं वक्त्रनयनं यस्य सः अनेकवक्त्रनयनः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति

समासः। अनेक इत्यत्र न एकम् अनेकम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। वक्त्र इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा.सू. 4-166) इति त्र-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। नयन इत्यत्र नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. द्वि.वि. ए.व.।

217. अनेकवर्णम् (11-24) – अनेकानि वर्णानि यस्य तत्, अनेकवर्णम्। **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनेक इत्यत्र न एकम् अनेकम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **कृवृजॄषिद्रुगुपन्यनिस्वपिभ्यो नित्** इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति नस्य णत्वम्। पुं. द्वि.वि. ए.व.।

218. अनेकाद्भुतदर्शनम् (11-10) – अनेकानि अद्भुतदर्शनानि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अनेक इत्यत्र न एकम् अनेकम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अद्भुत इत्यत्र **अदि भुवो डुतच्** (उणा. 5-1) इति उणादिसूत्रेण अदि उपपदे भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) डुतच्-प्रत्ययः, अद्भुत इति, डित्त्वसामर्थात् टेः लोपः। दर्शन इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्। नपुं. द्वि.वि. ए.व.।

219. अनेन (3-10, 11, 9-10, 11-8) – इदम् टा, **त्यदादीनामः** इति अत्वम्। **अनाप्यकः** (पा.सू. 7-1-112) इति अनादेशः, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति टा-स्थाने इनादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

220. अन्तकाले (2-72, 8-5) – अन्तस्य कालः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। काल इत्यत्र कल्-धातोः (कल शब्दसङ्ख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। अथवा ण्यन्तात् कालि इति धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. ए.व.।

221. अन्तगतम् (7-28) – अन्तं गतम्, **विशेषणं विश्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः। नपुं. प्र.वि. ए.व.।

222. अन्तरम् (11-20, 13-34) – अन्तं राति, इति विग्रहे अन्त-उपपदे रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः। अन्त

इत्यत्र अत्-इति धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. प्र.वि. ए.व.।

223. अन्तरात्मना (6-47) – अन्तरात्मा, अन्तःस्थितः आत्मा, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) अत्-इति (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) धातोः मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. तृ.वि. ए.व.।

224. अन्तरारामः (5-24) – अन्तः आरामः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। आराम इत्यत्र आङ्पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 853) **हलश्च** इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

225. अन्तरे (5-27) – अन्तर् इति उपपदे इण् धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **अन्येभ्योऽपि दृश्यन्ते** (पा.सू. 3-2-75) इति विच्, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। नपुं. स.वि. ए.व.।

226. अन्तर्ज्योतिः (5-24) – अन्तः ज्योतिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। ज्योतिस् इत्यत्र द्युत्-धातोः (द्युत दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 741) **द्युतेरिसिन्नादेश्च जः** (उणा. सू. 2-110) इति इसिन्, जकारादेशश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

227. अन्तवत् (7-23) – अन्तः अस्य अस्ति इति विग्रहे **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94), **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वः। अन्त इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. प्र.वि. ए.व.।

228. अन्तवन्तः (2-18) – अन्तः एषाम् अस्ति इति विग्रहे अन्त इत्यस्मात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वः। अन्त इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. प्र.वि. ब.व.।

229. अन्तम् (11-16) – अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. द्वि.वि. ए.व.।

230. अन्तः (2-16, 10-19,20,32,40, 13-15, 15-3) – अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. प्र.वि. ए.व.।

231. अन्तःशरीरस्थम् (17-6) – अन्तः शरीरम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति सूत्रेण समासः। अन्तःशरीरस्थ इत्यत्र अन्तःशरीरे तिष्ठति इति विग्रहे अन्तर् इति उपपदे स्था धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। शरीर इत्यत्र **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) ईरन्-प्रत्ययः। **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

232. अन्तःसुखः (5-24) – अन्तः सुखं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

233. अन्तःस्थानि (8-22) – अन्तः तिष्ठन्तीति अन्तःस्थानि, अन्तर् इति उपपदे स्था धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। नपुं. प्र.वि. ब.व.।

234. अन्तिके (13-15) – अन्तः अस्यास्ति, **अत इनिठनौ** (पा.सू. 5-2-115) इति ठन्, **ठस्येकः** (पा.सू. 7-3-50) इति इकादेशः। अन्त इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. स.वि. ए.व.।

235. अन्ते (7-19, 8-6) – अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्यये। **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. स.वि. ए.व.।

236. अन्नम् (15-14) – अद्यते स्म, अद्-धातोः (अद भक्षणे, अदादिः, सि.कौ. - धा.सं. 1011) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति दकारस्य तकारस्य च नत्वम्। नपुं. द्वि.वि. ए.व.।

237. अन्नसम्भवः (3-14) – अन्नस्य सम्भवः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अन्न इत्यत्र अद्यते स्म इति विग्रहे अद् धातोः (अद भक्षणे, अदादिः, सि.कौ. - धा.सं. 1011) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठा तो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति दकारस्य तकारस्य च नत्वम्। सम्भव इत्यत्र सम्पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः,

सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

238. अन्नात् (3-14) – अद्यते स्म, अद्-धातोः (अद भक्षणे, अदादिः, सि.कौ. - धा.सं. 1011) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति दकारस्य तकारस्य च नत्वम्। नपुं. पं.वि. ए.व.।

239. अन्यत् (2-31,42, 7-2,7, 11-7) – अन्य सु, **अद्ड्डतरादिभ्यः पञ्चभ्यः** (पा.सू. 7-1-25) इति सु-स्थाने अद्ड्-आदेशः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। अन्यत् इति अव्ययमपि वर्तते। नपुं. प्र.वि. ए.व.।

240. अन्यत्र (3-9) – अन्यशब्दात्, **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यक्। अव्ययम्।

241. अन्यथा (13-11) – अन्यशब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। अव्ययम्।

242. अन्यदेवताभक्ताः (9-23) – अन्याः देवताः अन्यदेवताः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। तासां भक्ताः **षष्ठी** (पा.सू. 2-2-8) इति समासः, अन्यदेवताभक्ताः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः देवशब्दात् **देवात्तल्** (पा.सू. 5-4-27) इति सूत्रेण तल्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, देवता। भक्त इत्यत्र भक्तिरस्य अस्ति इति विग्रहे **अर्शआदिभ्य अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः, भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। पुं. प्र.वि. ब.व.।

243. अन्यदेवताः (7-20) – अन्याः देवताः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः ततः देवशब्दात् **देवात्तल्** (पा.सू. 5-4-27) इति सूत्रेण तल्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

244. अन्यया (8-26) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। अन्यशब्दात् स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

245. अन्यम् (14-19) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

246. अन्यः (2-29,29, 4-31, 8-20, 11-43, 15-17, 16-15, 18-69) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। पुं. प्र.वि. ए.व.।

247. अन्यानि (2-22) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

248. अन्यान् (11-34) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण इति यक्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

249. अन्याम् (7-5) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यक्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

250. अन्यायेन (16-12) – न न्यायः, **नञ्** (पा.सू. 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। न्याय इत्यत्र **परिन्योर्नीणोर्द्यूताभ्रेषयोः** (पा.सू. 3-3-37) इति सूत्रेण नि-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आयादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. तृ.वि. ए.व.।

251. अन्ये (1-9, 4-26,26, 9-15, 13-24,25, 17-4) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यक्-प्रत्ययः पुं. प्र.वि. ब.व.।

252. अन्येभ्यः (13-25) – अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यक्-प्रत्ययः पुं. पं.वि. ब.व.।

253. अन्वशोचः (2-11) – अनु-पूर्वकात् शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 183) लङ्, लङः सिप्, शुच् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, शुच् शप् सिप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः अशोचः। लङ्, म.पु. ए.व.।

254. अन्विच्छ (2-49) – अनु-पूर्वकात् इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लोट्। लोटः सिप्। अनु इष् सिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **इषुगमियमां छः** (पा.सू. 7-3-77) इति षस्य छादेशः, **छे च** (पा.सू. 6-1-73) इति तुगागमश्च, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्, म.पु. ए.व.।

255. अन्विताः (9-23, 17-1) – अनु-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ब.व.।

256. अपनुद्यात् (2-8) – अपपूर्वकात् नुद्-धातोः (णुद प्रेरणे, अदादिः, सि.कौ. - धा.सं. 1282) आशीर्लिङ्। नुद् तिप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः अपनुद्यात्। आ.लिङ्, प्र.पु. ए.व.।

257. अपरम् (4-4, 6-22) – न परः अपरः, तम्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

258. अपरस्परसम्भूतम् (16-8) – अपरस्पराभ्यां सम्भूतम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। अपरः च परः च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वसमासः, **अपरस्पराः क्रियासातत्ये** (पा.सू. 6-1-144) इति सुट्। अपर इत्यत्र न परः अपरः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सम्भूत इत्यत्र सम्पूर्वकात् भू-धातोः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

259. अपरा (7-5) – न परा अपरा **नञ्** (पा.सू. 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। परा इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

260. अपराजितः (1-17) – न पराजितः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। परा-पूर्वकात् जिधातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू.

3-4-72) इति सूत्रेण क्तप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

261. अपराणि (2-22) – न पराणि अपराणि, **नञ्** (पा.सू. 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

262. अपरान् (16-14) – न परान् अपरान्, **नञ्** (पा.सू. 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

263. अपरिग्रहः (6-10) – न परिग्रहः अपरिग्रहः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। परिग्रह इत्यत्र परि-पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

264. अपरिमेयान् (16-11) – न परिमेयान् इति **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। परिमेय इत्यत्र परि-पूर्वकात् मा-धातोः (माङ् माने, दिवादिः, सि.कौ. - धा.सं. 1142) **अचो यत्** (पा.सू. 3-1-124) इति सूत्रेण यत्-प्रत्ययः, **ईद्यति** (पा.सू. 6-4-65) इति धातोः आकारस्य ईकारादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

265. अपरिहार्ये (2-27) – न परिहार्यः, तस्मिन्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। परिहार्य इत्यत्र परि-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति सूत्रेण ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. स.वि. ए.व.।

266. अपरे (4-25,25,27,28,29,30, 13-24) – न परे अपरे, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

267. अपर्याप्तम् (1-10) – न पर्याप्तम् **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पर्याप्त इत्यत्र परि-पूर्वकात् आप्-धातोः (आपॢ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति सूत्रेण क्त-प्रत्ययः। नपुं. प्र.वि. ए.व.।

268. अपलायनम् (18-43) – न पलायनम् अपलायनम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पलायन इत्यत्र परा-पूर्वकात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **उपसर्गस्यायतौ** (पा.सू. 8-2-19) इति रस्य लः। नपुं. प्र.वि. ए.व.।

269. अपश्यत् (1-26, 11-13) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लङ्। दृश् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति दृशः पश्य-आदेशः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः अपश्यत्। लङ्, प्र.पु. ए.व.।

270. अपहृतचेतसाम् (2-44) – अपहृतानि चेतांसि येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अपहृत इत्यत्र अप-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **निष्ठा** (पा.सू. 2-2-36) सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। चेतः इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण उपधागुणः। पुं. ष.वि. ब.व.।

271. अपहृतज्ञानाः (7-15) – अपहृतं ज्ञानं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अपहृत इत्यत्र अप-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **निष्ठा** (पा.सू. 2-2-36) सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। ज्ञान इत्यत्र ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ब.व.।

272. अपात्रेभ्यः (17-22) – न पात्रेभ्यः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। अत्र नञ् कुत्सितार्थे। पात्र इत्यत्र पा-धातोः (पा पाने, भ्वादिः, सि.कौ. - धा.सं. 925) **सर्वधातुभ्यः ष्ट्रन्** (उणा.सू. 4-158) इति सूत्रेण ष्ट्रन्। पुं. च.वि. ब.व.।

273. अपानम् (4-29) – अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, णिचि अपानि इत्यस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा अपानिति अनेन इत्यर्थे अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. द्वि.वि. ए.व.।

274. अपाने (4-29) – अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, णिचि अपानि इत्यस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा अपानिति अनेन इत्यर्थे अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. स.वि. ए.व.।

275. अपावृतम् (2-32) – अप-आङ्-पूर्वकात् वृधातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

276. अपि (1-27,35,35,38, 2-5,8,16,26,29,31,34,40,59,60,72, 3-5,8,20,31,33,36, 4-6,6,13,15,16,17,20,22,30,36, 5-4,5,7,9,11, 6-9,22,25,31,44,44,46,47, 7-3,23,30, 8-6, 9-15,23,23,25,29,30,32,32, 10-37,39, 11-2,23,29,32,34,37,39,42,42,43,52, 12-1,10, 10-11, 13-2,17,29,22,23,25,31, 14-2, 15-8,10,18, 16-7,13,14, 17-7,10,12, 18-6,17,19,43,44,48,56,60,71,71) – न पियति, पि-धातोः (पि गतौ, तुदादिः, सि.कौ. - धा.सं. 1405) **अन्येभ्योऽपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक् प्राप्तः, आगमशास्त्रस्यानित्यत्वान्न भवति। अव्ययम्।

277. अपुनरावृत्तिम् (5-17) – पुनः आवृत्तिः पुनरावृत्तिः, ताम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। न पुनरावृत्तिः **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। आवृत्ति इत्यत्र आङ्-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते, **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। स्त्री. द्वि.वि. ए.व.।

278. अपैशुनम् (16-2) – न पैशुनम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पैशुन इत्यत्र पिशुन-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। पिशुन इत्यत्र पिश्-धातोः (पिश अवयवे,

तुदादिः, सि.कौ. - धा.सं. 1437) **क्षुधिपिशिमिथिभ्यः कित्** (उणा. 3-55) इति उनन्-प्रत्ययः सः च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते, **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। नपुं. प्र.वि. ए.व.।

279. अपोहनम् (15-15) – अप-पूर्वकात् ऊह्-धातोः (ऊह वितर्के, भ्वादिः, सि.कौ. - धा.सं. 648) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। नपुं. प्र.वि. ए.व.।

280. अप्रकाशः (14-13) – न प्रकाशः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रकाश इत्यत्र प्र-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्। पुं. प्र.वि. ए.व.।

281. अप्रतिमप्रभावः (11-43) – अप्रतिमः प्रभावः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अप्रतिम इत्यत्र अविद्यमानः प्रतिमः यस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। प्रतिम इत्यत्र प्रति-उपसर्गपूर्वकात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। प्रभाव इत्यत्र प्र-पूर्वकात् भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

282. अप्रतिष्ठम् (16-8) – अविद्यमाना प्रतिष्ठा यस्मिन् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति प्रतिष्ठा-शब्दस्य आकारस्य ह्रस्वः। प्रतिष्ठा इत्यत्र प्रतिपूर्वकात् स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

283. अप्रतिष्ठः (6-38) – अविद्यमाना प्रतिष्ठा यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति प्रतिष्ठा-शब्दस्य आकारस्य ह्रस्वः। प्रतिष्ठा इत्यत्र प्रतिपूर्वकात् स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

284. अप्रतिकारम् (1-46) – अविद्यमानः प्रतिकारः यस्मिन् तम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। प्रतिकार इत्यत्र प्रतिपूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

285. अप्रदाय (3-12) – न प्रदाय **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रदाय इत्यत्र प्र-पूर्वकात् दा-धातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

286. अप्रमेयस्य (2-18) – न प्रमेयस्य, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रमेय इत्यत्र प्र-पूर्वकात् मा-धातोः (माङ् माने, दिवादिः, सि.कौ. - धा.सं. 1088) **अचो यत्** (पा.सू. 3-1-124) इति सूत्रेण यत्-प्रत्ययः, **ईद्यति** (पा.सू. 6-4-65) इति सूत्रेण धातोः आकारस्य ईकारादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

287. अप्रमेयम् (11-17,42) – न प्रमेयम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रमेय इत्यत्र प्र-पूर्वकात् मा-धातोः (माङ् माने, दिवादिः, सि.कौ. - धा.सं. 1088) **अचो यत्** (पा.सू. 3-1-124) इति सूत्रेण यत्-प्रत्ययः, **ईद्यति** (पा.सू. 6-4-65) इति सूत्रेण धातोः आकारस्य ईकारादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

288. अप्रवृत्तिः (14-13) – न प्रवृत्तिः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रवृत्ति इत्यत्र प्रपूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. प्र.वि. ए.व.।

289. अप्राप्य (6-37, 9-3, 16-20) – न प्राप्य, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्राप्य इत्यत्र प्र-पूर्वकात् आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वः स्थाने ल्यप्। अव्ययम्।

290. अप्रियम् (5-20) – न प्रियम् अप्रियम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। प्रिय इत्यत्र प्री-धातोः (प्रीञ् तर्पणे कान्तौ च, क्र्यादिः, सि.कौ. - धा.सं. 1474) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः ईकारस्य स्थाने इयङ्-आदेशः। पुं. द्वि.वि. ए.व.।

291. अप्सु (7-8) – आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) क्विप्-प्रत्ययः, **आप्नोतेर्ह्रस्वश्च** (पा.सू. 2-59) इति उणादिसूत्रेण क्विप्, धातोः ह्रस्वश्च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि. नित्य-ब.व.।

292. अफलप्रेप्सुना (18-23) – फलस्य प्रेप्सुः फलप्रेप्सुः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। न फलप्रेप्सुः अफलप्रेप्सुः **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। प्रेप्सुः - प्रेप्स इत्यत्र प्र-पूर्वकात् आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-1-9) इति धातोः द्वित्वम्, **आप्ज्ञप्यृधामीत्** (पा.सू. 7-4-55) इति ईत्वम्, **अत्र लोपोऽभ्यासस्य** (पा.सू. 7-4-58) इति अभ्यासस्य लोपः, प्र+ईप्स=प्रेप्स, सन्नन्तात् प्रेप्स इत्यस्मात् **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः। पुं. तृ.वि. ए.व.।

293. अफलाकाङ्क्षिभिः (17-11,17) – न फलाकाङ्क्षिणः अफलाकाङ्क्षिणः तैः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। फलाकाङ्क्षिणः इत्यत्र फल इति उपपदे आङ्पूर्वकात् काङ्क्ष्-धातोः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. तृ.वि. ब.व.।

294. अबुद्धयः (7-24) – अविद्यमाना बुद्धिः येषां ते **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ब.व.।

295. अब्रवीत् (1-2,28, 4-1) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लङ्, ब्रू तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः, **ब्रुव ईट्** (पा.सू. 7-3-93) इति ईट्-आगमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः अब्रवीत्। लङ्, प्र.पु. ए.व.।

296. अभक्ताय (18-67) – न भक्तः अभक्तः, तस्मै। **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भक्त इत्यत्र भक्तिरस्य अस्ति इति विग्रहे **अर्शआदिभ्य अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च**

(पा.सू. 6-4-148) इति इकारलोपः, भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। पुं. च.वि. ए.व.।

297. अभयम् (10-4, 16-1) – न भयम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भय इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

298. अभवत् (1-13) – भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लङ्। भू तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) गुणः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः। लङ्, प्र.पु. ए.व.।

299. अभविता (2-20) – न भविता, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भवितृ इत्यत्र भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच् भवितृ, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

300. अभावयतः (2-66) – न भावयन् अभावयन्, तस्य। **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भावयत् इत्यत्र भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, भावि, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप् भावयत्। पुं. ष.वि. ए.व.।

301. अभावः (2-16, 10-4) – न भावः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भाव इत्यत्र भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **भावे** (पा.सू. 3-3-18) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, इति आवादेशः। पुं. प्र.वि. ए.व.।

302. अभाषत (11-14) – भाष्-धातोः (भाष व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 612) लङ्, तस्य स्थाने त-प्रत्ययः, भाष् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः। लङ्, प्र.पु. ए.व.।

303. अभिक्रमनाशः (2-40) – अभिक्रमस्य नाशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अभिक्रम इत्यत्र अभि-पूर्वकात् क्रम्-धातोः (क्रमु पादविक्षेपे, भ्वादिः, सि.कौ. - धा.सं. 473) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इत्यनेन उपधावृद्धेः अभावः। नाश इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

304. अभिजनवान् (16-15) – अभिपूर्वकात् जन्-धातोः (जन जनने, जुहोत्यादिः, सि.कौ. - धा.सं. 1105) **हलश्च** (पा.सू. 3-3-121) इति घञ् इति प्रत्ययः, ततः अभिजन इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94), इत्यनेन मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। पुं. प्र.वि. ए.व.।

305. अभिजातस्य (16-3,4) – अभि-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **निष्ठा** (पा.सू. 3-2-102) इति भावे क्त-प्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नस्य आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, अथवा अभिमतं जातं यस्य सः, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः। पुं. ष.वि. ए.व.।

306. अभिजातः (16-5) – अभि-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **निष्ठा** (पा.सू. 3-2-102) इति भावे क्त-प्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नस्य आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-

1-101) इति दीर्घः, अथवा अभिमतं जातं यस्य सः, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः। पुं. प्र.वि. ए.व.।

307. अभिजानन्ति (9-24) – अभि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्। ज्ञा झि, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्नाप्रत्ययः, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति ज्ञा-धातोः जादेशः, झस्थाने अन्तादेशः **झोऽन्तः** (पा.सू. 7-1-3) इति, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। लट्, प्र.पु. ब.व.।

308. अभिजानाति (4-14, 7-13,25, 18-55) – अभिपूर्वकात् ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, ज्ञा तिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना-प्रत्ययः, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति ज्ञाधातोः जादेशः। लट्, प्र.पु. ए.व.।

309. अभिजायते (2-62, 6-41, 13,23) – अभि-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) लट्। **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन् जन् श्यन् त, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जनः जा-आदेशः – जायत, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

310. अभितः (5-26) – अभि इत्यस्मात् **पर्यभिभ्यां च** (पा.सू. 5-3-9) इति तसिल्-प्रत्ययः। अव्ययम्।

311. अभिधास्यति (18-68) – अभिपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लृट्। धा तिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः। लृट्, प्र.पु. ए.व.।

312. अभिधीयते (13-1, 17-27, 18-11) – अभिपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्। धा त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति आकारस्य ईकारः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

313. अभिनन्दति (2-57) – अभि-पूर्वकात् नद्-धातोः (टुनदि समृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 67) लट्, अभि नद् तिप्, इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, नन्द् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, लट्, प्र.पु. ए.व.।

314. अभिप्रवृत्तः (4-20) – अभि-प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः। पुं. प्र.वि. ए.व.।

315. अभिभवति (1-40) – अभि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लट्, अभि भू तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

316. अभिभूय (14-10) – अभि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वः स्थाने ल्यप्। अव्ययम्।

317. अभिमानः (16-4) – अभि-पूर्वकात् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति अकारस्य वृद्धिः। पुं. प्र.वि. ए.व.।

318. अभिमुखाः (11-28) – अभिगताः मुखम् , **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (पा.सू. 1336) इति प्रादिसमासः। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्, सः च डित्, धातोर्मुट्-आगमः। पुं. प्र.वि. ब.व.।

319. अभिरक्षन्तु (1-11) – अभि-पूर्वकात् रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) लोट्, अभि रक्ष् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्-प्रत्ययः, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्त्-आदेशः, **एरुः** (पा.सू. 3-4-86) इति उकारः। लोट्, प्र.पु. ब.व.।

320. अभिरतः (18-45) – अभि-पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 853) कर्तरि क्त-प्रत्ययः, **गत्यर्थाकर्मकश्लिषशीङ्स्थास- वसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण। **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

321. अभिविज्वलन्ति (11-28) – अभि वि इति उपसर्गद्वयपूर्वकात् ज्वल्-धातोः (ज्वल दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 804) लट्, ज्वल् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति इति अन्तादेशः। लट्, प्र.पु. ब.व.।

322. अभिसन्धाय (17-12) – अभि-सम्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

323. अभिहिता (2-39) – अभि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति हि-आदेशः। स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

324. अभ्यधिकः (11-43) – अभिगतः अधिकः, **प्रादयो गताद्यर्थे प्रथमया** (पा.सू. 1335) इति समासः। अधिक इत्यत्र अधि इत्यस्मात् **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन् स्वार्थे। पुं. प्र.वि. ए.व.।

325. अभ्यर्च्य (18-46) – अभि-पूर्वकात् अर्च्-धातोः (अर्च पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 204) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, क्त्वास्थाने **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

326. अभ्यसूयकाः (16-18) – अभि-पूर्वकात् असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक् अभ्यसूय, **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अक-आदेशः अभ्यसूयक। पुं. प्र.वि. ब.व.।

327. अभ्यसूयति (18-67) – अभि-पूर्वकात् असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक्, तस्मात् लट् अभ्यसूय तिप्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, अभ्यसूयति। लट्, प्र.पु. ए.व.।

328. अभ्यसूयन्तः (3-32) – अभि-पूर्वकात् असू-धातोः (असू उपतापे, कण्ड्वादिः, सि.कौ. - धा.सं. 1947) **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक्, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ब.व.।

329. अभ्यहन्यन्त (1-13) – अयं कर्मकर्तरि प्रयोगः अतः **कर्मवत्कर्मणा तुल्यक्रियः** (पा.सू. 3-1-87) इति कर्मवद्भावः। अभिपूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लङ्, **अनद्यतने लङ्** (पा.सू. 3-2-111) हन् लङ्, लङः स्थाने झ-प्रत्ययः, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्। लङ्, प्र.पु. ब.व.।

330. अभ्यासयोगयुक्तेन (8-8) – अभ्यासश्च योगश्च अभ्यासयोगम्, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इत्यनेन समाहारद्वन्द्वः। तेन अभ्यासयोगेन युक्तः अभ्यासयोगयुक्तः, तेन, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। अभ्यास इत्यत्र अभि-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः। नपुं. तृ.वि. ए.व.।

331. अभ्यासयोगेन (12-9) – अभ्यासेन योगः इति **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। अभ्यास इत्यत्र अभि-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्। पुं. तृ.वि. ए.व.।

332. अभ्यासात् (12-12, 18-36) – अभि-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

333. अभ्यासे (12-10) – अभि-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. स.वि. ए.व.।

334. अभ्यासेन (6-35) – अभि-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. तृ.वि. ए.व.।

335. अभ्युत्थानम् (4-7) – अभि उद् इति उपसर्गद्वयपूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति युस्थाने अनादेशः, **उदः स्थास्तम्भोः पूर्वस्य** (पा.सू. 8-4-61) इति पूर्वसवर्णः। नपुं. प्र.वि. ए.व.।

336. अमलान् (14-14) – अविद्यमानम् मलं येषां ते अमलाः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मल इत्यत्र मृज्-धातोः (मृजू शुद्धौ, अदादिः, सि.कौ. - धा.सं. 1066) **मृजेष्टिलोपश्च** (उणा. 1-107) इति उणादिसूत्रेण अलच्, टिलोपश्च। पुं. द्वि.वि. ब.व.।

337. अमानित्वम् (13-7) – न मानित्वम् **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। मानिनः भावः इत्यर्थे **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः, मानिन् इत्यत्र मानः अस्यास्तीति इत्यर्थे मान शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। मान इत्यत्र अति-पूर्वकात् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

338. अमितविक्रमः (11-40) – अमितः विक्रमः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अमित इत्यत्र न मितः **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। मित इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **निष्ठा** (पा.सू. 3-2-102) इत्यनेन क्त-प्रत्ययः। **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति इत्वम्। विक्रम इत्यत्र विपूर्वकात् क्रम्-धातोः (क्रमु पादविक्षेपे, भ्वादिः, सि.कौ. - धा.सं. 473) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

339. अमी (11-21,23,28) – अदस् जस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारः, **जसः शी** (पा.सू. 7-1-117), **एत ईद्बहुवचने** (पा.सू. 8-2-81) इति दस्य मत्वम्, ईकारः। अदस् इत्यत्र नञ् इति उपपदे दस्-धातोः (दसु उपक्षये, दिवादिः, सि.कौ. - धा.सं. 1213) बाहुलकात् क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. प्र.वि. ब.व.।

340. अमुत्र (6-40) – अदस्-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्। **अदसोऽसेर्दादु दो मः** (पा.सू. 8-2-80) इति मत्वम् उत्वं च। अदस् इत्यत्र नञ् इति उपपदे दस्-धातोः (दसु उपक्षये, दिवादिः, सि.कौ. - धा.सं. 1213) बाहुलकात् क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। अव्ययम्।

341. अमूढाः (15-5) – न मूढाः, **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः मूढ इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) क्त-प्रत्ययः, **गत्यर्थाकर्मकश्लिषशीङ्स्थास्वसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि। पुं. प्र.वि. ब.व.।

342. अमृतत्वाय (2-15) – अविद्यमानं मृतं यस्मात् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। अमृतत्व इत्यत्र अमृतस्य भावः इत्यर्थे **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। नपुं. च.वि. ए.व.।

343. अमृतस्य (14-27) – अविद्यमानं मृतं यस्मात् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मृत इत्यत्र मृधातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। नपुं. ष.वि. ए.व.।

344. अमृतम् (9-19, 10-18, 13-12, 14-20) – अविद्यमानं मृतं यस्मात् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। नपुं. प्र.वि. ए.व.।

345. अमृतोद्भवम् (10-27) – अमृतात् उद्भवः यस्य तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अमृत इत्यत्र अविद्यमानं मृतं यस्मात् तत्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। उद्भव इत्यत्र उद्-पूर्वकात् भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. द्वि.वि. ए.व.।

346. अमृतोपमम् (18-37,38) – अमृतेन उपमा यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अमृत इत्यत्र अविद्यमानं मृतं यस्मात् तत् इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। उपमा इत्यत्र उप-पूर्वकात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. प्र.वि. ए.व.।

347. अमेध्यम् (17-10) – न मेध्यम् अमेध्यम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। मेध्य इत्यत्र मेध्-धातोः (मेधृ मेधाहिंसनयोः सङ्गमे च, भ्वादिः, सि.कौ. - धा.सं. 870) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति सूत्रेण ण्यत्, नपुं. प्र.वि. ए.व.।

348. अम्बुवेगाः (11-28) – अम्बूनां वेगाः, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः। अम्बु इत्यत्र अम्ब्-धातोः (अबि शब्दे, भ्वादिः, सि.कौ. - धा.सं. 378) बाहुलकाद् उः। वेग इत्यत्र विज्-धातोः (विजिर् पृथग्भावे, जुहोत्यादिः, सि.कौ. - धा.सं. 1094) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः इकः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

349. अम्भसा (5-10) – आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **उदके नुम्भौ च** (उणा.सू. 4-209) इति असुन् ह्रस्वश्च, भान्तादेशः, नुमागमश्च। नपुं. तृ.वि. ए.व.।

350. अम्भसि (2-67) – आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **उदके नुम्भौ च** (उणा.सू. 4-209) इति असुन् ह्रस्वश्च, भान्तादेशः, नुमागमश्च। नपुं. स.वि. ए.व.।

351. अंशः (15-7) – अंश्-धातोः (अंश विभाजने, चुरादिः, इति वाचस्पत्यम्) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। पुं. प्र.वि. ए.व.।

352. अंशुमान् (10-21) – अंशु इत्यस्मात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। अंशु इत्यत्र अंश्-धातोः (अंश विभाजने, चुरादिः, इति वाचस्पत्यम्) **मृगय्वादयश्च** (उणा.सू.1.37) इति उणादिसूत्रेण कु-प्रत्ययः। पुं. प्र.वि. ए.व.।

353. अयज्ञस्य (4-31) – अविद्यमानः यज्ञः यस्य सः, तस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपो वक्तव्यः** (वा.1361) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्। पुं. ष.वि. ए.व.।

354. अयतिः (6-37) – न यतिः इति **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। यति इत्यत्र यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **सर्वधातुभ्यः इन्** (उणा. सू. 4-117) इति उणादिसूत्रेण इन्। पुं. प्र.वि. ए.व.।

355. अयथावत् (18-31) – न यथावत्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। यथावत् इत्यत्र यथा इति पूर्वपदं वत् इति च उत्तरपदम्, अत्र वत् इति अव्ययं सादृश्यार्थे, निपातसमुदायोयम्। यथा इत्यत्र यद्-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

356. अयनेषु (1-11) – अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण भावे अर्थे ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति युस्थाने अन-आदेशः। नपुं. स.वि. ब.व.।

357. अयशः (10-5) – न यशः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। यशस् इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेर्देवने युट् च** (उणा. सू. 4-190) इति उणादिसूत्रेण असुन्। नपुं. प्र.वि. ए.व.।

358. अयम् (2-19,20,20,24,24,24,25,25,25,30,58, 3-9,36, 4-3,31,40, 6-21,33, 7-25, 8-19, 11-1, 13-31, 15-9, 17-3) – इदम् सु, **इदोऽय् पुंसि** (पा.सू. 7-2-111) इति सूत्रेण अय्-आदेशः, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

359. अयुक्तस्य (2-66,66) – न युक्तस्य , **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) क्तप्रत्ययः **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. ष.वि. ए.व.।

360. अयुक्तः (5-12, 18-28) – न युक्तः , **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) क्तप्रत्ययः **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ए.व.।

361. अयोगतः (5-6) – न योगः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्। योगत इत्यत्र योगशब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति तसिः। अव्ययम्।

362. अरतिः (13-10) – न रतिः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। रति इत्यत्र रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 853) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। स्त्री. प्र.वि. ए.व.।

363. अरागद्वेषतः (18-23) – न रागद्वेषतः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। रागद्वेष इत्यत्र रागश्च द्वेषश्च रागद्वेषौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। रागद्वेषतः इत्यत्र रागद्वेष-शब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः, राग इत्यत्र रञ्ज्-धातोः (रञ्ज् रागे, भ्वादिः, सि.कौ. - धा.सं. 999) **भावे** (पा.सू. 3-3-18) इति घञ्, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत**

**उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। द्वेष इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

364. अरिसूदन (2-4) – अरीणां सूदनः **षष्ठी** (पा.सू. 2-2-8) इति समासः। अरि इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सूदन इत्यत्र सूद्-धातोः (षूद क्षरणे, भ्वादिः, सि.कौ. - धा.सं. 25) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। पुं. सम्बो.प्र.वि. ए.व.।

365. अर्चितुम् (7-21) – अर्च्-धातोः (अर्च पूजायाम् भ्वादिः, सि.कौ. - धा.सं. 204) **तुमुन्ण्वुलौ क्रियायाम् क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। अव्ययम्।

366. अर्जुन (2-2,45, 3-7, 4-5,9,37, 6-16,32,46, 7-16,26, 8-16,27, 9-19, 10-32,39,42, 11-47,54, 18-9,34,61) – अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **अर्जेर्णिलुक्** (उणा. सू. 3-58) च इति उनन्-प्रत्ययः णेः लुक् च। पुं. सम्बो.प्र.वि. ए.व.।

367. अर्जुनम् (11-50) – अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **अर्जेर्णिलुक्** (उणा. सू. 3-58) च इति उनन्-प्रत्ययः णेः लुक् च। पुं. द्वि.वि. ए.व.।

368. अर्जुनः (1-47, 2-4,54, 3-1,36, 4-4, 5-1, 6-33,37, 8-1, 10-12, 11-1,15,36,51, 12-1, 14-21, 17-1, 18-1,73) – अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **अर्जेर्णिलुक्** (उणा. सू. 3-58) च इति उनन्-प्रत्ययः णेः लुक् च। पुं. प्र.वि. ए.व.।

369. अर्थकामान् (2-5) – अर्थं कामयन्ते इति, **कर्मण्यण्** (पा.सू. 3-2-1) इति सूत्रेण अण्। **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। पुं. द्वि.वि. ब.व.।

370. अर्थव्यपाश्रयः (3-18) – अर्थानां व्यपाश्रयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। व्यपाश्रय इत्यत्र वि-अप-आ-पूर्वकात् श्रिधातोः (श्रिञ् सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 897) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

371. अर्थसञ्चयान् (16-12) – अर्थानां सञ्चयाः, तान्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। सञ्चय इत्यत्र सम्पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

372. अर्थः (2-46, 3-18) – अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। पुं. प्र.वि. ए.व.।

373. अर्थार्थी (7-16) – अर्थस्य अर्थी, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। अर्थिन् इत्यत्र अर्थ इत्यस्मात् **अर्थाच्चासन्निहिते** (वा. 3227) इति इनिः। अर्थी अर्थात् याचकः। पुं. प्र.वि. ए.व.।

374. अर्थे (1-33, 2-27, 3-34) – अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। पुं. स.वि. ए.व.।

375. अर्पणम् (4-24) – ऋधातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्, **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति युस्थाने अनादेशः। नपुं. प्र.वि. ए.व.।

376. अर्पितमनोबुद्धिः (8-7, 12-14) - मनश्च बुद्धिश्च मनोबुद्धी, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। अर्पिते मनोबुद्धी येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अर्पित इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) णिचि अर्पि इति णिजन्तः धातुः, अस्मात् अर्पि इत्यस्मात् **निष्ठा** (पा.सू. 3-2-102) इत्यनेन क्तप्रत्ययः। मनस् इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं.1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्। पुं. प्र.वि. ए.व.।

377. अर्यमा (10-29) – अर्यम् उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्जन्मातरिश्वन्मघवन्निति** (उणा. 1-157) इति सूत्रेण कनिन्-प्रत्यये निपातनात् अर्यमन् इति शब्दः सिद्ध्यति। पुं. प्र.वि. ए.व.।

378. अर्हति (2-17) – अर्ह्-धातोः (अर्ह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 740) लट्। लटः तिप्-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

379. अर्हसि (2-25,26,27,30,31, 3-20, 6-39, 10-16, 11-44, 16-24) – अर्ह्-धातोः (अर्ह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 740) लट्। लटः सिप्-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, म.पु. ए.व.।

380. अर्हाः (1-37) – अर्ह्-धातोः (अर्ह पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1831) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्। **णेरनिटि** (पा.सू. 6-4-51) इति णेः लुक्। पुं. प्र.वि. ब.व.।

381. अलसः (18-28) – न लसः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। लस इत्यत्र लस्-धातोः (लस श्लेषणक्रीडनयोः, भ्वादिः, सि.कौ. - धा.सं. 714) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. प्र.वि. ए.व.।

382. अलोलुप्त्वम् (16-2) – न लोलुप्त्वम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। लोलुप्त्व इत्यत्र **लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्** (पा.सू. 3-1-24) इति लुभ्-धातोः (लुभ विमोहने, तुदादिः, सि.कौ. - धा.सं. 1305) यङ्-प्रत्ययः, **यङोऽचि च** (पा.सू. 2-4-74) इति यङः लुक्, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, लोलुप् इत्यस्मात् **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, नपुं. प्र.वि. ए.व.।

383. अल्पबुद्धयः (16-9) – अल्पा बुद्धिः येषां ते **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अल्पा इत्यत्र अल्-धातोः (अल भूषमपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) बाहुलकात् प-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्। पुं. प्र.वि. ब.व.।

384. अल्पमेधसाम् (7-23) – अल्पा मेधा येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **नित्यमसिच्प्रजामेधयोः** (पा.सू. 5-4-122) इति असिच् समासान्तप्रत्ययः। अल्पा इत्यत्र अल्-धातोः (अल भूषमपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) बाहुलकात् प-प्रत्ययः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। मेधा

इत्यत्र मेध्-धातोः (मेधृ मेधाहिंसनयोः सङ्गमे च, भ्वादिः, सि.कौ. - धा.सं. 870) **षिद्भिदादिभ्योङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ब.व.।

385. अल्पम् (18-22) – अल्-धातोः (अल भूषमपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) बाहुलकात् प-प्रत्ययः। नपुं. प्र.वि. ए.व.।

386. अवगच्छ (10-41) – अव-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) लोट्, अवगम् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति मकारस्य छकारादेशः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लोपः। लोट्, म.पु. ए.व.।

387. अवजानन्ति (9-11) – अव-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्। अवज्ञा झि, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना-प्रत्ययः, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **झोऽन्तः** (पा.सू. 7-1-3)इति झस्य अन्त्-आदेशः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। लट्, प्र.पु. ब.व.।

388. अवज्ञातम् (17-22) – अव-पूर्वकात् ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः। नपुं. प्र.वि. ए.व.।

389. अवतिष्ठति (14-23) – अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, अव स्था तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति तिष्ठ-आदेशः। वस्तुतः अवतिष्ठते इति आत्मनेपदं स्यात् **समवप्रविभ्यः स्थः** (पा.सू. 1-3-22) इति सूत्रेण तथापि **अवतिष्ठति** इति परस्मैपदम् आर्षम्। लट्, प्र.पु. ए.व.।

390. अवतिष्ठते (6-18) – अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, **समवप्रविभ्यः स्थः** (पा.सू. 1-3-22) इति आत्मनेपदम्। अव स्था त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति तिष्ठ-आदेशः। लट्, प्र.पु. ए.व.।

391. अवध्यः (2-30) – न वध्यः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वध्य इत्यत्र हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **हनो वा यद्वधश्च वक्तव्यः** (पा.सू. 1923) इति वार्तिकेन विकल्पेन यत्-प्रत्ययः वधादेशः च। पुं. प्र.वि. ए.व.।

392. अवनिपालसङ्घैः (11-26) – अवनिपालानां सङ्घाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अवनिपाल इत्यत्र अवनिं पालयन्ति इति विग्रहे अवनि इति उपपदे पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। अवनि इत्यत्र अव्-धातोः (अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अर्तिसृधृधम्यश्यवितृभ्योऽनिः** (उणा. 2-102) इति अनिप्रत्ययः। सङ्घ इत्यत्र सम्-पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्घौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. तृ.वि. ब.व.।

393. अवरम् (2-49) – न वरम् **नञ्** (पा.सू 2-2-6)इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वर इत्यत्र वृधातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्। नपुं. प्र.वि. ए.व.।

394. अवशम् (9-8) – न वशः, तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वश इत्यत्र **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) अप्। पुं. द्वि.वि. ए.व.।

395. अवशः (3-5, 6-44, 8-19, 18-60) – न वशः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वश इत्यत्र **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) अप्। पुं. प्र.वि. ए.व.।

396. अवशिष्यते (7-2) – अव-पूर्वकात् शिष्-धातोः (शिष असर्वोपयोगे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1818) लट्। लटः स्थाने त। अव शिष् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

397. अवष्टभ्य (9-8, 16-9) – अव-पूर्वकात् स्तम्भ इति सौत्र-धातोः **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **अनिदितां हल उपधायां झलि क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः, **अवाच्चालम्बनाविदूर्ययोः** (पा.सू. 8-3-68) इति सस्य षत्वम् अवष्टभ्य। अव्ययम्।

398. अवसादयेत् (6-5) – अव-पूर्वकात् षद्-धातोः (षद पद्यर्थे, चुरादादिः, सि.कौ. - धा.सं. 1832) **सत्यापपाशरूपवीणातूलश्लोकसेनालोम- त्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, तस्मात् **विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्** (पा.सू. 3-3-161) इति लिङ्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति यास्थाने इय्। विधिलिङ्, प्र.पु. ए.व.।

399. अवस्थातुम् (1-30) – अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **तुमुन्ण्वुलौ क्रियायाम् क्रियार्थायां** (पा.सू. 3-3-10) इति सूत्रेण तुमुन्। अव्ययम्।

400. अवस्थितम् (15-11) – अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्तप्रत्ययः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. द्वि.वि. ए.व.।

401. अवस्थितः (9-4, 13-32) – अव-पूर्वकात् स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्तप्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40 इति आकारस्य इकारः। पुं. प्र.वि. ए.व.।

402. अवस्थितान् (1-22,27) – अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40 इति आकारस्य इकारः। पुं. द्वि.वि. ब.व.।

403. अवस्थिताः (1-11,33, 2-6, 11-32) – अव-पूर्वकात् स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थास- वसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. प्र.वि. ब.व.।

404. अवहासार्थम् (11-42) – अवहासाय इदम् इति, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। अवहास इत्यत्र अव-पूर्वकात् हस्-धातोः (हसे हसने, भ्वादिः, सि.कौ. - धा.सं. 721) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः । नपुं. प्र.वि. ए.व.।

405. अवाच्यवादान् (2-36) – न वाच्यवादान्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वाच्यवाद इत्यत्र वाच्याः वादाः **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। वाच्य इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। वाद इत्यत्र वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ब.व.।

406. अवाप्तव्यम् (3-22) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्, तव्यः वा। नपुं. प्र.वि. ए.व.।

407. अवाप्तुम् (6-36) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायां** (पा.सू. 3-3-10) इति तुमुन्। अव्ययम्।

408. अवाप्नोति (15-18, 16-23, 18-56) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लट्, लटः तिप्, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

409. अवाप्य (2-8) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) क्त्वाप्रत्ययः **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति सूत्रेण, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वाप्रत्ययस्य ल्यप्। अव्ययम्।

410. अवाप्यते (12-5) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) कर्मणि लट्। लटः त-प्रत्ययः। **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम्। कर्मणि लट्, प्र.पु. ए.व.।

411. अवाप्स्यथ (3-11) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लृट्। लृटः त-प्रत्ययः। अव आप् थ, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः। लृट्, म.पु. ब.व.।

412. अवाप्स्यसि (2-33,38,53, 12-10) – अव-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लृट्, लटः त-प्रत्ययः। अव आप् सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः। लृट्, म.पु. ए.व.।

413. अविकम्पेन (10-7) – न विकम्पः तेन, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विकम्प इत्यत्र वि-पूर्वकात् कप्-धातोः (कपि चलने, भ्वादिः, सि.कौ. - धा.सं. 375) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्-आगमः, **भावे** (पा.सू. 3-3-18) इति घञ्, पुं. तृ.वि. ए.व.।

414. अविकार्यः (2-25) – न विकार्यः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विकार्य इत्यत्र वि-पूर्वकात् कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति सूत्रेण ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ए.व.।

415. अविज्ञेयम् (13-15) – न विज्ञेयम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विज्ञेय इत्यत्र वि-पूर्वकात् ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **अचो यत्** (पा.सू. 3-1-124) इति यत्, **ईद्यति** (पा.सू. 6-4-65) इति आकारस्य ईकारः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

416. अविद्वांसः (3-25) – न विद्वांसः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विद्वांस इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **विदेः शतुर्वसुः** (पा.सू. 7-1-36) इति वसु-आदेशः। पुं. प्र.वि. ब.व.।

417. अविधिपूर्वकम् (9-23, 16-17) – न विधिपूर्वकम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विधिपूर्व इत्यत्र विधिः पूर्वः यथा भवति तथा इति बहुव्रीहिः आर्षः। विधि इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किप्रत्यये विधिशब्दः निष्पन्नः। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। क्रियाविशेषणम् इदम्। नपुं. द्वि.वि. ए.व.।

418. अविनश्यन्तम् (13-27) – न विनश्यन्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः। **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। पुं. द्वि.वि. ए.व.।

419. अविनाशि (2-17) – न विनाशि, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विनाशिन् इत्यत्र वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. द्वि.वि. ए.व.।

420. अविनाशिनम् (2-21) – न विनाशी अविनाशी, तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः**(पा.सू. 6-3-73) इति नलोपः। विनाशिन् इत्यत्रविपूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

421. अविपश्चितः (2-42) – न विपश्चितः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विपश्चित् इत्यत्र विप्रकृष्टं चेतति निश्चिनोति वा इति विग्रहे वि-प्र-पूर्वकात् चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति पृषोदरादित्वात् प्र-स्थाने पस्-आदेशे श्चुत्वे (पा.सू. 8-4-40) च अयं शब्दः साध्यते। पुं. प्र.वि. ब.व.।

422. अविभक्तम् (13-16, 18-20) – न विभक्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। विभक्त इत्यत्र वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। नपुं. प्र.वि. ए.व.।

423. अवेक्षे (1-23) – अव-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) लट्। लटः स्थाने इट्। अव ईक्ष् इट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, उ.पु. ए.व.।

424. अवेक्ष्य (2-31) – अव-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

425. अव्यक्तनिधनानि (2-28) – अव्यक्तं निधनं येषां तानि, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अव्यक्त इत्यत्र न व्यक्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। व्यक्त इत्यत्र वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधालोपः। **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। निधन इत्यत्र नि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **कृपॄवृजिमन्दिनि धाञः क्युः** (उणा.सू. 2-81) इति क्युः। **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. प्र.वि. ब.व.।

426. अव्यक्तमूर्तिना (9-4) – अव्यक्ता मूर्तिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अव्यक्ता इत्यत्र न व्यक्ता, **नञ्** (पा.सू 2-2-6) इति समासः। व्यक्ता इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधालोपः। **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। मूर्ति इत्यत्र मूर्छ्-धातोः (मूर्छा मोहसमुच्छ्राययोः, भ्वादिः, सि.कौ. - धा.सं. 212) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **राल्लोपः** (पा.सू. 6-4-21) इति छस्य लोपः। पुं. तृ.वि. ए.व.।

427. अव्यक्तसंज्ञके (8-18) – अव्यक्ता संज्ञा यस्य सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्। **केऽणः** (पा.सू. 7-4-13) इति ह्रस्वः। अव्यक्ता न व्यक्ता, **नञ्** (पा.सू 2-2-6) इति समासः। व्यक्ता इत्यत्र वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** इति (पा.सू. 8-2-30) उपधालोपः। **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. स.वि. ए.व.।

428. अव्यक्तम् (7-24, 11-1,3, 13-5) – न व्यक्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यक्त इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. द्वि.वि. ए.व.।

429. अव्यक्तः (2-25, 8-20,21) – न व्यक्तः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यक्त इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

430. अव्यक्ता (12-5) – न व्यक्ता **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यक्ता इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। **अजाद्यतष्टाप्** इति टाप्। स्त्री. प्र.वि. ए.व.।

431. अव्यक्तात् (8-18,20) – न व्यक्तम् अव्यक्तम्, तस्मात्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73)इति नलोपः। व्यक्त इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः**(पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. पं.वि. ए.व.।

432. अव्यक्तादीनि (2-28) – अव्यक्तम् आदौ येषां तानि, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। आदि इत्यत्र आङ्पूर्वकात् दाधातोः **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किप्रत्ययः। नपुं. प्र.वि. ब.व.।

433. अव्यक्तासक्तचेतसाम् (12-5) – अव्यक्ते आसक्तानि चेतांसि येषां ते इति **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अव्यक्त इत्यत्र न व्यक्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यक्त इत्यत्र विपूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। आसक्त इत्यत्र आङ्-पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। चेतस् इत्यत्र चित्-धातोः (चिती सञ्ज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. ष.वि. ब.व.।

434. अव्यभिचारिणी (13-10) – न व्यभिचारिणी, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यभिचारिणी इत्यत्र वि-अभि-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **ऋन्नेभ्यो ङीप्** (पा.सू. 4-1-5) इति ङीप्। स्त्री. प्र.वि. ए.व.।

435. अव्यभिचारिण्या (18-33) – न व्यभिचारिण्या, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यभिचारिणी इत्यत्र वि-अभिपूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **ऋन्नेभ्यो ङीप्** (पा.सू. 4-1-5) इति ङीप्। स्त्री. तृ.वि. ए.व.।

436. अव्यभिचारेण (14-26) – न व्यभिचारेण, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। वि-अभिपूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्। पुं. तृ.वि. ए.व.।

437. अव्ययस्य (2-17, 14-27) – अविद्यमानः व्ययः यस्य तत्, तस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। व्यय इत्यत्र व्यय इति धातोः (व्यय वित्तसमुत्सर्गे, चुरादिः, सि.कौ. - धा.सं. 1932) **सत्यापपाशरूपवीणातूलश्लोक- सेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. ष.वि. ए.व.।

438. अव्ययम् (2-21, 4-1,13, 7-13, 14-25, 9-2,13,18, 11-2,4, 14-5, 15-1,5, 18-20,56) – अविद्यमानः व्ययः यस्य तम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। व्यय इत्यत्र व्यय इति धातोः (व्यय वित्तसमुत्सर्गे, चुरादिः, सि.कौ. - धा.सं. 1932) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

439. अव्ययः (11-18, 13-31, 15-17) – अविद्यमानः व्ययः यस्य सः **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। व्यय इत्यत्र व्यय इति धातोः (व्यय वित्तसमुत्सर्गे, चुरादिः, सि.कौ. - धा.सं. 1932) **सत्यापपाशरूपवीणातूलश्लोकसेनालोम- त्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

440. अव्ययात्मा (4-6) – अव्ययः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अव्यय इत्यत्र अविद्यमानः व्ययः यस्य सः **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। व्यय इत्यत्र व्यय इति धातोः (व्यय वित्तसमुत्सर्गे, चुरादिः, सि.कौ. - धा.सं. 1932) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। आत्मन् **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

441. अव्ययाम् (2-34) – अविद्यमानः व्ययः यस्याः सा, ताम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। व्यया इत्यत्र व्यय इति धातोः (व्यय वित्तसमुत्सर्गे, चुरादिः, सि.कौ. - धा.सं. 1932) **सत्यापपाशरूपवीणातूलश्लोकसेनालोम- त्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। **अजाद्यतष्टाप्** इति टाप्। स्त्री. द्वि.वि. ए.व.।

442. अव्यवसायिनाम् (2-41) – न व्यवसायिनः, तेषाम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। व्यवसायिन् इत्यत्र व्यवसायशब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। व्यवसाय इत्यत्र वि-अव-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **आतो युक् चिण्कृतोः** (पा.सू. 7-3-33) इति युक्। पुं. ष.वि. ब.व.।

443. अशक्तः (12-21) – न शक्तः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शक्त इत्यत्र शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तप्रत्ययः। पुं. प्र.वि. ए.व.।

444. अशमः (14-12) – न शमः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शम इत्यत्र शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **हलश्च** (पा.सू. 3-3-121) इति घञ्, **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधायाः वृद्धिः न। पुं. प्र.वि. ए.व.।

445. अशस्त्रम् (1-46) – न शस्त्रम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शस्त्र इत्यत्र शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण ष्ट्रन्। पुं. द्वि.वि. ए.व.।

446. अशान्तस्य (2-66) – न शान्तः, तस्य, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शान्त इत्यत्र शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति दीर्घः। पुं. ष.वि. ए.व.।

447. अशाश्वतम् (8-15) – न शाश्वतम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शाश्वत इत्यत्र शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

448. अशास्त्रविहितम् (17-5) – न शास्त्रविहितम् **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शास्त्रविहित इत्यत्र शास्त्रेण विहितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, शास्त्र इत्यत्र शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्। विहित इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **दधातेर्हिः**(पा.सू. 7-4-42) इति धा-स्थाने हि-आदेशः। नपुं. द्वि.वि. ए.व.।

449. अशुचिव्रताः (16-10) – अशुचीनि व्रतानि येषां ते **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अशुचि इत्यत्र न शुचि **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शुचि इत्यत्र शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति उणादिसूत्रेण इन्। व्रत इत्यत्र वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **पृषिरञ्जिभ्यां कित्** (उणा. 3-111) इति बाहुलकात् अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

450. अशुचिः (18-27) – न शुचिः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शुचि इत्यत्र शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति उणादिसूत्रेण इन्। पुं. प्र.वि. ए.व.।

451. अशुचौ (16-16) – न शुचिः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। तस्मिन्। शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति उणादिसूत्रेण इन्। पुं. स.वि. ए.व.।

452. अशुभात् (4-16, 9-1) – न शुभम् अशुभम्, तस्मात्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शुभ इत्यत्र शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. पं.वि. ए.व.।

453. अशुभान् (16-19) – न शुभान्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शुभ इत्यत्र शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

454. अशुश्रूषवे (18-67) – न शुश्रूषुः तस्मै, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शुश्रूषु इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **अज्झनगमां सनि** (पा.सू. 6-4-16) इत्यनेन दीर्घः। **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिर्हल् शिष्यते, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः। पुं. च.वि. ए.व.।

455. अशेषतः (6-24,39, 7-2, 18-11) – न शेषतः , **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शेष इत्यत्र शिष्-धातोः (शिष हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 687) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। शेष-शब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। अव्ययम्।

456. अशेषेण (4-35, 10-16, 18-28,63) – न शेषेण, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शेष इत्यत्र शिष्-धातोः (शिष हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 687) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। पुं. तृ.वि. ए.व.।

457. अशोच्यान् (2-11) – न शोच्यान्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शोच्य इत्यत्र शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 183) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। पुं. प्र.वि. ब.व.।

458. अशोष्यः (2-24) – न शोष्यः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। शोष्य इत्यत्र शुष्-धातोः (शुष शोषणे, दिवादिः, सि.कौ. - धा.सं. 1183) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। पुं. प्र.वि. ए.व.।

459. अश्नन् (5-8) – अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः। **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्नाप्रत्ययः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। पुं. प्र.वि. ए.व.।

460. अश्नन्ति (9-20) – अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) लट्। लटः झि। अश् झि, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना-प्रत्ययः, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। लट्, प्र.पु. ब.व.।

461. अश्नामि (9-26) – अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) लट्। लटः मिप्। अश् मिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना। लट्, उ.पु. ए.व.।

462. अश्नासि (9-27) – अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) लट्। लटः सिप्। अश् सिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना। लट्, म.पु. ए.व.।

463. अश्नुते (3-4, 5-21, 6-28, 13-12, 14-20) – अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) लट्। लटः त। अश् त, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एकारः। लट्, प्र.पु. ए.व.।

464. अश्रद्दधानः (4-40) – न श्रद्दधानः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। श्रद्धधान इत्यत्र श्रत् इति अव्ययं श्रद्धार्थे। श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शानच् आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लुः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदम्। पुं. प्र.वि. ए.व.।

465. अश्रद्दधानाः (9-3) – न श्रद्दधानाः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। श्रद्धधान इत्यत्र श्रद्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच् आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लुः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदम्। पुं. प्र.वि. ब.व.।

466. अश्रद्धया (17-28) – न श्रद्धा अश्रद्धा तया, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति सूत्रेण अङ्-प्रत्ययः। **अजाद्यतष्टाप्** (पा.सू. 4-1-1) इति टाप्। स्त्री. तृ.वि. ए.व.।

467. अश्रुपूर्णाकुलेक्षणम् (2-1) – अश्रुभिः पूर्णे अश्रुपूर्णे, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, आकुले ते ईक्षणे, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। अश्रुपूर्णे आकुलेक्षणे यस्य सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अश्रु (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) इत्यत्र अश्-धातोः **अश्र्वादयश्च** (उणा. सू. 5-29) इति रुक्। पूर्ण इत्यत्र पृ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः** (पा.सू. 7-2-27) इति इटः अभावः। आकुल इत्यत्र आङ्कृपूर्वकात् कुल्-धातोः (कुल संस्त्याने, बन्धुषु च भ्वादिः, सि.कौ. - धा.सं. 842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ईक्षण इत्यत्र ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्। **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. द्वि.वि. ए.व.।

468. अश्रौषम् (18-74) – श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लुङ्। लुङः मिप्। श्रु मिप्, **च्लि लुङि** (पा.सू. 3-1-43) इति च्लिः, **च्लेः सिच्** (3-1-44) इति सिच्, **सिचि वृद्धिः परस्मैपदेषु** (पा.सू. 7-2-1) इति वृद्धिः। लुङ्, उ.पु. ए.व.।

469. अश्वत्थम् (15-1,3) – अश्वत्थं जलम् अस्य अस्ति इति **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। अश्वत्थ इत्यत्र न श्वः तिष्ठति इति विग्रहे नञ् श्वस् इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पृषोदरादित्वात् (पा.सू. 6-4-109) श्वसः सकारस्य धातोः सकारस्य च स्थाने तकारादेशः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. द्वि.वि. ए.व.।

470. अश्वत्थः (10-23) – अश्वत्थं जलम् अस्य अस्ति इति **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। अश्वत्थ इत्यत्र न श्वः तिष्ठति इति विग्रहे नञ् श्वस् इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पृषोदरादित्वात् (पा.सू. 6-4-109) श्वसः सकारस्य धातोः सकारस्य च स्थाने तकारादेशः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. प्र.वि. ए.व.।

471. अश्वत्थामा (1-8) – अश्वस्य इव स्थाम यस्य, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति सकारस्य तकारः। अश्व इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** (उणा. 1-149) इति क्वन्-प्रत्ययः। स्थामन् इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

472. अश्वानाम् (10-27) – अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** (उणा. 1-149) इति क्वन्-प्रत्ययः। पुं. ष.वि. ब.व.।

473. अश्विनौ (11-6,22) – अश्वाः सन्ति ययोः, **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। अश्व इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्** (उणा. 1-149) इति क्वन्-प्रत्ययः। पुं. द्वि.वि. नित्य-द्वि.व.।

474. अष्टधा (7-4) – अष्टन् शब्दात् **सङ्ख्याया विधार्थे धा** (पा.सू. 5-3-42) इति सूत्रेण धा-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। अष्टन् इत्यत्र **सप्यशूभ्यां तुट् च** (उणा.सू. 1-155) इति सूत्रेण अश्-धातोः कनिन्-प्रत्ययः धातोः तुडागमः च, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति धातोः शकारस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।स्

475. असक्तबुद्धिः (18-49) – असक्ता बुद्धिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति सूत्रेण समासः। न सक्ता **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सक्ता इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्। पुं. प्र.वि. ए.व.।

476. असक्तम् (9-9, 13-14) – न सक्तम्, **नञ्** (पा.सू 2-2-6) इति समासः। सक्त इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. द्वि.वि. ए.व.।

477. असक्तः (3-7,19,19,25) – न सक्तः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सक्त इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. प्र.वि. ए.व.।

478. असक्तात्मा (5-21) – असक्तः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। न सक्तः **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73 इति नलोपः। सक्त इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

479. असक्तिः (13-9) – न सक्तिः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सक्तिः इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः। **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। स्त्री. प्र.वि. ए.व.।

480. असङ्गशस्त्रेण (15-3) – असङ्गः एव शस्त्रम् तेन, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। न सङ्गः असङ्गः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। शस्त्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) ष्ट्रन्। नपुं. तृ.वि. ए.व.।

481. असतः (2-16) – न सतः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। नपुं. ष.वि. ए.व.।

482. असत् (9-19, 11-37, 13-12, 17-28, ) – न सत्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः**

**शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। नपुं. प्र.वि. ए.व.।

483. असत्कृतम् (17-22) – न सत्कृतम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सत् कृतं सत्कृतम्, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति समासः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्तः। नपुं. प्र.वि. ए.व.।

484. असत्कृतः (11-42) – न सत्कृतः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सत् कृतः सत्कृतः, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति समासः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। पुं. प्र.वि. ए.व.।

485. असत्यम् (16-8) – न सत्यम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सत्य इत्यत्र सत्-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इति यत्। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। नपुं. द्वि.वि. ए.व.।

486. असद्ग्राहान् (16-10) – न सद्ग्राहाः **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सद्ग्राह इत्यत्र सत् इति उपपदे ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। पुं. द्वि.वि. ब.व.।

487. असन्न्यस्तसङ्कल्पः (6-2) – सन्न्यस्ताः सङ्कल्पाः येन सः सन्न्यस्तसङ्कल्पः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। न सन्न्यस्तसङ्कल्पः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सन्न्यस्त इत्यत्र सम्पूर्वकात् नि पूर्वकाच्च अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, सङ्कल्प इत्यत्र सम्पूर्वकात् कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **भावे** (पा.सू. 3-3-18) इति घञ्, **कृपो रो लः** (पा.सू. 8-2-18) इति रस्य लः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. प्र.वि. ए.व.।

488. असपत्नम् (2-8) – अविद्यमानः सपत्नः यस्य सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361 इति वार्तिकेन समासः उत्तरपदलोपश्च। सपत्न इत्यत्र सपत्नीव सपत्नः, इवार्थे अकारान्तः निपातनात् सिद्धः **व्यन् सपत्ने** 4-1-145 इति निर्देशात्। नपुं. द्वि.वि. ए.व.।

489. असमर्थः (12-10) – न समर्थः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। समर्थ इत्यत्र सम्-पूर्वकात् अर्थ्-धातोः (अर्थ उपयाच्ञाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। पुं. प्र.वि. ए.व.।

490. असंमूढः (5-20, 10-3, 15-19) – न सम्मूढः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सम्मूढ इत्यत्र सम्पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः। पुं. प्र.वि. ए.व.।

491. असम्मोहः (10-4) – न सम्मोहः, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सम्मोह इत्यत्र सम्पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

492. असंयतात्मना (6-36) – न संयतात्मना, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। संयतात्मा इत्यत्र संयतः आत्मा येन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। संयत इत्यत्र सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

493. असंशयम् (6-35, 7-1) – न संशयः तत्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। संशय इत्यत्र सम्पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. प्र.वि. ए.व.।

494. असंशयः (18-68) – अविद्यमानः संशयः यस्मिन् सः, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति वार्तिकेन समासः। संशय इत्यत्र सम्पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

495. असि (4-3,36, 8-2, 10-17, 11-38,40,42,43,52,53, 12-10,11, 16-5, 18-64,65) – अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्। लटः सिप्। अस् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **तासस्त्योर्लोपः** (पा.सू. 7-4-50) इति सस्य लोपः। लट्, म.पु. ए.व.।

496. असितः (10-13) – कश्चन ऋषिः। न सितः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सित इत्यत्र सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **अञ्जिघृसिभ्यः क्तः** (उणा. 3-81) इति सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

497. असिद्धौ (4-22) – न सिद्धौ, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सिद्धि इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्यये सिद्धि इति। स्त्री. स.वि. ए.व.।

498. असुखम् (9-33) – अविद्यमानं सुखं यस्मिन् तम्, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

499. असृष्टान्नम् (17-13) – असृष्टम् अन्नं यस्मिन् सः, तम् – असृष्टान्नम्। **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। असृष्ट इत्यत्र न सृष्टम् असृष्टम् इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। सृष्ट इत्यत्र सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) क्त-प्रत्ययः **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. द्वि.वि. ए.व.।

500. असौ (11-26, 16-14) – अदस् सु, **अदस औ सुलोपश्च** (पा.सू. 7-2-107) इति औ-आदेशः सुलोपश्च। अदस् इत्यत्र नञ् इति उपपदे दस्-धातोः (दसु उपक्षये, दिवादिः, सि.कौ. - धा.सं. 1213) बाहुलकात् क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. प्र.वि. ए.व.।

501. अस्ति (2-40,42,66, 3-22, 4-31,40, 6-16, 7-7, 8-5, 9-19, 10-18,19,39,40, 11-43, 16-13,15, 18-40) – अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः सिप्। अस् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्, प्र.पु. ए.व.।

502. अस्तु (2-47, 3-19, 11-31,39,40) – अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लोट्, लोटः तिप्। अस् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **एरुः** (पा.सू. 3-4-86) इति इकारस्य उकारः। लोट्, प्र.पु. ए.व.।

503. अस्थिरम् (6-26) – न स्थिरम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। स्थिर इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति उणादिसूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. प्र.वि. ए.व.।

504. अस्मदीयैः (11-26) – अस्मद्-शब्दात् **युष्मदस्मदोरन्यतरस्यां खञ् च** (पा.सू. 4-3-1) इति सूत्रेण छ-प्रत्ययः, अस्मद् छ, **आयनेयीनीयियः फढखछघां प्रत्ययायादीनाम्** (पा.सू. 7-1-2) इति सूत्रेण छस्थाने ईय्-आदेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. तृ.वि. ब.व.।

505. अस्माकम् (1-7,10) – अस्मद् आम्, **साम आकम्** (पा.सू. 7-1-33) इति आकम् आदेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. ब.व.।

506. अस्मात् (1-39) – इदम् ङसि, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति ङसेः स्थाने स्मात्-आदेशः, **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः अस्मात्। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. पं.वि. ए.व.।

507. अस्मान् (1-36) – अस्मद् शस्, **द्वितीयायां च** (पा.सू. 7-2-87) इति आत्वम्, **शसो न** (पा.सू. 7-1-29) इति नकारादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

508. अस्माभिः (1-39) – अस्मद् भिस्, **युष्मदस्मदोरनादेशे** (पा.सू. 7-2-86) इति अन्त्यस्य स्थाने आकारादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. तृ.वि. ब.व.।

509. अस्मि (7-8,9,9,10,11, 10-21,22,22,22,22,23,23,24,25,25,28,28,28,29,29,30,31,31,31,33,36,36,36,37,38,38,38, 11-32,45,51, 15-18, 16-15, 18-55,73) – अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः स्थाने मिप्। अस् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्, उ.पु. ए.व.।

510. अस्मिन् (1-22, 2-13, 3-3, 8-2, 13-22, 14-11, 16-6) – इदम् ङि, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अः, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति ङेः स्मिन्, **हलि लोपः** (पा.सू. 7-2-113) इति इद् इत्यस्य लोपः।

इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. स.वि. ए.व.।

511. अस्य (2-17,40,49,65,67, 3-18,34,40, 6-39, 9-3,17, 11-18,38,43,52, 13-21, 15-3) – इदम् ङस्, **त्यदादीनामः**(पा.सू. 7-2-102) इति अन्त्यस्य अः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति स्य-आदेशः, **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. ष.वि. ए.व.।

512. अस्याम् (2-72) – इदम् ङि, **त्यदादीनामः** (पा.सू. 7-2-102) इति अन्त्यस्य अः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **ङेराम्नद्याम्नीभ्यः** (पा.सू. 7-3-116) इति आम्, **सर्वनाम्नः स्याड्ढ्रस्वश्च** (पा.सू. 7-3-114) इति स्याट्। **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. स.वि. ए.व.।

513. अस्वर्ग्यम् (2-2) – न स्वर्ग्यम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। स्वर्ग्य इत्यत्र स्वर्ग-शब्दात् **गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत्** इति यत्। स्वर्ग इत्यत्र सु-पूर्वकात् अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **अकर्तीर च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

514. अहत्वा (2-5) – न हत्वा, **नञ्** (पा.सू 2-2-6) इति समासः, हत्वा इत्यत्र हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा। **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति नलोपः। अव्ययम्।

515. अहम् (1-22,23, 2-4,7,12, 3-2,23,24,27, 4-1,5,7,11, 6-30,33,34, 7-2,6,8,10,11,12,17,21,25,26, 8-4,14, 9-7,4,16,16,16,16,16,16,16,17,19,19,19,22,24,26,29,29, 10-1,2,8,11,17,20,20,21,21,23,24,25,28,29,29,30,30,31,32,32,33,34,35,35,36,36,37,38,39,42, 11-23,42,44,46,48,53,54, 12-7, 14-3,4,27, 15-13,14,15,15,15,18, 16-14,14,14,19, 18-66,70,74,75) – अस्मद् सु, **ङे प्रथमयोरम्** (पा.सू. 7-1-28) इति अम्, **त्वाहौ सौ** (पा.सू. 7-1-94) इति अह-आदेशः भवति। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. प्र.वि. ए.व.।

516. अहङ्कारम् (16-18, 18-53,69) – अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तीर च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्।पुं. द्वि.वि. ए.व.।

517. अहङ्कारविमूढात्मा (3-27) – अहङ्कारेण विमूढः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, अहङ्कारविमूढः आत्मा यस्य सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। अहङ्कार इत्यत्र अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तीर च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। विमूढ इत्यत्र विपूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् मनिण्-प्रत्ययः। पुं. प्र.वि. ए.व.।

518. अहङ्कारः (7-4, 13-5) – अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। पुं. प्र.वि. ए.व.।

519. अहङ्कारात् (18-58) – अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। पुं. पं.वि. ए.व.।

520. अहङ्कृतः (18-17) – अहं करोमि, अहम् इति उपपदात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुगागमः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। पुं. प्र.वि. ए.व.।

521. अहरागमे (8-18,19) – अह्नः आगमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। अहन् इत्यत्र नञि उपपदे **नञि जहातेः** (उणा. 1-156) इति उणादिसूत्रेण हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) कनिन्-प्रत्ययः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **रोऽसुपि** (पा.सू. 8-2-69) इति नस्य रः। पुं. स.वि. ए.व.।

522. अहः (8-17,24) – नञि उपपदे **नञि जहातेः** (उणा. 1-156) इति उणादिसूत्रेण हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) कनिन्-प्रत्ययः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **रोऽसुपि** (पा.सू. 8-2-69) इति नस्य रः। नपुं. द्वि.वि. ए.व.।

523. अहिताः (2-36, 16-9) – न हिताः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। हित इत्यत्र हिधातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1257) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। पुं. प्र.वि. ब.व.।

524. अहिंसा (1-5, 13-7, 16-2, 17-14) – न हिंसा, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। हिंसा इत्यत्र हिस्-धातोः (हिसि हिसायाम्, रुधादिः, सि.कौ. - धा.सं. 1456) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

525. अहैतुकम् (18-22) – न हैतुकम्, **नञ्** (पा.सू 2-2-6) इति समासः। **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। हेतुशब्दात् **चरति** (पा.सू. 4-4-8) इति ठक्, **इसुसुक्तान्तात् कः** (पा.सू. 7-3-51) इति ठस्य कः। हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः। नपुं. प्र.वि. ए.व.।

526. अहो (1-45) – हा-धातोः (ओहाङ् गतौ, जुहोत्यादिः, सि.कौ. - धा.सं. 1089) बाहुलकात् डो-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

527. अहोरात्रविदः (8-17) – अहोरात्रं विदन्ति, अहोरात्र इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। अहोरात्र इत्यत्र अहश्च रात्रिश्च अहोरात्रः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **अहस्सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः** (पा.सू. 5-4-87) इति समासान्तः टच्-प्रत्ययः। **रात्राह्नाहाः पुंसि** (पा.सू. 2-4-29) इति पुंलिङ्गे प्रयोगः। अहन् इत्यत्र नञि उपपदे **नञि जहातेः**

(उणा. 1-156) इति उणादिसूत्रेण हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) कनिन्-प्रत्ययः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **रोऽसुपि** (पा.सू. 8-2-69) इति नस्य रः। रात्रि इत्यत्र रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **राशदिभ्यां त्रिप्** (उणा. 4-67) इति त्रिप्-प्रत्ययः। पुं. प्र.वि. ब.व.।

528. अंशः (15-7) – अंश्-धातोः (अंश विभाजने, चुरादिः, इति वाचस्पत्यम्) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण कर्मणि घञ्। पुं. प्र.वि. ए.व.।

529. अंशुमान् (10-21) – अंशु इत्यस्मात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, अंशुमत्। अंशु इत्यत्र अंश्-धातोः (अंश विभाजने, चुरादिः, इति वाचस्पत्यम्) **मृगय्वादयश्च** (उणा. सू. 1-37) इति कु-प्रत्ययः। पुं. प्र.वि. ए.व.।

530. आकाशस्थितः (9-6) – आकाशे स्थितः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, अथवा **सह सुपा** (पा.सू. 2-1-4) इति समासः। आकाश इत्यत्र आङ्-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। स्थित इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. प्र.वि. ए.व.।

531. आकाशम् (13-32) – आङ्-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

532. आख्यातम् (18-63) – आङ्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः। नपुं. प्र.वि. ए.व.।

533. आख्याहि (11-31) – आङ्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) लोट्, लोटः सिप्। आ ख्या सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः। लोट्. म.पु. ए.व.।

534. आगच्छेत् (3-34) – आङ्पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) लङ्, लङः तिप्। गम् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छ-आदेशः, **यासुट्परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विधिलिङ्, प्र.पु. ए.व.।

535. आगताः (4-10,14-2) – आङ्पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः। पुं. प्र.वि. ब.व.।

536. आगमापायिनः (2-14) – आगमश्य अपायश्च आगमापायौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, आगमापाय इति शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। आगम इत्यत्र आङ्पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्। अपाय इत्यत्र अप-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ब.व.।

537. आचरतः (4-23) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. ष.वि. ए.व.।

538. आचरति (3-21, 16-22) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, लटः तिप्। चर् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

539. आचरन् (3-19) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

540. आचारः (16-7) – आङ्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्। **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ए.व.।

541. आचार्य (1-3) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. सम्बो.वि. ए.व.।

542. आचार्यम् (1-2) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

543. आचार्यान् (1-26) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. द्वि.वि. ब.व.।

544. आचार्याः (1-34) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ब.व.।

545. आचार्योपासनम् (13-7) – आचार्यस्य उपासनम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आचार्य इत्यत्र आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। उपासन इत्यत्र उपपूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। नपुं. प्र.वि. ए.व.।

546. आज्यम् (9-16) – आङ्-पूर्वात् अञ्ज्-धातोः (अजि भाषायाम्, चुरादिः, सि.कौ. - धा.सं. 1786) **आङ्पूर्वादञ्जेः संज्ञायामुपसङ्ख्यानम्** (पा.सू. 1925) इति क्यप्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

547. आढ्यः (16-15) – आध्यायति, आङ्पूर्वकात् ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 908) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति साधुता। पुं. प्र.वि. ए.व.।

548. आततायिनः (1-36) – आतत इत्युपपदे अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। आतत इत्यत्र आङ्पूर्वकात् तन्-धातोः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। पुं. द्वि.वि. ब.व.।

549. आतिष्ठ (4-42)– आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लोट्, लोटः सिप्। आ स्था सिप्, **कर्तरि शप्** (पा.सू. 3-1-68), **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति तिष्ठादेशः। **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्, म.पु. ए.व.।

550. आत्थ (11-3) – ब्रूधातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः सिप्। ब्रू सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुवः पञ्चानामादित आहो ब्रुवः** (पा.सू. 3-4-84) इति सिपः थल्, ब्रूधातोः आह्-आदेशः। लट्, म.पु. ए.व.।

551. आत्मकारणात् (3-13) – आत्मा एव कारणं तस्मात्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। कारण इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. पं.वि. ए.व.।

552. आत्मतृप्तः (3-17) – आत्मनि तृप्तः, **सप्तमी** इति योगविभागात् समासः, अथवा **सह सुपा** (पा.सू. 2-1-4) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। तृप्त इत्यत्र तृप्-धातोः (तृप तृप्तौ, तुदादिः, सि.कौ. - धा.सं. 1307) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

553. आत्मनः (4-42, 5-16, 6-5,5,6,11,19, 8-12, 10-18, 16-21,22, 17-18, 18-39) – **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. ष.वि. ए.व.।

554. आत्मना (2-55, 3-43, 6-5,5,6,20, 10-15, 13-14,28) – **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. तृ.वि. ए.व.।

555. आत्मनि (2-55, 3-17, 4-35,38, 5-21, 6-18,20,26,29, 13-14, 15-11) – **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. स.वि. ए.व.।

556. आत्मपरदेहेषु (16-18) – आत्मा च परे च आत्मपराः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, आत्मपराणां देहाः. **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ब.व.।

557. आत्मबुद्धिप्रसादजम् (18-37) – आत्मनः बुद्धिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, आत्मबुद्धेः प्रसादः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, आत्मबुद्धिप्रसादात् जातः तम्, आत्मबुद्धिप्रसाद इति उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति ड-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। प्रसाद इत्यत्र प्रपूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 990) **भावे** (पा.सू. 3-3-18) इति घञ्। नपुं. प्र.वि. ए.व.।

558. आत्मभावस्थः (10-11) – आत्मनः भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, आत्मभावे (पा.सू. 3-3-18) तिष्ठति, आत्मभाव इत्युपपदे स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो**

**ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

559. आत्ममायया (4-6) – आत्मनः माया तया, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। माया इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **माच्छाससिसूभ्यो यः** (उणा. 4-109) इति यप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

560. आत्मयोगात् (11-47) – आत्मनः योगः, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. पं.वि. ए.व.।

561. आत्मरतिः (3-17) – आत्मनि रतिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। रति इत्यत्र रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 856) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति मलोपः। पुं. प्र.वि. ए.व.।

562. आत्मवन्तम् (4-41) – आत्मा अस्य अस्ति, तम्, आत्मन् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94)। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. द्वि.वि. ए.व.।

563. आत्मवश्यैः (2-64) – आत्मनः वश्यानि तैः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। वश्य इत्यत्र **वशं गतः** (पा.सू. 4-4-86) इति यत्। नपुं. तृ.वि. ब.व.।

564. आत्मवान् (2-45) – आत्मा अस्य अस्ति, आत्मन् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. प्र.वि. ए.व.।

565. आत्मविनिग्रहः (13-7, 17-16) – आत्मनः विनिग्रहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। विनिग्रह इत्यत्र विनिपूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

566. आत्मविभूतयः (10-16,19) – आत्मनः विभूतयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। विभूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः। स्त्री. प्र.वि. ब.व.।

567. आत्मविशुद्धये (6-12) – आत्मनः विशुद्धिः तस्यै, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। विशुद्धि इत्यत्र वि-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः,

सि.कौ. - धा.सं. 1191) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **षस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. च.वि. ए.व.।

568. आत्मशुद्धये (5-11) - आत्मनः शुद्धिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। शुद्धि इत्यत्र शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **षस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. च.वि. ए.व.।

569. आत्मसंभाविताः (16-17) – आत्मना सम्भाविताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। सम्भावित इत्यत्र सम्पूर्वकात् भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ब.व.।

570. आत्मसंयमयोगाग्नौ (4-27) – आत्मनि संयमः आत्मसंयमः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, अथवा **सह सुपा** (पा.सू. 2-1-4) इति समासः, योग एव अग्निः योगाग्निः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। आत्मसंयमः एव योगाग्निः **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। संयम इत्यत्र सम्पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **यमः समुपनिविषु च** (पा.सू. 3-3-63) इति सूत्रेण अप्-प्रत्ययः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च। पुं. स.वि. ए.व.।

571. आत्मसंस्थम् (6-25) – आत्मनि संस्था यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। संस्था इत्यत्र सम्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

572. आत्मा (6-5,5,6,6,6, 7-18, 9-5, 10-20, 13-32) – **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. प्र.वि. ए.व.।

573. आत्मानम् (3-4, 4-7, 6-5,5,10,15,20,28,29, 9-34, 10-15, 11-3,4, 13-24,28,29, 18-16,51) – **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. द्वि.वि. ए.व.।

574. आत्मौपम्येन (6-32) – आत्मनः औपम्यम्, तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। औपम्य इत्यत्र उपमा-शब्दात् **चतुर्वर्णादीनां स्वार्थे**

**उपसङ्ख्यानम्** (वा. 3091) इति वार्तिकेन ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। उपमा इत्यत्र उपपूर्वकात् माधातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. तृ.वि. ए.व.।

575. आत्यन्तिकम् (6-21) – **अध्यात्मादेष्ठञिष्यते** (वा. 2839) इति अत्यन्तशब्दात् ठञ्, **ठस्येकः** (पा.सू. 7-3-50) इति इकादेशः। अत्यन्त इत्यत्र अन्तमतिक्रान्तः **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा. 1336) इति समासः। अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. द्वि.वि. ए.व.।

576. आदत्ते (5-15) – आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लट्, लटः त। **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (पा.सू. 1-3-72) इति आत्मनेपदम्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-74) इति श्लुः, **श्लौ** इति द्वित्वम्, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। लट्, प्र.पु. ए.व.।

577. आदर्शः (3-38) – आङ्पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **हलश्च** (पा.सू. 3-3-121) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

578. आदिकर्त्रे (11-37) – आदिः कर्ता तस्मै, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः। कर्तृ इत्यत्र कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. च.वि. ए.व.।

579. आदित्यगतम् (15-12) – आदित्यं गतम्, **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति द्वितीयातत्पुरुषः। आदित्य इत्यत्र अदिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। गत इत्यत्र गम्-धातोः (गम्ऌ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. प्र.वि. ए.व.।

580. आदित्यवत् (5-16) – आदित्येन तुल्यं (प्रकाशयति), आदित्य इति शब्दात् **तेन तुल्यं क्रिया चेद्वतिः** (पा.सू. 5-1-115) इति वतिप्रत्ययः। आदित्य इत्यत्र अदिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। अव्ययम्।

581. आदित्यवर्णम् (8-9) – आदित्यस्य वर्णः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, आदित्यवर्णः इव वर्णः यस्य, **सप्तम्युपमानपूर्वपदस्य उत्तरपदलोपश्च वक्तव्यः** (वा. 1362) इति वा समासः उत्तरपदलोपश्च। आदित्य इत्यत्र अदिति-शब्दात्

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, क्र्यादिः, सि.कौ. - धा.सं. 1486) **कृवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. द्वि.वि. ए.व.।

582. आदित्यानाम् (10-21) – अदिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. ष.वि. ब.व.।

583. आदित्यान् (11-6) – अदिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. द्वि.वि. ब.व.।

584. आदिदेवम् (10-12) – आदिः देवः तम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दाधातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किप्रत्ययः। देव इति दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, । पुं. द्वि.वि. ए.व.।

585. आदिदेवः (11-38) – आदिः देवः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

586. आदिम् (11-16) – आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ए.व.।

587. आदिः (10-2,20,32, 15-3) – आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. प्र.वि. ए.व.।

588. आदौ (3-41, 4-4) – आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. स.वि. ए.व.।

589. आद्यन्तवन्तः (5-22) – आदिश्च अन्तश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, आद्यन्तौ स्तः एषु अथवा आद्यन्तौ स्तः एषाम् इति, **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः**

**किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. प्र.वि. ब.व.।

590. आद्यम् (8-28, 11-31, 15-4) – आदिशब्दात् **दिगादिभ्यो यत्** (पा.सू. 4-3-54) इति यत्, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. प्र.वि. ए.व.।

591. आधत्स्व (12-8) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लोट्, धा थास्, **कर्तरि शप्** (पा.सू. 3-1-68), **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-74) इति श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारलोपः, **थासः से** (पा.सू. 6-4-80), **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति वादेशः, **दधस्तथोश्च** (पा.सू. 8-2-38) इति धद्, **खरि च** (8-4-55) इति चर्त्वम्। लोट्, म.पु. ए.व.।

592. आधाय (5-10, 8-12) – आङ्पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

593. आधिपत्यम् (2-8) – अधिपति इति शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। अधिपति इत्यत्र अधि-पूर्वकात् पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डतिः** (उणा.सू. 4-57) डतिः, डित्त्वसामर्थ्यात् टेर्लोपः। नपुं. द्वि.वि. ए.व.।

594. आपन्नम् (7-24) – आङ्पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दकारस्य तकारस्य च नत्वम्। पुं. द्वि.वि. ए.व.।

595. आपन्नाः (16-20) – आङ्पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दकारस्य तकारस्य च नत्वम्। पुं. प्र.वि. ब.व.।

596. आपः (2-23,70, 7-4) – आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **आप्नोतेर्ह्रस्वश्च** (उणा. 2-59) इति क्विप्-प्रत्ययः ह्रस्वः च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। प्र.वि. नित्य.ब.व.।

597. आपूर्य (11-30) – आङ्पूर्वकात् पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वः ल्यप्-आदेशः, **उदोष्ठ्यपूर्वस्य** (पा.सू. 7-1-102) इति ऋवर्णस्य उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः, **हलि च** (पा.सू. 8-2-77) इति दीर्घः। अव्ययम्।

598. आपूर्यमाणम् (2-70) – आङ्पूर्वकात् पॄधातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) कर्मणि लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्। **उदोष्ठ्यपूर्वस्य** (पा.सू. 7-1-102) इति ऋवर्णस्य उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः, **हलि च** (पा.सू. 8-2-77) इति दीर्घः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति नस्य णत्वम्। पुं. द्वि.वि. ए.व.।

599. आप्तुम् (5-6, 12-9) – आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **तुमुन्ण्वुलौ क्रियायाम् क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः। अव्ययम्।

600. आप्नुयाम् (3-2) – आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) विधिलिङ्, लिङः मिप्। **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नु, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, मिपः **तस्-थस्-थ-मिपां तां-तम्-त-अमः** (पा.सू. 3-4-101) इति मिपः अम्। विधिलिङ्, उ.पु. ए.व.।

601. आप्नुवन्ति (8-15) – आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लट्, लटः झि। आप् झि, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

602. आप्नोति (7-2, 3-19, 4-21, 5-12, 18-47,50) – आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लट्, लटः तिप्। आप् तिप्, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

603. आब्रह्मभुवनात् (8-16) – ब्रह्मणः भुवनम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, ब्रह्मभुवनात् आरभ्य, **आङ्मर्यादाभिविध्योः** (पा.सू. 2-1-13) इति विकल्पेन समासः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। भुवन इत्यत्र **भूसूधूभ्रस्जिभ्यश्छन्दसि** (उणा. 2-81) इति उणादिसूत्रेण भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) क्युन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति उवङ्। अव्ययम्।

604. आयुधानाम् (10-28) – **घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्** (वा. 2204) इति वार्तिकेन आङ्पूर्वकात् युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

605. आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः (17-8) – आयुश्च सत्त्वं च बलं च आरोग्यं च सुखं च प्रीतिश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। आयुःसत्त्वबलारोग्यसुखप्रीतीनां विवर्धनाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आयुस् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **एतेर्णिच्च** (उणा. 2-118) इति उसि-प्रत्ययः, अयं च णित् इति कारणात् **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। सत्त्व इत्यत्र सत् इत्यस्मात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आरोग्य इत्यत्र अरोग-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अरोग इत्यत्र न रोगः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, रोग इत्यत्र **पदरुजविशस्पृशो घञ्** (पा.सू. 3-3-16) इति सूत्रेण रुज्-धातोः (रुजो भङ्गे, तुदादिः, सि.कौ. - धा.सं. 1416) घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। प्रीति इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः। विवर्धन इत्यत्र वि-पूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. प्र.वि. ब.व.।

606. आरभते (3-7) – आङ्पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) लट्, लटः त-आदेशः। रभ् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

607. आरभ्यते (18-25) – आङ्पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) कर्मणि लट्, लटः त-आदेशः। रभ् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.वि. ए.व.।

608. आरम्भः (14-12) – आङ्पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) **भावे** (पा.सू. 3-3-18) इति घञ्। **रभेरशब्लिटोः** (पा.सू. 7-1-63) इति नुम्। पुं. प्र.वि. ए.व.।

609. आरुरुक्षोः (6-3) – आङ्पूर्वकात् रुह्-धातोः (रुह बीजजन्मनि प्रादुर्भावे च, भ्वादिः, सि.कौ. - धा.सं. 859) सन्-प्रत्ययः, **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **हो ढः** (पा.सू. 8-2-31) इति हस्य ढत्वम्, **षढोः कः सि** (पा.सू. 8-2-41) इति ढस्य कादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उप्रत्ययः। पुं. ष.वि. ए.व.।

610. आर्जवम् (13-7, 16-1, 17-14, 18-42) – ऋजोः भावः, **इगन्ताच्च लघुपूर्वात्** (पा.सू. 5-1-131) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः,**ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। ऋजु इत्यत्र ऋज्-धातोः (ऋज् गतिस्थानार्जनोपार्जनेषु, भ्वादिः, सि.कौ. - धा.सं. 176) **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति सूत्रेण कु-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

611. आर्तः (7-16) – आङ्पूर्वकात् ऋधातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **उपसर्गादृति धातौ** (पा.सू. 6-1-91) इति वृद्धिः एकादेशः। पुं. प्र.वि. ए.व.।

612. आवयोः (18-70) – अस्मद् ओस्, **युवावौ द्विवचने** (पा.सू. 7-2-92) इति आवादेशः, **योऽचि** (पा.सू. 7-2-89) इति यादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. द्वि.व.।

613. आवर्तते (8-26) – आङ्पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त-आदेशः। आ वृत् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः इति एत्वम्। लट्, प्र.पु. ए.व.।

614. आवर्तिनः (8-16) – आङ्पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

615. आविश्य (15-13, 17) – आङ्पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, तस्य स्थाने **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

616. आविष्टम् (2-1) – आङ्पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) अथवा **आदिकर्मणि क्तः कर्तरि च** (पा.सू. 3-4-71) इति वा कर्तरि क्त-प्रत्ययः, अथवा **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण कर्मणि क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

617. आविष्टः (1-28) – आङ्पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) अथवा **आदिकर्मणि क्तः कर्तरि च** (पा.सू. 3-4-71) इति वा कर्तरि क्त-प्रत्ययः, अथवा **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण कर्मणि क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

618. आवृतम् (3-38,39, 5-25) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

619. आवृतः (3-38) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

620. आवृता (18-32) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः, सि.कौ. - धा.सं. 1814) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. प्र.वि. ए.व.।

621. आवृताः (18-48) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

622. आवृत्तिम् (8-23) – आङ्पूर्वकात् वृत्-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. द्वि.वि. ए.व.।

623. आवृत्य (3-40, 13-13, 14-9) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यपि, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

624. आवेशितचेतसाम् (12-7) – आवेशितं चेतः यैः तेषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। आवेशित इत्यत्र आङ्पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः वेशि इत्यस्मात् ण्यन्तात् **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

625. आवेश्य (8-10, 12-2) – आङ्पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, तस्मात् **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। अव्ययम्।

626. आव्रियते (3-38) – आङ्पूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) कर्मणि लट्, लटः त-आदेशः। आ वृ त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्। कर्मणि लट्, प्र.पु. ए.व.।

627. आशयात् (15-8) – आङ्पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. पं.वि. ए.व.।

628. आशापाशशतैः (16-12) – आशाः एव पाशाः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। आशापाशानां शतानि, **षष्ठी** (पा.सू. 2-2-8) इति समासः। आशा इत्यत्र आङ्पूर्वकात् अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पाश इत्यत्र पश्-धातोः (पश बन्धने, चुरादिः, सि.कौ. - धा.सं. 1720) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, ततः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। शत इति **पङ्क्ति-विंशति-त्रिंशत्-चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तति-अशीति-नवति-शतम्** (पा.सू. 5-1-59) इति निपातनात् निष्पन्नम्, अत्र दशानां दशतां स्थाने श-आदेशः त-प्रत्ययश्च निपात्यते, दशत् इति शब्दः **पञ्चद्दशतौ वर्गे वा** (पा.सू. 5-1-60) इति सूत्रेण दश परिमाणम् अस्य इत्यर्थे निपात्यते। नपुं. तृ.वि. ब.व.।

629. आशु (2-65) – अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-1) इति उण्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

630. आश्चर्यवत् (2-29,29,29) – आश्चर्य-शब्दात् **तदर्हति** (पा.सू. 5-1-63) इति वति-प्रत्ययः। आश्चर्य इत्यत्र आङ्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **चेरराङि चागुरौ** (वा. 1925) इति यत्-प्रत्ययः, **आश्चर्यमनित्ये** (पा.सू. 6-1-147) इति सुट्। अव्ययम्।

631. आश्चर्याणि (11-6) – आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **चेरराङि चागुरौ** (वा. 1925) इति यत्, **आश्चर्यमनित्ये** (पा.सू. 6-1-147) इति सुट्। नपुं. द्वि.वि. ब.व.।

632. आश्रयेत् (1-36) – आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) लिङ्, लिङः तिप्। श्रि तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। वि.लि, प्र.पु. ए.व.।

633. आश्रितम् (9-11) – आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः अभावः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. द्वि.वि. ए.व.।

634. आश्रितः (12-11, 15-14) – आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) कर्तरि क्त-प्रत्ययः, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः अभावः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

635. आश्रिताः (7-15, 9-13) – आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) कर्तरि क्तप्रत्ययः। **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः अभावः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

636. आश्रित्य (7-29, 16-10, 18-59) – आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

637. आश्वासयामास (11-50) – आङ्पूर्वकात् श्वस्-धातोः (श्वस प्राणने, अदादिः, सि.कौ. - धा.सं. 1069) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, तस्मात् लिट् लिटः तिप्, **कास्प्रत्ययात् आममन्त्रे लिटि** (पा.सू. 3-1-35) इति आम्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **आमः** (पा.सू. 2-4-81) इति लिटः लुक्, **कृञ्चानुप्रयुज्यते लिटि** (पा.सू. 3-1-40) इति अस्-धातोः लिटि अनुप्रयोगः, **परस्मैपदानां णलतुसस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति मिपः णल्-आदेशः, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः, **अत आदेः** (पा.सू. 7-4-70) इति अभ्यासस्य दीर्घः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। लिट्, प्र.पु. ए.व.।

638. आसक्तमनाः (7-1) – आसक्तं मनः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। आसक्त इत्यत्र आङ्पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। मनस् इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं.1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. प्र.वि. ए.व.।

639. आसने (6-12) – आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति अधिकरणार्थे ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। नपुं. स.वि. ए.व.।

640. आसम् (2-12) – अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लङ्, लङः मिप्। अस् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **तस्थस्थमिपां तांतंतामः** (पा.सू. 3-4-101) इति अम्, **आडजादीनाम्** (पा.सू. 6-4-72) इति आट्। लङ्, उ.वि. ए.व.।

641. आसाद्य (9-20) – आङ्पूर्वकात् सद्-धातोः (षदॢँ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 990) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। अव्ययम्।

642. आसीत (2-54,61, 6-14) – आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लिङ्, लिङः त-आदेशः। आस् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः, लुक्, **लिङस्सीयुट्** (पा.सू. 3-4-102) इति सीयुट्-आगमः, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः। वि.लि, प्र.वि. ए.व.।

643. आसीनम् (9-9) – आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **ईदासः** (पा.सू. 7-2-83) इति आन इत्यस्य आकारस्य ईत्-आदेशः। पुं. द्वि.वि. ए.व.।

644. आसीनः (14-23) – आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **ईदासः** (पा.सू. 7-2-83) इति आन इत्यस्य आकारस्य ईत्-आदेशः। पुं. प्र.वि. ए.व.।

645. आसुरनिश्चयान् (17-6) – आसुरः निश्चयः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। आसुर इत्यत्र असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः। निश्चय इत्यत्र निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251)

**ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. द्वि.वि. ब.व.।

646. आसुरम् (7-15, 16-6) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

647. आसुरः (16-6) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

648. आसुराः (16-7) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः। पुं. प्र.वि. ब.व.।

649. आसुरी (16-5) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः, स्त्रियाम् **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। स्त्री. प्र.वि. ए.व.।

650. आसुरीषु (16-19) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः, स्त्रियाम् **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। स्त्री. स.वि. ब.व.।

651. आसुरीम् (9-22, 16-4,20) – असुर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः, स्त्रियाम् **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। स्त्री. द्वि.वि. ए.व.।

652. आस्तिक्यम् (18-42) – आस्तिक-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। आस्तिक इत्यत्र अस्ति-शब्दात् **अस्तिनास्तिदिष्टं मतिः** (पा.सू. 4-4-60) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इकादेशः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोप। अस्ति इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) बाहुलकात् तिक्-प्रत्ययः, विद्यमानतार्थे तिङन्तप्रतिरूपकम् अव्ययम् इदम्। नपुं. प्र.वि. ए.व.।

653. आस्ते (3-6, 5-13) – आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लट्, लटः त-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

654. आस्थाय (7-20) – आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

655. आस्थितः (5-4, 6-31, 7-18, 8-12) – आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य स्थाने इकारः। पुं. प्र.वि. ए.व.।

656. आस्थिताः (3-20) – आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य स्थाने इकारः। पुं. प्र.वि. ब.व.।

657. आह (1-21, 11-35) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः तिप्। ब्रू ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुवः पञ्चानामादितः आहो ब्रुवः** (पा.सू. 3-4-84) इति णलादेशः, धातोः आहादेशः। अथवा अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) लिटि प्रथमपुरुषैकवचने, मध्यमपुरुषबहुवचने, उत्तमपुरुषैकवचने च रूपम्। अह् तिप्, **परस्मैपदानां णलतुसस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति णल्, अह् थ, थस्थाने अ-आदेशः, अह् मिप्, मिपः णल्-आदेशः। **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः, **अत आदेः** (पा.सू. 7-4-70) इति अभ्यासस्य दीर्घः। लट्, प्र.पु. ए.व.।

658. आहवे (1-31) – आङ्पूर्वकात् ह्वेधातोः (ह्वेञ् स्पर्धायां शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 1008) **आङि युद्धे** (पा.सू. 3-3-73) इति अप्-प्रत्ययः, सम्प्रसारणञ्च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. स.वि. ए.व.।

659. आहारः (17-7) – आङ्पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ए.व.।

660. आहाराः (17-8,9) – आङ्पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ब.व.।

661. आहुः (3-42, 4-19, 8-21, 10-13, 14-16, 16-8) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः झि। ब्रू झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुवः पञ्चानामादितः आहो ब्रुवः** (पा.सू. 3-4-84) इति उस्-आदेशः, धातोः आहादेशः। अथवा अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) लिट्, लिटः झि। अह् झि, **परस्मैपदानां णलतुसस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति उस्-आदेशः। लट्, प्र.पु. ब.व.।

662. आहो (17-1) – आङ्पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) बाहुलकात् डो-प्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। अव्ययम्।

663. इक्ष्वाकवे (4-1) – इक्षु इति उपपदे आङ्-पूर्वकात् कृ-धातोः डुकृञ् करणे (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **मितद्र्वादिभ्य उपसङ्ख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः भवति, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, डित्त्वसामर्थ्यात् टेः लोपः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। इक्षु इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) क्सु-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **षढोः कः सि** (पा.सू. 8-2-41) इति षस्य कादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्। पुं. च.वि. ए.व.।

664. इङ्गते (6-19, 14-23) – इगि (इगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 153) इति परस्मैपदी, अत्र आत्मनेपद-प्रत्ययः आर्षः दृश्यते, तस्मात् लट्, लटः त। इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

665. इच्छ (12-9) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लोट्, लोटः सिप्, इष् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः, **छे च** इति तुक्, तस्य च **स्तोः श्चुना श्चुः** इति श्चुत्वम्, **सेर्ह्यपिच्च** इति हि, तस्य च **अतो हेः** इति लुक्। लोट्, म.पु. ए.व.।

666. इच्छति (7-21) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लट्, लटः तिप्, इष् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः, **छे च** (पा.सू. 6-1-73) इति तुक्, तस्य च **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। लट्, प्र.पु. ए.व.।

667. इच्छन्तः (8-11) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः, **छे च** (पा.सू. 6-1-73) इति तुक्, तस्य च **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

668. इच्छसि (11-7, 18-60,63) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लट्, लटः सिप्। इष् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः, **छे च** (पा.सू. 6-1-73) इति तुक्, तस्य च **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। लट्, म.पु. ए.व.।

669. इच्छा (13-6) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) श-प्रत्यये **इच्छा** (पा.सू. 3-3-101) इति सूत्रेण निपातनात् सिद्धम्। स्त्री. प्र.वि. ए.व.।

670. इच्छाद्वेषसमुत्थेन (7-27) – इच्छा च द्वेषश्च इच्छाद्वेषौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, ताभ्यां समुत्थः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। इच्छा इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) श-प्रत्यये **इच्छा** (पा.सू. 3-3-101) इति सूत्रेण निपातनात् सिद्धम्। द्वेष इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। समुत्थ इत्यत्र सम्-उद्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उदः स्थास्तम्भोः पूर्वस्य** (पा.सू. 8-4-61) इति सस्य पूर्वसवर्णादेशः। पुं. तृ.वि. ए.व.।

671. इच्छामि (1-35, 11-3,31,46, 8-1) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) लट्, लटः मिप्, इष् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः, **छे च** (पा.सू. 6-1-73) इति तुक्, तस्य च **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्, उ.पु. ए.व.।

672. इज्यते (17-11, 12) – यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) कर्मणि लट्, लटः त। यज् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

673. इज्यया (11-53) – यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **व्रजयजोर्भावे क्यप्** (पा.सू. 3-3-98) इति स्त्रियां क्यप्, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

674. इतरः (3-21) – इ इति पूर्वपदात् तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, अथवा अथवा इतं ज्ञानं करोति इत्यर्थे **तत्करोति तदाचष्टे** (ग.सू. 204) इति णिच्, बाहुलकात् अर-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः। इत इत्यत्र इ-धातोः इण् गतौ (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

675. इतः (7-5, 14-1) – इदम्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्, **इदम इश्** (पा.सू. 5-3-3) इति इश्-आदेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

676. इति (1-25,44, 2-9,42, 3-27,28, 4-3,4,14,16, 5-8,9, 6-2,8,18,36, 7-4,6,12,19, 8-13,21, 9-6, 10-8, 11-4,21,41,41,50, 13-1-1-11-18,22, 14-5,11,23, 15-17,20, 16-11,15, 17-2,11,16,20,23,24,25,26,27,27,28, 18-3,3,6,8,9,11,18,32,59,63,64,70,74) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

677. इदम् (1-10,21,28, 2-1,2,10,17, 3-31,38, 7-2,5,7,13, 8-22,28, 9-1,2,4, 10-42, 11-19,20,20,41,47,49,49,51,52, 12-20, 13-1, 14-2, 15-20, 16-13,13,21, 18-46,67) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) बाहुलकात् दमुक्-प्रत्ययः। इदम् सु, **स्वमोर्नपुंसकात्** (पा.सू. 7-1-23) इति सुलोपः। नपुं. प्र.वि. ए.व.।

678. इदानीम् (11-51, 18-36) – इदम् इत्यस्मात् **दानीं च** (पा.सू. 5-3-18) इति दानीम्-प्रत्ययः, **इदम इश्** (पा.सू. 5-3-3) इति इदमः स्थाने इश्-आदेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

679. इन्द्रियकर्माणि (4-27) – इन्द्रियाणां कर्माणि, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

680. इन्द्रियगोचराः (13-5) – इन्द्रियाणां गोचराः **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। गोचर इति गो-उपपदे चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च** (पा.सू. 3-3-115) इति सूत्रेण घप्रत्ययान्तं निपात्यते। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) इति डोप्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। पुं. प्र.वि. ब.व.।

681. इन्द्रियग्रामम् (6-24, 12-4) – इन्द्रियाणां ग्रामः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। ग्राम इत्यत्र ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **ग्रसेरा च** (उणा. 1-143) इति मन्-प्रत्ययः आत्वं च, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. द्वि.वि. ए.व.।

682. इन्द्रियस्य (3-34,34) – **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र

इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. ष.वि. ए.व.।

683. इन्द्रियाग्निषु (4-26) – इन्द्रियाणि एव अग्नयः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च। पुं. स.वि. ब.व.।

684. इन्द्रियाणाम् (2-8,67, 10-22) – **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. ष.वि. ब.व.।

685. इन्द्रियाणि (2-58, 60,61,68, 3-7,40,41,42, 4-26, 5-9, 13-5, 15-7) – **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

686. इन्द्रियारामः (3-16) – इन्द्रियैः आरामः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। आराम इत्यत्र आङ्पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 853) **हलश्च** (पा.सू. 3-3-121) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

687. इन्द्रियार्थान् (3-6) – इन्द्रियाणाम् अर्थाः तान्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

688. इन्द्रियार्थेभ्यः (2-58,68) – इन्द्रियाणाम् अर्थाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः।पुं. पं.वि. ब.व.।

689. इन्द्रियार्थेषु (5-9, 6-4, 13-8) – इन्द्रियाणाम् अर्थाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते,

घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। पुं. स.वि. ब.व.।

690. इन्द्रियेभ्यः (3-42) – **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. पं.वि. ब.व.।

691. इन्द्रियैः (2–64, 5-11) – **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

692. इमम् (1-28, 2-33, 4-1,2, 9-8,33, 13-33, 16-13, 17-7, 18-68,70,74,76) – इदम् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **दश्च** (पा.सू. 7-2-109) मकारादेशः, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

693. इमानि (18-13) – इदम् शस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **जश्शसोः शिः** इति शि-आदेशः, **नपुंसकस्य झलचः** (पा.सू. 7-1-72) इति नुम्, **सर्वनामस्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधादीर्घः, **दश्च** (पा.सू. 7-2-109) इति दकारस्य मकारः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ब.व.।

694. इमाम् (10-16, 18-17) – इदम् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **दश्च** (पा.सू. 7-2-109) इति मकारादेशः, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. द्वि.वि. ए.व.।

695. इमान् (2-39,42) – इदम् शस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **दश्च** (पा.सू. 7-2-109) इति मकारादेशः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति नकारः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ब.व.।

696. इमाः (3-24, 10-6) – इदम् शस् **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **दश्च** (पा.सू. 7-2-109) इति मकारादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. द्वि.वि. ब.व.।

697. इमे (1-33, 2-11,18, 3-24) – इदम् जस् पुंलिङ्गे, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **जसः शी** (पा.सू. 7-1-17) इति शी-आदेशः, **दश्च** (पा.सू. 7-2-109) इति दस्य मकारादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

698. इमौ (15-16) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) बाहुलकात् दमुक्-प्रत्ययः। इदम् औ, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **दश्च** (पा.सू. 7-2-109) इति मकारादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. द्वि.व.।

699. इयम् (7-4,5) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) बाहुलकात् दमुक्-प्रत्ययः। इदम् सु, **इदमो मः**(पा.सू. 7-2-108), **यः सौ** (पा.सू. 7-2-110) इति दस्य यादोशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. प्र.वि. ए.व.।

700. इव (1-30, 2-10,58,57, 3-2,2,36, 5-10, 6-34,38, 7-7, 11-44,44, 13-16, 15-8, 18-37,38,48) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **इण्शीभ्यां वन्** (उणा. 1-150) इति वन्-प्रत्ययः। अव्ययम्।

701. इषुभिः (2-4) – ईष्-धातोः (ईष उञ्छे, भ्वादिः, सि.कौ. - धा.सं.684) **ईषेः किच्च** (उणा. 1-13) इति उ-प्रत्ययः सः च कित्, आदेः इकारादेशश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. तृ.वि. ब.व.।

702. इष्टकामधुक् (3-10) – इष्टाश्च ते कामाश्च **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57), इष्टकामान् दोग्धि इति विग्रहे इष्टकाम इति उपपदे दुह्-धातोः (दुह प्रपूरणे, अदादिः, सि.कौ. - धा.सं.1014) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। इष्ट इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

703. इष्टम् (18-12) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

704. इष्टः (18-64,70) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

705. इष्टानिष्टोपपत्तिषु (13-9) – इष्टं च अनिष्टं च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **क्तेन नञ्विशेष्टेनानञ्** इति वा समासः। इष्टानिष्टयोः उपपत्तिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इष्ट इत्यत्र इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अनिष्ट इत्यत्र न इष्टम्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। उपपत्ति इत्यत्र उप-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **खरि च** (8-4-55) इति चर्त्वम्। स्त्री. स.वि. ब.व.।

706. इष्टान् (3-12) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ब.व.।

707. इष्टाः (17-9) – इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं.1351) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

708. इष्ट्वा (9-20) – यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, तुदादिः, सि.कौ. - धा.सं.1351) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

709. इह (2-5, 5-40,41,50, 3-16,18,37, 4-2,12,38, 5-19,23, 6-40, 7-2, 11-7,32, 15-3, 16-24, 17-28,28) – इदम्-शब्दात् **इदमो हः** (पा.सू. 5-3-11) इति ह-प्रत्ययः, **इदम इश्** (पा.सू. 5-3-3) इति सूत्रेण इदमः स्थाने इश्-आदेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

710. ईक्षते (6-29, 18-20) – ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं.610) लट्, लटः त। ईक्ष् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

711. ईड्यम् (11-44) – ईड्-धातोः (ईड स्तुतौ, अदादिः, सि.कौ. - धा.सं.1019) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत् प्रत्ययः। पुं. द्वि.वि. ए.व.।

712. ईदृक् (11-49) – इदम्-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं.988) **त्यदादिषु दृशोऽनालोचने कञ् च** (पा.सू. 3-2-60) इति क्विन्-प्रत्ययः, क्विनः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति नकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति तस्य निषेधः, **इदङ्किमोरीश्की** (पा.सू. 6-3-90) इति इदमः स्थाने ईश्-आदेशः, **क्विन्प्रत्ययस्य कुः** (पा.सू. 8-2-62) इति कुत्वम्। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

713. ईदृशम् (2-32, 6-42) – इदम्-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं.988) **त्यदादिषु दृशोऽनालोचने कञ् च** (पा.सू. 3-2-60) इति कञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति तस्य निषेधः, **इदङ्किमोरीश्की** (पा.सू. 6-3-90) इति इदमः स्थाने ईश्-आदेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

714. ईशम् (11-15,44) – ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं.1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. द्वि.वि. ए.व.।

715. ईश्वरभावः (18-43) – ईश्वरस्य भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं.1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-

1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

716. ईश्वरम् (13-28) – ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं.1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

717. ईश्वरः (4-6, 15-8,17, 16-14, 18-61) – ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं.1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

718. ईहते (7-22) – ईह्-धातोः (ईह चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं.632) लट्, लटः त, ईह् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ए.व.।

719. ईहन्ते (16-12) – ईह्-धातोः (ईह चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं.632) लट्, लटः झ, ईह् झ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ब.व.।

720. उक्तम् (11-1,41, 12-20, 13-18, 15-20) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः भवति। नपुं. प्र.वि. ए.व.।

721. उक्तः (1-24, 8-21, 13-22) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः भवति। पुं. प्र.वि. ए.व.।

722. उक्ताः (2-18) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः भवति। पुं. प्र.वि. ब.व.।

723. उक्त्वा (1-47, 2-9,9, 11-9,21,50) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः भवति। अव्ययम्।

724. उग्रकर्माणः (16-9) – उग्रं कर्म येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उग्र इत्यत्र उच्-धातोः (उच समवाये, दिवादिः, सि.कौ. - धा.सं.1223) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः चस्य च गकारः निपात्यते। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं.1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

725. उग्ररूपः (11-31) – उग्रं रूपं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उग्र इत्यत्र उच्-धातोः (उच समवाये, दिवादिः, सि.कौ. - धा.सं.1223) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः चस्य च गकारः निपात्यते। रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. प्र.वि. ए.व.।

726. उग्रम् (11-20) – उच्-धातोः (उच समवाये, दिवादिः, सि.कौ. - धा.सं.1223) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः चस्य च गकारः निपात्यते। नपुं. द्वि.वि. ए.व.।

727. उग्राः (11-30) – उच्-धातोः (उच समवाये, दिवादिः, सि.कौ. - धा.सं.1223) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः चस्य च गकारः निपात्यते। चस्य गकारः। पुं. प्र.वि. ब.व.।

728. उग्रैः (11-48) – उच्-धातोः (उच समवाये, दिवादिः, सि.कौ. - धा.सं.1223) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः चस्य च गकारः निपात्यते। नपुं. तृ.वि. ब.व.।

729. उच्चैः (1-12) – **उदि चेर्डैसिः** (उणा. 5-12) इति उत्पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं.1251) डैस्-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **खरि च** (8-4-55) इति उदः दकारस्य चर्त्वम्। अव्ययम्।

730. उच्चैःश्रवसम् (10-27) – उच्चैः श्रवसी यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उच्चैस् इत्यत्र **उदि चेर्डैसिः** (उणा. 5-12) इति उत्पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं.1251) डैस्-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **खरि च** (8-4-55) इति उदः दकारस्य चर्त्वम्। श्रवस् इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं.942) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ए.व.।

731. उच्छिष्टम् (17-10) – उत्पूर्वकात् शिष्-धातोः (शिष हिसायाम्, भ्वादिः, सि.कौ. - धा.सं.687) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

732. उच्छोषणम् (2-8) – उत्पूर्वकात् शुष्-धातोः (शुष शोषणे, दिवादिः, सि.कौ. - धा.सं.1183) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति युस्थाने अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

733. उच्यते (2-25,48,55,56, 3-6,40, 6-3,3,4,8,18, 8-1,3, 13-12,17,20,20, 14-25, 15-16, 17-14,15,16,27,28, 18-23,25,26,28) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) कर्मणि लट्, लटः त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

734. उत (1-40, 14-9,11) – उङ्-धातोः (उङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं.953) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

735. उत्क्रामति (15-8) – उत्पूर्वकात् क्रम्-धातोः (क्रमु पादविक्षेपे, भ्वादिः, सि.कौ. - धा.सं.473) लट्, लटः तिप्। क्रम् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **क्रमः परस्मैपदेषु** (पा.सू. 7-3-76) इति दीर्घः। लट्, प्र.पु. ए.व.।

736. उत्क्रामन्तम् (15-10) – उत्पूर्वकात् क्रम्-धातोः (क्रमु पादविक्षेपे, भ्वादिः, सि.कौ. - धा.सं.473) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **क्रमः परस्मैपदेषु** (पा.सू. 7-3-76) इति दीर्घः। पुं. द्वि.वि. ए.व.।

737. उत्तमविदाम् (14-14) – उत्तमान् विदन्ति, उत्तम इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं.1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति

समासः। उत्तम इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः वा, **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधाविद्धिर्न। पुं. ष.वि. ब.व.।

738. उत्तमम् (4-3, 6-27, 9-2, 14-1, 18-6) – उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञा वा निष्पन्नम्। **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधावृद्धिर्न। नपुं. प्र.वि. ए.व.।

739. उत्तमः (15-17,18) – उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञा वा निष्पन्नम्। **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधावृद्धिर्न। पुं. प्र.वि. ए.व.।

740. उत्तमाङ्गैः (11-27) – उत्तमानि अङ्गानि, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति समासः। उत्तम इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञः वा। **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधावृद्धिर्न। अङ्ग इत्यत्र अगि-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं.146) इदित्त्वात् **इदितो नुम्धातोः** (पा.सू. 7-1-58) इत्यनेन नुमागमः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, ततः अङ्ग् इत्यस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

741. उत्तमौजाः (1-6) – उत्तममम् ओजः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उत्तम इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञः वा, **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधावृद्धिर्न। ओजस् इत्यत्र उब्ज्-धातोः (उब्ज आर्जवे, तुदादिः, सि.कौ. - धा.सं.1303) **उब्जेर्बले बलोपश्च** (उणा. 4-191) इति असुन् बलोपश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

742. उत्तरायणम् (8-24) – उत्तरम् अयनम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। उत्तर इत्यत्र उत्पूर्वकात् तृ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं.969) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः। अयन इत्यत्र अयन्ते अनेन इति विग्रहे अय्-धातोः(अय गतौ, भ्वादिः, सि.कौ. - धा.सं.474) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। नपुं. प्र.वि. ए.व.।

743. उत्तिष्ठ (2-37, 4-42, 11-33) – उत्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) लोट्, लोटः सिप्। स्था सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति तिष्ठादेशः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्, म.पु. ए.व.।

744. उत्थिता (11-12) – उत्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति इकारादेशः, **उदः स्थास्तम्भोः पूर्वस्य** (पा.सू. 8-4-61) इति पूर्वसवर्णादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

745. उत्सन्नकुलधर्माणाम् (1-44) – कुलस्य धर्मः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, उत्सन्नः कुलधर्मः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उत्सन्न इत्यत्र उत्पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं.854) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दकारस्य तकारस्य च नत्वम्। कुल इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842)

**इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ब.व.।

746. उत्सादनार्थम् (17-19) – उत्सानदनाय इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। उत्सादन इत्यत्र उत्पूर्वकात् सद्-धातोः (षद्‌ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं.854) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, भ्वादिः, सि.कौ. - धा.सं.1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

747. उत्साद्यन्ते (1-43) – उत्पूर्वकात् सद्-धातोः (षद्‌ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं.854) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, ततः कर्मणि लट्, लटः झ, उत् साद् झ, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **झोऽन्तः** (पा.सू. 7-1-3)इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ब.व.।

748. उत्सीदेयुः (3-24) – उत्पूर्वकात् सद्-धातोः (षद्‌ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं.854) विध्यादौ लिङ्, लिङः झि, उद् सद् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति सीदादेशः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **झेर्जुस्** (पा.सू. 3-4-108) इति झेः स्थाने जुसादेशः, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः। विधिलिङ्, प्र.पु. ब.व.।

749. उत्सृजामि (9-19) – उत्पूर्वकात् सृज्-धातोः (सृज विसर्गे, दिवादिः, सि.कौ. - धा.सं.1178) लट्, लटः मिप्, सृज् मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्, उ.पु. ए.व.।

750. उत्सृज्य (16-23, 17-1) – उत्पूर्वकात् सृज्-धातोः (सृज विसर्गे, दिवादिः, सि.कौ. - धा.सं.1178) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

751. उदपाने (2-46) – उदकं पिबन्ति अस्मिन् इति विग्रहे उदक-उपपदे पा-धातोः (पा पाने, भ्वादिः, सि.कौ. - धा.सं.925) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **उदकस्योदः संज्ञायाम्** (पा.सू. 6-3-57) इति उदकस्य उदादेशः। उदक इत्यत्र उन्द्-धातोः (उन्दी क्लेदने, रुधादिः, सि.कौ. - धा.सं.1457) **उदकञ्च** (उणा. 2-40) इति क्वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। नपुं. स.वि. ए.व.।

752. उदाराः (7-18) – उद्-आ इत्युपसर्गद्वयपूर्वकात् रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं.1057) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः। अथवा उद्-पूर्वकात् ऋ-धातोः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इत्यनेन घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ब.व.।

753. उदासीनवत् (9-9, 14-23) – उदासीन-शब्दात् **तत्र तस्येव** (पा.सू. 5-1-116) इति वति-प्रत्ययः। उदासीन इत्यत्र उद्-पूर्वकात् आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं.1021) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शानच्-आदेशः, **ईदासः** (पा.सू. 7-2-83) इति आनस्य आकारस्य स्थाने ईत्-आदेशः। अव्ययम्।

754. उदासीनः (12-16) – उद्-पूर्वकात् आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं.1021) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शानच्-आदेशः, **ईदासः** (पा.सू. 7-2-83) इति आनस्य आकारस्य स्थाने ईत्-आदेशः। पुं. प्र.वि. ए.व.।

755. उदाहृतम् (13-6, 17-19,22, 18-22,44,39) – उद्-आङ्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं.899) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

756. उदाहृतः (15-17) – उद्-आङ्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं.899) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

757. उदाहृत्य (17-24) – उत्-आपूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं.899) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

758. उद्दिश्य (17-21) – उद्-पूर्वकात् दिश्-धातोः (दिश अतिसर्जने, भ्वादिः, सि.कौ. - धा.सं.899) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

759. उद्देशतः (10-40) – उद्देश-शब्दात् **आद्यादिभ्यः उपसंख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। उदेश इत्यत्र उद्-पूर्वकात् दिश्-धातोः (दिश अतिसर्जने, भ्वादिः, सि.कौ. - धा.सं.899) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

760. उद्धरेत् (6-5) – उद्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं.899) विध्यादौ लिङ्, लिङः तिप्, हृ तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **इतश्च** (पा.सू. 3-4-100) इति तेः इकारस्य लोपः, **झयो होऽन्यतरस्याम्** (पा.सू. 8-4-62) पूर्वसवर्णेन हकारस्य धकारः। विधिलिङ्, प्र.पु. ए.व.।

761. उद्भवः (10-34) – उद्-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं.1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

762. उद्यताः (1-45) – उद्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं.984) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

763. उद्यम्य (1-20) – उद्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं.984) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्-आदेशः, **वा ल्यपि** (पा.सू. 6-4-38) इति विकल्पेन अनुनासिकलोपविधानात् लोपाभावे रूपम्। अव्ययम्।

764. उद्विजते (12-15,15) – उत्पूर्वकात् विज्-धातोः (विजिर् पृथग्भावे, जुहोत्यादिः, सि.कौ. - धा.सं.1094) लट्, लटः त। उद् विज् त, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति शप्रत्यय, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। लट्, प्र.पु. ए.व.।

765. उद्विजेत् (5-20) – उउद्-पूर्वकात् विज्-धातोः (विजिर् पृथग्भावे, जुहोत्यादिः, सि.कौ. - धा.सं.1094) लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **इतश्च** (पा.सू. 3-4-100) इति तेः इकारस्य लोपः। अयम् आत्मनेपदी धातुः, उद्विजेत इति भवेत्। विधिलिङ्, प्र.पु. ए.व.।

766. उन्मिषन् (5-9) – उत्पूर्वकात् मिष्-धातोः (मिष स्पर्धायाम्, तुदादिः, सि.कौ. - धा.सं.1352) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः। पुं. प्र.वि. ए.व.।

767. उपजायते (2-62,65, 14-11) – उप-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं.1149) लट्, लटः त, जन् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ए.व.।

768. उपजायन्ते (14-2) – उप-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं.1149) लट्, लटः झ। जन् झ, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **ज्ञाजनोर्जा** (पा.सू.. 7-3-79) इति जादेशः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ब.व.।

769. उपजुह्वति (4-25) – उप-पूर्वकात् हु-धातोः (हु दानादानयोः, जुहोत्यादिः, सि.कौ. - धा.सं.1086) लट्, लटः झि, हु झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति प्रत्ययस्य श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **अदभ्यस्तात्** (पा.सू. 7-1-4) इति झस्य अत्, **कुहोश्चुः** (पा.सू. 7-4-62) इति चुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति चर्त्वम्। लट्, प्र.पु. ब.व.।

770. उपदेक्ष्यन्ति (4-34) – उपपूर्वकात् दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं.1283) लृट्, लृटः झि, दिश् झि, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **षढोः कः सि** (पा.सू. 8-2-41) इति षकारस्य ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लट्, प्र.पु. ब.व.।

771. उपद्रष्टा (13-22) – उप-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं.988) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति कर्तरि तृच्, **सृजिदृशोर्झल्यमकिति** (पा.सू. 6–1-58) इति अम्-आगमः, **इको यणचि** (पा.सू. 6-1-77) इति यणादेशः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षकारादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

772. उपधारय (7-6, 9-6) – उप-पूर्वकात् धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वच- वर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, लोट्, लोटः सिप्, उप धृ सिप् **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, धारि शप् सिप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हिः, **अतो हेः** इति हेः लुक्। लोट्, म.पु. ए.व.।

773. उपपद्यते (2-3, 6-39, 13-18, 18-7) – उप-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) कर्तरि कर्मणि वा लट्, लटः त। पद् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69), **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, अत्र श्यन् न भवति। लट्, प्र.पु. ए.व.।

774. उपपन्नम् (2-32) – उप-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति तकारस्य दकारस्य च नकारादेशः। नपुं. द्वि.वि. ए.व.।

775. उपमा (6-19) – उप-पूर्वकात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं.1062) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

776. उपयान्ति (10-10) – उप-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं.1049) लट्, लटः झि, या झि, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

777. उपरतम् (2-35) – उप-पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं.853) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकस्य लोपः। पुं. द्वि.वि. ए.व.।

778. उपरमते (6-20) – उप-पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं.853) कर्तरि लट्, लटः त, **विभाषाऽकर्मकात्** (पा.सू. 1-3-85) इति विकल्पेन आत्मनेपदम्, उप रम् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

779. उपरमेत् (6-25) – उप-पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) विध्यादौ लिङ्, लिङः त। उप रम् लिङ्, **उपाच्च** (पा.सू. 1-3-84) इति परस्मैपदम्, उप रम् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः, **अतो येयः** (पा.सू. 7-2-80) इति यास्थाने इय्। विधिलिङ्, प्र.पु. ए.व.।

780. उपलभ्यते (15-3) – उप-पूर्वकात् लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) कर्मणि लट्, लटः त। लभ् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्, प्र.वि. ए.व.।

781. उपलिप्यते (13-12,32) – उप-पूर्वकात् लिप्-धातोः (लिप उपदेहे, तुदादिः, सि.कौ. - धा.सं. 1433) कर्मणि लट्, लटः त। **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम्, लिप् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

782. उपविश्य (6-12) – उप-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं.1424) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

783. उपसङ्गम्य (1-2) – उप-पूर्वकात् सम्पूर्वकात् च गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.982) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **वा ल्यपि** (पा.सू. 6-4-38) इति विकल्पेन अनुनासिकलोपः,अनुनासिकलोपाभावे उपसङ्गम्य। अव्ययम्।

784. उपसेवते (15-9) – उप-पूर्वकात् सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं.501) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ए.व.।

785. उपहन्याम् (3-24) – उप-पूर्वकात् हन्-धातोः (हन हिसागत्योः, अदादिः, सि.कौ. - धा.सं.1012) विध्यादौ लिङ्, लिङः मिप्। हन् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट्**

**परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **तस्थस्थमिपां तान्तन्तामः** (पा.सू. 3-4-101) इति अमादेशः। विधिलिङ्, उ.पु. ए.व.।

786. उपायतः (6-36) – उपायशब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। उपाय इत्यत्र उप-पूर्वकात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं.474) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अव्ययम्।

787. उपाविशत् (1-47) – उप-आङ्-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं.1424) लङ्, लङः तिप्, विश् तिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति शप्रत्ययः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः। लङ्, प्र.पु. ए.व.।

788. उपाश्रिताः (4-10, 16-11) – उप-पूर्वकात् आङ्पूर्वकाच्च श्रि-धातोः (श्रिञ् सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

789. उपाश्रित्य (14-2, 18-57) – उप-आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.897) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यबादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

790. उपासते (9-14,15, 12-2,6, 13-25) – उप-पूर्वकात् आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं.1021) लट्, लटः झ। आस् झ, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **आत्मनेपदेष्वनतः** (पा.सू 7-1-5) इति अत्-आदेशः झस्य। लट्, प्र.पु. ब.व.।

791. उपेतः (6-37) – उप-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, उप इत इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. प्र.वि. ए.व.।

792. उपेताः (12-2) –उप-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुण- प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, उप इत इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. प्र.वि. ब.व.।

793. उपेत्य (8-15,16) – उप-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, उप इत्य इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। अव्ययम्।

794. उपैति (6-27, 8-10,28) – उप-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) लट्, लटःतिप्, उप इ ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एत्येधत्यूठ्सु** (पा.सू. 6-1-89) इति वृद्धिः। लट्, प्र.पु. ए.व.।

795. उपैष्यसि (9-28) – उप-पूर्वकात् इण्-धातुः(इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) , लृट् लृटः सिप्, उप इ सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इडागमनिषेधः, **एत्येधत्यूठ्सु** (पा.सू. 6-1-89) इति वृद्धिः। लट्, म.पु. ए.व.।

796. उभयविभ्रष्टः (6-38) – उभयस्मात् विभ्रष्टः, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः, अथवा **सह सुपा** (पा.सू. 2-1-4) इति समासः, अथवा उभयोः विभ्रष्टः इति **षष्ठी** (पा.सू. 2-2-8) इति समासः। उभय इत्यत्र उभ-शब्दात् **सङ्ख्याया अवयवे तयप्** (पा.सू. 5-2-42) इति तयप्-प्रत्ययः, तस्य **उभादुदात्तो नित्यम्** (पा.सू. 5-2-44) इति सूत्रेण तयपः अयच्-आदेशः। उभ इत्यत्र उ-धातोः (उङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं.953) बाहुलकात् भक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। विभ्रष्ट इत्यत्र वि-पूर्वकात् भ्रंश्-धातोः (भ्रंशु अधःपतने, दिवादिः, सि.कौ. - धा.सं.1225) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **उदितो वा** (पा.सू. 7-2-56) इति विकल्पेन इट्त्वात्, निष्ठायाम् इडागमो न **यस्य विभाषा** (पा.सू. 7-2-15) इति सूत्रेण, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नस्य लोपः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति धातोः शकारस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

797. उभयोः (1-21,24,27, 2-10,16, 5-4) – उभ ओस्, उभ इति सर्वनामसंज्ञकः **सर्वादीनि सर्वनामानि** (पा.सू. 1-1-27) इति सूत्रेण। नित्यद्विवचनान्तः, **ओसि च** (पा.सू. 7-3-104) इति एकारादेशः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। उभ इत्यत्र उ-धातोः (उङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं.953) बाहुलकात् भक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. ष.वि. द्वि.व.।

798. उभे (2-50) – उभ औ, उभ इति सर्वनामसंज्ञकः **सर्वादीनि सर्वनामानि** (पा.सू. 1-1-27) इति सूत्रेण। नित्यद्विवचनान्तः, **नपुंसकाच्च** (पा.सू. 7-1-191) इति शी-आदेशः। उभ इत्यत्र उ-धातोः (उङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं.953) बाहुलकात् भक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. द्वि.व.।

799. उभौ (2-19, 5-2, 13-19) – उभ औ, उभ इति सर्वनामसंज्ञकः **सर्वादीनि सर्वनामानि** (पा.सू. 1-1-27) इति सूत्रेण। नित्यद्विवचनान्तः, **वृद्धिरेचि** (पा.सू. 6-1-88) इति वृद्धिः। उभ इत्यत्र उ-धातोः (उङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं.953) बाहुलकात् भक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. द्वि.व.।

800. उरगान् (11-15) – उरसा गच्छति इति विग्रहे उरस् इति उपपदे गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **उरसो लोपश्च** (वा. 2015) इति ड-प्रत्ययः उरस्-शब्दस्य अन्त्यस्य लोपः च, डित्त्वसामर्थ्यात् गम् इत्यस्य अम् इति टेः लोपः। उरस् इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं.936) **अर्त्तेरुच्च** (उणा. 4-194) इति असुन्-प्रत्ययः। पुं. प्र.वि. ब.व.।

801. उल्बेन (3-38) – उल्ब इति उत्पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं.1139) **उल्बादयश्च** (उणा. 4-95) इति निपातनात् सिद्धम्। नपुं. तृ.वि. ए.व.।

802. उवाच (1-1,2,2,24,25,47, 2-1,1,2,4,9,10,11,54,55, 3-1,3,10,36,37, 4-1,4,5, 5-1,2, 6-1,33,35,37,40, 7-1, 8-1,3, 9-1, 10-1,12,19, 11-1,5,9,15,32,35,36,37,50,51,52, 12-1,2, 13-1, 14-1,21,22, 15-1, 16-1, 17-1,2, 18-1,2,73,74) – वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) लिट्, लिटः तिप्। अथवा ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लिट्, लिटः तिप्। वच् तिप्, ब्रू तिप्, **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति सूत्रेण तिपः मिपः च णल्-आदेशः, **ब्रुवो वचिः** (पा.सू. 2-4-53) इति वचादेशः, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति प्रथमः हल् शिष्यते, **लिट्यभ्यासस्योभयेषाम्** (पा.सू. 6-1-17) इति सम्प्रसारणम्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। एवं वच्-धातोः अपि। लिट्, प्र.पु. ए.व.।

803. उशना (10-37) – **वशेः कनसिः** (उणा. 4-238) इति वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं.1080) कनसि-प्रत्ययः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सूत्रेण सम्प्रसारणम्,

**संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, उशनस् इति, प्रथमैकवचने **ऋदुशनस्पुरुदंसोऽनेहसां च** (पा.सू. 7-1-94) इति अनङ्। पुं. प्र.वि. ए.व.।

804. उषित्वा (6-41) – वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं.1005) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **वसतिक्षुधोरिट्** (पा.सू. 7-2-52) इति सूत्रेण इट्, **न क्त्वा सेट्** (पा.सू. 1-2-18) इति सूत्रेण अकित्त्वातिदेशे प्राप्ते तं बाधित्वा **मृडमृदगुधकुषक्लिशवदवसः क्त्वा** (पा.सू. 1-2-7) इति कित्त्वं तेन **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। अव्ययम्।

805. ऊर्जितम् (10-41) – ऊर्ज्-धातोः (ऊर्ज् बलप्राणनयोः, चुरादिः, सि.कौ. - धा.सं.1549) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्य इड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। नपुं. द्वि.वि. ए.व.।

806. ऊर्ध्वमूलम् (15-1) – ऊर्ध्वं मूलं यस्य तम् **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ऊर्ध्वम् इति ऊर्ध्वदेशरूपार्थेऽधिकरणशक्तिप्रधानकमव्ययम्। मूल इत्यत्र मूल्-धातोः (मूल प्रतिष्ठायाम्, भ्वादिः, सि.कौ. - धा.सं.529) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. द्वि.वि. ए.व.।

807. ऊर्ध्वम् (12-8, 14-28, 15-2, ) – ऊर्ध्वदेशरूपार्थेऽधिकरणशक्तिप्रधानकमव्ययमिदम्। अव्ययम्।

808. ऊष्मपाः (11-22) – ऊष्माणं पिबन्ति, ऊष्मन् इति उपपदे पा-धातोः (पा पाने, भ्वादिः, सि.कौ. - धा.सं.925) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। ऊष्मन् इत्यत्र ऊष्-धातोः (ऊष उजायाम्, भ्वादिः, सि.कौ. - धा.सं.683) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति सूत्रेण मनिन्-प्रत्ययः। पुं. प्र.वि. ब.व.।

809. ऋक् (9-17) – ऋच्-धातोः (ऋच स्तुतौ दीप्तौ च, तुदादिः, सि.कौ. - धा.सं.1302) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति वार्तिकेन क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, प्रथमैकवचने सुप्रत्यये, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। स्त्री. प्र.वि. ए.व.।

810. ऋच्छति (2-72, 5-29) – ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं.936) लट्, लटः तिप्। ऋ तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति धातोः स्थाने ऋच्छादेशः। लट्, प्र.पु. ए.व.।

811. ऋतम् (10-14) – ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं.936) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। नपुं. द्वि.वि. ए.व.।

812. ऋतूनाम् (10-35) – ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं.936) **अर्तेश्च तुः** (उणा. 1-71) इति तुप्रत्ययः, चात् कित्त्वम्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

813. ऋते (11-32) – ऋत् इति सौत्रात् धातोः के-प्रत्ययः बाहुलकात्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

814. ऋद्धम् (2-8) – ऋध्-धातोः (ऋधु वृद्धौ, दिवादिः, सि.कौ. - धा.सं.1245) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्। नपुं. द्वि.वि. ए.व.।

815. ऋषयः (5-25, 10-13) – ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात्कित्** (उणा. 4-119) इति इन्-प्रत्ययः स च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, ऋषि जस्, **जसि च** (पा.सू. 7-3-109) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ब.व.।

816. ऋषिभिः (13-4) – ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात्कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ऋषि भिस्। पुं. तृ.वि. ब.व.।

817. ऋषीन् (11-15) – ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात्कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ऋषि शस्, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति नकारः। पुं. द्वि.वि. ब.व.।

818. एकत्वम् (6-31) – एकस्य भावः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

819. एकत्वेन (9-15) – एकस्य भावः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. तृ.वि. ए.व.।

820. एकभक्तिः (7-17) – एकस्मिन् भक्तिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ए.व.।

821. एकया (8-26) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एकशब्दात् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, एका टा, **याडापः** (पा.सू. 7-3-113) इति याट्। स्त्री. तृ.वि. ए.व.।

822. एकस्थम् (11-7, 13, 13-30) – एकस्मिन् तिष्ठति इति विग्रहे एक इत्युपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

823. एकस्मिन् (18-22) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक ङि, **सर्वादीनि सर्वनामानि** (पा.सू. 1-1-27) इति सर्वनामसंज्ञा, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मिन्। नपुं. स.वि. ए.व.।

824. एकम् (3-2, 5-1,4,5, 10-25, 13-5, 18-20,66) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक सु, **अतोऽम्** (पा.सू. 7-1-24) इति अम्। नपुं. द्वि.वि. ए.व.।

825. एकः (11-42, 13-33) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक सु। पुं. प्र.वि. ए.व.।

826. एका (2-41) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक सु, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **हल्ङ्याब्भ्यो दीर्घात् सुतुस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः। स्त्री. प्र.वि. ए.व.।

827. एकाकी (6-10) – एकाकिन् इत्यत्र **एकादाकिनिच्चासाहाये** (पा.सू. 5-3-52) इति आकिनच्-प्रत्ययः। एकाकिन् सु, **सौ च** (पा.सू. 6-4-13) इति उपधादीर्घः, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

828. एकाक्षरम् (8-13) – एकम् अक्षरम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अक्षरम् इत्यत्र न क्षरम् अक्षरम् इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। क्षर इत्यत्र क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** इति सूत्रेण अच्-प्रत्ययः, अथवा अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेः सरः** (उणा. 3-70) इति उणादिसूत्रेण सर इति प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति धातोः शकारस्य षकारः, षकारस्य **षढोः कः सि** (पा.सू. 8-2-41) इत्यनेन ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इत्यनेन प्रत्ययसकारस्य षकारः, अक्षर इति। नपुं. द्वि.वि. ए.व.।

829. एकाग्रम् (6-12) – एकम् एकस्मिन् वा अग्रं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अग्र इत्यत्र अग्-धातोः (अग कुटिलायां गतौ, भ्वादिः, सि.कौ. - धा.सं. 793) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययः। नपुं. द्वि.वि. ए.व.। नपुं. द्वि.वि. ए.व.।

830. एकाग्रेण (18-72) – एकम् एकस्मिन् वा अग्रं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अग्र इत्यत्र अग्-धातोः (अग कुटिलायां गतौ, भ्वादिः, सि.कौ. - धा.सं. 793) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

831. एकान्तम् (6-16) – एकः अन्तः यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। नपुं. द्वि.वि. ए.व.।

832. एकांशेन (10-42) – एक एव अंशः तेन, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अंश इत्यत्र अंश्-धातोः (अंश विभाजने, चुरादिः, इति वाचस्पत्यम्) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-

25) इति णिच्, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ए.व.।

833. एकेन (11-20) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक टा, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। पुं. तृ.वि. ए.व.।

834. एके (18-3) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, एक जस्, **सर्वादीनि सर्वनामानि** (पा.सू. 1-1-27) इति सर्वनामसंज्ञा, **जसः शी** (पा.सू. 7-1-17) इति शी-आदेशः, अत्र अन्यार्थे एक-शब्दः प्रयुक्तः। पुं. प्र.वि. ब.व.।

835. एतत् (2-3,6, 13-22, 4-3,4, 6-26,39,42, 10-14, 11-3,35, 12-11, 13-1,6,11,18, 15-20, 16-21, 17-16,26, 18-63,72,75) – एतद् सु/अम्, **स्वमोर्नपुंसकात्** (पा.सू. 7-1-23) इति स्वमोः लुक्। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

836. एतद्योनीनि (7-6) – एषा योनिः येषां तानि, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एषा इत्यत्र एतद्-शब्दात् सु-प्रत्यये **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **तदोः सः सावनन्त्ययोः** (पा.सू. 7-2-106) इति सूत्रेण दकारस्य सकारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इत्यनेन सकारस्य षकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं** (पा.सू. 6-1-68) हल् इत्यनेन सलोपः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। योनि इत्यत्र यु-धातोः (यु मिश्रणेमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। नपुं. द्वि.वि. ब.व.।

837. एतयोः (5-1) – एतद् ओस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ओसि च** (पा.सू. 7-3-104) इति एकारादेशः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. स.वि. द्वि.व.।

838. एतस्य (6-33) – एतद् ङस्, **त्यदादीनामः** इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति स्यादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

839. एतानि (14-12,13, 15-8, 18-6) – एतद् जस्, शस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। **जश्शसोः शिः** इति शि-आदेशः, **नपुंसकस्य झलचः** इति नुम्-आगमः, **सर्वनामस्थाने चासम्बुद्धौ** इति उपधादीर्घः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ब.व.।

840. एतान् (1-22,25,35,36, 14-22,21,26) – एतद् शस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **प्रथमयोः पूर्वसवर्णः** इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** इति नकारादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

841. एतावत् (16-11) – **यत्तदेतेभ्यः परिमाणे वतुप्** इति एतद्-शब्दात् वतुप्-प्रत्ययः, **आ सर्वनाम्नः** इति आकारः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

842. एताम् (1-3, 7-14, 10-7, 16-9) – एतद् अम्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अजाद्यतष्टाप् (पा.सू. 4-1-4)** इति टाप्, **अमि पूर्वः** इति पूर्वरूपैकादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. द्वि.वि. ए.व.।

843. एति (4-9,9, 8-6, 11-55) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) लट्, लटः तिप्, इ ति, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

844. एते (1-23,38, 2-15, 4-30, 7-18, 8-26,27, 11-33, 18-15) – एतद्-शब्दस्य पुंलिङ्गे प्रथमाबहुवचने स्त्रीनपुंसकयोः प्रथमाद्वितीययोः द्विवचने च रूपम् इदम्। एतद् जस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **जसः शी** इति शी-आदेशः, एतद् औ, **त्यदादीनामः** इति अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **औङ आपः** इति शी-आदेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

845. एतेन (3-39, 10-42) – एतद् टा, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः, **आद्गुणः** इति गुणः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. तृ.वि. ए.व.।

846. एतेषाम् (1-10) – एतद् आम्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। **आमि सर्वनाम्नः सुट्** इति सुट्-आगमः, **बहुवचने झल्येत्** इति एकारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ब.व.।

847. एतैः (1-43) – एतद् भिस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अतो भिस ऐस्** (पा.सू. 7-1-9) इति ऐस्-आदेशः, **वृद्धिरेचि** (पा.सू. 6-1-88) इति वृद्ध्यादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. तृ.वि. ब.व.।

848. एधांसि (4-37) – एध्-धातोः (एध वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 02) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, एधस् जस्/शस्। **जश्शसोः शिः** (पा.सू. 7-1-20) इति शि-आदेशः, **अत्वसन्तस्य चाधातोः** (पा.सू. 6-4-14) इति उपधायाः दीर्घः। नपुं. द्वि.वि. ब.व.।

849. एनम् (2-19,19,21,23,23,23,25,26,29,29,29, 3-37,41, 4-42, 6-27, 11-50, 15-3,11,11) – एतद् अम्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **द्वितीयाटौस्स्वेनः** (पा.सू. 2-4-34) इति एनादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

850. एनाम् (2-72) – एतद् अम्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **द्वितीयाटौस्स्वेनः** (पा.सू. 2-4-34) इति एनादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ,

अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. द्वि.वि. ए.व.।

851. एभिः (7-13, 18-40) – इदम् भिस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अतो भिस ऐस्** (पा.सू. 7-1-9) इति ऐसादेशः प्राप्तः, **नेदमदसोरकोः** (पा.सू. 7-1-11) इति ऐसादेशस्य निषेधः, **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एकारादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. तृ.वि. ब.व.।

852. एभ्यः (3-12, 7-13) – इदम् भ्यस्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एकारादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. च.वि. ब.व.।

853. एव (1-1,6,8,11,11,13,14,19,27,30,34,36,42, 2-,5,6,12,12,24,28,29,29,47,55, 3-4,12,17,17,18,20,20,21,22, 4-3,11,15,20,24,25,25,36, 5-8,13,15,18,19,22,23,24,27,28, 6-3,5,5,6,6,16,18,20,21,24,26,40,42,44, 7-4,12,12,14,18,18,18,21,22, 8-4,5,6,7,10,18,19,23,28, 9-12,16,17,19,23,24,30,34, 10-,1,4,5,11,13,15,20,32,33,38,41,41, 11-8,22,25,26,28,29,33,33,35,40,45,46,46,49, 12-4,6,8,8,13, 13-4,5,8,14,15,19,19,25,29,30, 14-10,13,17,17,22,23, 15-4,7,9,15,15,16, 16-4,6,19,20, 17-2,3,6,11,12,15,18,27,27, 18-5,5,8,8,9,9,14,19,29,31,35,42,50,62,65,68) – **इण्शीभ्यां वन्** (उणा. 1-150) इति इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) वन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। अव्ययम्।

854. एवम् (1-24,47, 2-9,25,26,38, 3-16,43, 4-2,9,15,32,32,35, 6-15,28, 9-21,28,34, 11-3,9, 12-1, 13-23,25,34, 15-19, 18-16) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) उणादीनां बाहुलकात् वम्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। अव्ययम्।

855. एवंरूपः (11-48) – एवं रूपं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एवम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) उणादीनां बाहुल्यात् वम्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. प्र.वि. ए.व.।

856. एवंविधः (11-53,54) – एवं विधा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति विधा-शब्दस्य आकारस्य ह्रस्वः। एवम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) उणादीनां बाहुल्यात् वम्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

857. एषः (3-10,37,37,40, 10-40, 18-59) – एतद् सु, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **तदोः सः सावनन्त्ययोः** (पा.सू. 7-2-106) इति तकारस्य सकारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च**

(उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

858. एषा (2-39,72, 7-14) – एतद् सु, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **तदोः सः सावनन्त्ययोः** (पा.सू. 7-2-106) इति दस्य सकारादेशः, **आदेशप्रत्ययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। एतद् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **एतेस्तुट् च** (उणा.1.132) इति सूत्रेण अद्-प्रत्ययः प्रत्ययस्य च तुडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. प्र.वि. ए.व.।

859. एषाम् (1-42) – इदम् आम्, **त्यदादीनामः** (पा.सू. 6-1-97) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। **आमि सर्वनाम्नः सुट्** (पा.सू. 7-1-52) इति सुट्, **हलि लोपः** (पा.सू. 7-2-113) इति इद्-लोपः, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति अस्य एकारः, **आदेशप्रत्ययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। इदम् इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) बाहुलकात् दमुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

860. एष्यति (18-68) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) लृट्, लृटः तिप्, इ तिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, इ स्य ति, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः ए स्य ति, **आदेशप्रत्ययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। लृट्, प्र.पुवि. ए.व.।

861. एष्यसि (8-7, 9-34, 18-65) – इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) लृट्, लृटः सिप्। इ लृट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, इ स्य सि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः ए स्य सि, **आदेशप्रत्ययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। लृट्, म.पु. ए.व.।

862. ऐकान्तिकस्य (14-27) – एकान्तशब्दात् **तमधीष्टो भृतो भूतो भावी** (पा.सू. 5-1-80) इति सूत्रेण ठञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू 7-2-117) इति आदिवृद्धिः, **ठस्येकः** (पा.सू. 7-3-50) इति इकादेशः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। एकान्त इत्यत्र एकः अन्तः यस्य तत् इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। नपुं. ष.वि. ए.व.।

863. ऐश्वरम् (9-5, 11-3,8,9) – ईश्वरस्य इदम् इति विग्रहे ईश्वर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

864. ऐरावतम् (10-27) – इरा सन्ति अस्मिन् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **तत्र भवः** (पा.सू. 4-3-53) इति अण्, **तद्धितेष्वचामादेः** (पा.सू 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आकारलोपः। इरा इत्यत्र इ इत्युपपदे रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोनुपसर्गे कः** (पा.सू. 3-2-2) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. द्वि.वि. ए.व.।

865. ओजसा (15-13) – उब्ज्-धातोः (उब्ज आर्जवे, तुदादिः, सि.कौ. - धा.सं. 1303) **उब्जेर्बले बलोपश्च** (उणा. 4-191) इति असुन्-प्रत्ययः धातोः बकारस्य लोपः च, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. तृ.वि. ए.व.।

866. ओषधीः (15-13) – ओषः धीयते अत्र इति विग्रहे ओष इति उपपदे धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **कर्मण्यधिकरणे च** (पा.सू. 3-3-93) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-

64) इति आकारलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **कृदिकारादक्तिनः** (गण. 50) इति ङीष्-प्रत्ययः। ओष इत्यत्र उष्-धातोः (उष दाहे, भ्वादिः, सि.कौ. - धा.सं. 696) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. द्वि.वि. ब.व.।

867. ओम् (8-13, 17-23,24) – अव्-धातोः (अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अवतेष्टिलोपश्च** (उणा. 1-139) इति मन्-प्रत्ययः, प्रत्ययस्य टेः लोपः, **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** (पा.सू. 6-4-20) इति ऊठ्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे ओम् इति सम्पन्नम्। अव्ययम्।

868. ओङ्कारः (9-17) – ओम् इत्यस्मात् **वर्णात्कारः** (वा. 2227) इति कार-प्रत्ययः। ओम् इत्यत्र अव्-धातोः (अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अवतेष्टिलोपश्च** (उणा. 1-139) इति मन्-प्रत्ययः, प्रत्ययस्य टेः लोपः, **ज्वरत्वरस्रिव्यविमवामुपधायाश्च** (पा.सू. 6-4-20) इति ऊठ्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। नपुं. प्र.वि. ए.व.।

869. औषधम् (9-16) – **ओषधेरजातौ** (पा.सू. 5-4-37) इति ओषधि-शब्दात् अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। ओषधि इत्यत्र ओषः धीयते अत्र इति विग्रहे ओष इति उपपदे धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **कर्मण्यधिकरणे च** (पा.सू. 3-3-93) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आकारलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। ओष इत्यत्र उष्-धातोः (उष दाहे, भ्वादिः, सि.कौ. - धा.सं. 696) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

870. कच्चित् (6-38, 18-72,72) – कत् चित् इत्यनयोः समुदायरूपम् अव्ययम् इदम् इष्टप्रश्नार्थे।

871. कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः (17-9) – कटवश्च अम्लाश्च लवणाश्च अत्युष्णाश्च तीक्ष्णाश्च रूक्षाश्च विदाहिनश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। कटु इत्यत्र कट्-धातोः (कटी गतौ, भ्वादिः, सि.कौ. - धा.सं. 320) **कटिवटिभ्यां च** (उणा. 1-9) इति सूत्रेण उन्-प्रत्ययः। अम्ल इत्यत्र अम्-धातोः (अम गतौ सब्दे संभक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) बाहुलकात् क्ल-प्रत्ययः। लवण इत्यत्र लू-धातोः (लूञ् छेदने, क्र्यादिः, सि.कौ. - धा.सं. 1483) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, योः **युवोरनाकौ** (पा.सू. 7-1-1) इति सूत्रेण अनादेशः, नन्द्यादिगणे (पा.सू. 3-1-134) निपातनात् नकारस्य णकारः। अत्युष्ण इत्यत्र अति-पूर्वकात् उष्-धातोः (उष दाहे, भ्वादिः, सि.कौ. - धा.सं. 696) **इण्सिञ्जिदीङुष्यविभ्यो नक्** (उणा. 3-2) इति नक्-प्रत्ययः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। तीक्ष्ण इत्यत्र तिज्-धातोः (तिज निशाने क्षमायां च, भ्वादिः, सि.कौ. - धा.सं. 971) **तिजेर्दीर्घश्च** (उणा. 3-18) इति स्नक्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्। रूक्ष इत्यत्र रूक्ष्-धातोः (रूक्ष पारुष्ये, चुरादिः, सि.कौ. - धा.सं. 1910) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। विदाहिन् इत्यत्र वि-पूर्वकात् दह्-धातोः (दह भस्मीकरणे, भ्वादिः, सि.कौ. - धा.सं. 991) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति सूत्रेण णिनि-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ब.व.।

872. कतरत् (2-6) – किम्-शब्दात् **किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्** (पा.सू. 5-3-92) इति डतरच्-प्रत्ययः। कतरत् सु, सोः अम्, **अद्ड्डतरादिभ्यः पञ्चभ्यः** (पा.सू. 7-1-25) इति सु-अमोः अद्ड्-आदेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। नपुं. प्र.वि. ए.व.।

873. कथय (10-18) – कथ-धातोः (कथ वाक्यप्रबन्धे, चुरादिः, सि.कौ. - धा.सं. 951) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, लोट्, लोटः सिप्, कथि सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लोपः। लोट्, म.पु. ए.व.।

874. कथयतः (18-75) – कथ-धातोः (कथ वाक्यप्रबन्धे, चुरादिः, सि.कौ. - धा.सं. 951) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण शतृ-प्रत्ययः, कथि अत्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. पं.वि. ए.व.।

875. कथयन्तः (10-9) – कथ-धातोः (कथ वाक्यप्रबन्धे, चुरादिः, सि.कौ. - धा.सं. 951) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, लटि, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

876. कथयिष्यन्ति (2-34) – कथ-धातोः (कथ वाक्यप्रबन्धे, चुरादिः, सि.कौ. - धा.सं. 951) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, लृट्, लृटः झि, कथि झि, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधतुकयोः** (पा.सू. 7-3-84) इति गुणः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लृट्, प्र.पु. ब.व.।

877. कथयिष्यामि (10-19) – कथ-धातोः (कथ वाक्यप्रबन्धे, चुरादिः, सि.कौ. - धा.सं. 951) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, लृट् लृटः मिप्, कथि मिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधतुकयोः** (पा.सू. 7-3-84) इति गुणः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लृट्, उ.पु. ए.व.।

878. कथम् (1-37,39, 2-4,21, 4-4, 8-2,2, 10-17, 14-21) – किम्-शब्दात् **किमश्च** (पा.सू. 5-3-25) इति थमु-प्रत्ययः, **किमः कः** (पा.सू. 7-2-103) इति किमः कादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। अव्ययम्।

879. कदाचन (2-47, 18-37) – कदा चन इति अव्ययद्वयसमुदायरूपम् अव्ययम् इदम्। कदा इत्यत्र किम्-शब्दात् **सर्वैकान्यकिंयत्तद काले दा** (पा.सू. 5-3-15) इति सूत्रेण दा-प्रत्ययः, **किमः कः** (पा.सू. 7-2-103) इति किमः कादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चन इत्यत्र चन्-धातोः (चन शब्दे, भ्वादिः इति कविकल्पद्रुमः) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

880. कदाचित् (2-20) – कदा चित् इति अव्ययद्वयसमुदायरूपम् अव्ययम् इदम्। कदा इत्यत्र किम्-शब्दात् **सर्वैकान्यकिंयत्तद काले दा** (पा.सू. 5-3-15) इति सूत्रेण दा-प्रत्ययः, **किमः कः** (पा.सू. 7-2-103) इति किमः कादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते**

(पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

881. कपिध्वजः (1-20) – कपिः ध्वजे यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कपि इत्यत्र कन्प्-धातोः (कपि चलने, भ्वादिः, सि.कौ. - धा.सं. 375) **कुडिकम्प्योर्नलोपश्च** (उणा. 4-143) इति इन्-प्रत्ययः नलोपः च। ध्वज इत्यत्र ध्वज्-धातोः (ध्वज गतौ, भ्वादिः, सि.कौ. - धा.सं. 221) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

882. कपिलः (10-26) – कब्-धातोः (कबृ वर्णे, भ्वादिः, सि.कौ. - धा.सं.380) **कमेः पश्च** (उणा. 1-55) इति इलच्-प्रत्ययः मस्य पादेशः च। पुं. प्र.वि. ए.व.।

883. कमलपत्राक्ष (11-2) – कमलस्य पत्रे, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कमलपत्रे इव अक्षिणी यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्** (पा.सू. 5-4-113) इति षच् समासान्तः। कमल इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **वृषादिभ्यश्चित्** (उणा. 1-106) इति सूत्रेण कल-प्रत्ययः। पत्र इत्यत्र पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः। अक्षि इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेर्नित्** (उणा. 3-156) इति क्सि-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **षढोः कः सि** (पा.सू. 8-2-41) इति षकारस्य ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। पुं. सम्बो.वि. ए.व.।

884. कमलासनस्थम् (11-15) – कमलमेव आसनम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, कमलासने तिष्ठतीति कमलासन इति उपपदे **सुपि स्थः** (पा.सू. 3-2-4) इति स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। कमल इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। आसन इत्यत्र आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. द्वि.वि. ए.व.।

885. करणम् (18-14,18) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति नस्य णत्वम्। नपुं. प्र.वि. ए.व.।

886. करिष्यति (3-33) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लृट्, लृटः तिप्, कृ लृट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, कृ स्य तिप्, **ऋद्धनोः स्ये** (पा.सू. 7-2-70) इति सूत्रेण इडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, करि स्य ति, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्, प्र.पु. ए.व.।

887. करिष्यसि (2-33, 18-60) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लृट्, कृ लृट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, कृ स्य सिप्, **ऋद्धनोः स्ये** (पा.सू. 7-2-70) इति सूत्रेण इडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, करि स्य सि, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्, म.पु. ए.व.।

888. करिष्ये (18-73) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लृट्, लृटः इट्, **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (पा.सू. 1-3-72) इति आत्मनेपदम्, कृ लृट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, कृ स्य इट्, **ऋद्धनोः स्ये** (पा.सू. 7-2-70) इति सूत्रेण इडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, करि स्य इ, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्, उ.पु. ए.व.।

889. करुणः (12-13) – कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **कॄवृदारिभ्यः उनन्** (उणा. 3-54) इति सूत्रेण उनन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. प्र.वि. ए.व.।

890. करोति (4-20, 5-10, 6-1, 13-31) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, लटः तिप्, कृ तिप्, **तनादिकृञ्भ्यः उः** (पा.सू. 3-1-79) इति उ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, कर् उ ति, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति उकारस्य गुणः। लट्, प्र.पु. ए.व.।

891. करोमि (5-8) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, लटः मिप्, कृ मिप्, **तनादिकृञ्भ्यः उः** (पा.सू. 3-1-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, कर् उ मि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति उकारस्य गुणः। लट्, उ.पु. ए.व.।

892. करोषि (9-27) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, लटः सिप्, कृ सिप्, **तनादिकृञ्भ्यः उः** (पा.सू. 3-1-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, कर् उ सि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति उकारस्य गुणः। लट्, म.पु. ए.व.।

893. कर्णम् (11-34) – कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। व्यक्तेः संज्ञा एषा। पुं. द्वि.वि. ए.व.।

894. कर्णः (1-8) – कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **कॄवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति नप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। व्यक्तेः संज्ञा एषा। पुं. प्र.वि. ए.व.।

895. कर्तव्यम् (3-22) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत् अथवा तव्य, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। नपुं. प्र.वि. ए.व.।

896. कर्तव्यानि (18-6) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) तव्यत्तव्यानीयरः इति तव्यत् अथवा तव्य, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। कर्तव्य जस्, शस्। **जश्शसोः शिः** (पा.सू. 7-2-20) इति शि-आदेशः, **नपुंसकस्य झलचः** (पा.सू. 7-1-72) इति नुम्, **सर्वनामस्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधायाः दीर्घः। नपुं. प्र.वि. ब.व.।

897. कर्ता (3-24,27, 18-14,18,19,26,27,28) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ए.व.।

898. कर्तारम् (4-13, 14-19, 18-16) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. द्वि.वि. ए.व.।

899. कर्तुम् (1-45, 2-17, 3-20, 9-2, 12-11, 16-24, 18-60) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्** (पा.सू. 3-3-10) इति सूत्रेण तुमुन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। अव्ययम्।

900. कर्तृत्वम् (5-14) – कर्तुः भावः इत्यर्थे कर्तृ-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति सूत्रेण त्वप्रत्ययः। कर्तृ इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। नपुं. द्वि.वि. ए.व.।

901. कर्म (2-49, 3-5,8,8,9,15,19,19,24, 4-9,15,15,16,16,18,21,23,23, 5-11, 6-1,3, 7-29, 8-1, 16-24, 17-27, 18-3,5,8,9,10,15,18,19,23,24,25,44,47,48) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

902. कर्मचोदना (18-18) – कर्मणां चोदना, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। चोदन इत्यत्र चुद्-धातोः (चुद सञ्चोदने, चुरादिः, सि.कौ. - धा.सं. 1592) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

903. कर्मजम् (2-51) – कर्मणः जातम्, कर्मन् इति उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति डप्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः इति टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

904. कर्मजा (4-12) – कर्मणः जाता, कर्मन् इति उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति डप्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः इति टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. प्र.वि. ए.व.।

905. कर्मजान् (4-32) – कर्मणः जाताः तान्, कर्मन् इति उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति डप्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः इति टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

906. कर्मणः (3-1,9, 4-17,17, 14-16, 18-7,12) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः। नपुं. पं.वि. ए.व.।

907. कर्मणा (3-20, 18-60) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् टा। नपुं. तृ.वि. ए.व.।

908. कर्मणाम् (3-4, 4-12, 5-1, 14-12, 18-2) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् आम्। नपुं. ष.वि. ब.व.।

909. कर्मणि (2-47, 3-1,22,23,25, 4-18,20, 14-9, 17-26, 18-45) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् ङि। नपुं. स.वि. ए.व.।

910. कर्मफलत्यागः (12-12) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कर्मफलस्य त्यागः **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। त्याग इत्यत्र त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

911. कर्मफलत्यागी (18-11) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कर्मफलस्य त्यागी **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। त्यागिन् इत्यत्र **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) घिनुण्-प्रत्ययः, **जोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

912. कर्मफलप्रेप्सुः (18-27) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कर्मफलस्य प्रेप्सुः **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। प्रेप्सु इत्यत्र प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्-प्रत्ययः, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **आप्ज्ञप्यृधामीत्** (पा.सू. 7-4-55) इति ईकारः, **अत्र लोपोऽभ्यासस्य** (पा.सू. 7-4-58) इति अभ्यासस्य लोपः, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः – प्रेप्सुः इति सम्पन्नम्। पुं. प्र.वि. ए.व.।

913. कर्मफलसंयोगम् (5-14) – कर्म च फलं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। कर्मफलयोः संयोगः **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। संयोग इत्यत्र सम्पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) घञ्प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः। पुं. द्वि.वि. ए.व.।

914. कर्मफलहेतुः (2-47) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कर्मफलस्य हेतुः **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 6-3-84) इति सूत्रेण गुणः। पुं. प्र.वि. ए.व.।

915. कर्मफलम् (5-12, 6-1) — कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

916. कर्मफलासङ्गम् (4-20) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मफलस्य आसङ्गः **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आसङ्ग इत्यत्र आङ्पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. द्वि.वि. ए.व.।

917. कर्मफले (4-14) – कर्मणः फलम्, तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. स.वि. ए.व.।

918. कर्मबन्धनः (3-9) – कर्म बन्धनं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। बन्धन इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. प्र.वि. ए.व.।

919. कर्मबन्धम् (2-39) – कर्म एव बन्धः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। बन्ध इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

920. कर्मबन्धनैः (9-28) – कर्म बन्धनं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। बन्धन इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. तृ.वि. ब.व.।

921. कर्मभिः (3-31, 4-14) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् भिस्, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. तृ.वि. ब.व.।

922. कर्मयोगम् (3-7) – कर्म एव योगः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 11477) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

923. कर्मयोगः (5-2,2) – कर्म एव योगः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.

11477) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

924. कर्मयोगेन (3-3, 13-24) – कर्म एव योगः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 11477) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ए.व.।

925. कर्मसङ्गिनाम् (3-26) – कर्मणि सजन्ति तच्छीलाः, कर्मन् इति उपपदात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ब.व.।

926. कर्मसङ्गिषु (14-15) – कर्मणि सजन्ति तच्छीलाः, कर्मन् इति उपपदे सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। कर्मन् इत्यत्र कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. स.वि. ब.व.।

927. कर्मसङ्गेन (14-7) – कर्मसु सङ्गः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, **सह सुपा** (पा.सू. 2-1-4) इति वा समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्**,** **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. तृ.वि. ए.व.।

928. कर्मसमुद्भवः (3-14) – कर्मणः समुद्भवः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। समुद्भव इत्यत्र सम्-पूर्वकात् उत्पूर्वकात् च भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः,। **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

929. कर्मसङ्ग्रहः (18-18) – कर्मणां सङ्ग्रहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सङ्ग्रह इत्यत्र सम्पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

930. कर्मसंज्ञितः (8-3) – कर्म इति संज्ञा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। कर्मसंज्ञा अस्य **सञ्जाता तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति इतच्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. पं.वि. ए.व.।

931. कर्मसंन्यासात् (5-2) – कर्मणां सन्यासः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। संन्यास इत्यत्र सम्-नि-

पूर्वकात् अस्-धातो (अस गतिदीप्त्यादानेषु, भ्वादिः, सि.कौ. - धा.सं. 886) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः, **इको यणचि** (पा.सू. 6-1-77) इति नेः इकारस्य यकारः। पुं. पं.वि. ए.व.।

932. कर्मसु (2-50, 6-4,17, 9-9) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् सुप्, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. स.वि. ब.व.।

933. कर्माणि (2-48, 3-27,30, 4-14,41, 5-10,14, 9-9, 12-6,10, 13-29, 18-3,11,41) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। कर्मन् जस्, शस्। **जश्शसोः शिः** (पा.सू. 7-2-20) इति शि, **सर्वनामस्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधायाः दीर्घः। नपुं. द्वि.वि. ब.व.।

934. कर्मानुबन्धीनि (15-2) – कर्माणि अनुबध्यन्ते तच्छीलानि, कर्मन् इत्युपपदे अनुपूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ब.व.।

935. कर्मिभ्यः (6-46) – कर्मन् इति शब्दात् **व्रीह्यादिभ्यश्च** (पा.सू. 5-2-116) इति इनि-प्रत्ययः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. पं.वि. ब.व.।

936. कर्मेन्द्रियाणि (3-6) – कर्मणाम् इन्द्रियाणि, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

937. कर्मेन्द्रियैः (3-7) – कर्मणाम् इन्द्रियाणि तैः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

938. कर्शयन्तः (17-6) – कृश्-धातोः (कृश तनूकरणे, दिवादिः, सि.कौ. - धा.सं. 1227) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे कर्शि, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ब.व.।

939. कर्षति (15-7) – कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) लट्, लटः तिप्। कृष् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। लट्, प्र.पु. ए.व.।

940. कलयताम् (10-30) – कल्-धातोः (कल गतौ सङ्ख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, कलि लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-प्रत्ययः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. ष.वि. ब.व.।

941. कलेवरम् (8-5,6) – कले वरः, **संज्ञायाम्** (पा.सू. 2-1-24) इति समासः, **हलदन्तात् सप्तम्याः संज्ञायाम्** (पा.सू. 6-3-9) इति सप्तम्याः अलुक्। कल इत्यत्र कल्-धातोः (कल शब्दसङ्ख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। वर इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

942. कल्पक्षये (9-7) – कल्पस्य क्षयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कल्प इत्यत्र कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **कृपो रो लः** (पा.सू. 8-2-18) इति लकारादेशः। क्षय इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवयावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. स.वि. ए.व.।

943. कल्पते (2-15, 14-26, 18-53,) – कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, कृप् अ त, **कृपो रो लः** (पा.सू. 8-2-18) , **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्, प्र.पु. ए.व.।

944. कल्पादौ (9-7) – कल्पस्य आदिः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कल्प इत्यत्र कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **हेतुमति च** (पा.सू. 3-1-26) इति णिचि, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **कृपो रो लः** (पा.सू. 8-2-18) इति लकारादेशः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. स.वि. ए.व.।

945. कल्याणकृत् (6-40) – कल्याणं करोति, कल्याण इति उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। कल्याण इत्यत्र कल्ये अण्यते इति विग्रहे कल्य इति उपपदे अण्-धातोः (अण शब्दे, भ्वादिः, सि.कौ. - धा.सं. 444) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। कल्य इत्यत्र कल-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो यत्** (पा.सू. 3-1-97) इति यत्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

946. कवयः (4-16, 18-1) – कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ब.व.।

947. कविम् (8-9) – कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ए.व.।

948. कविः (10-37) – कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

949. कवीनाम् (10-37) – कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. ष.वि. ब.व.।

950. कश्चन (3-18, 6-1, 7-26, 8-27) – किम् सु, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, चन इत्यव्ययेन संयोगः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चन इत्यत्र चन्-धातोः (चन शब्दे, भ्वादिः इति कविकल्पद्रुमः) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

951. कश्चित् (2-27,29,29, 3-5,18, 6-40, 7-3,3, 18-69) – किम् सु, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, चित् इत्यव्ययेन संयोगः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

952. कश्मलम् (2-2) – कश्-धातोः (कश गतिशासनयोः, अदादिः, सि.कौ. - धा.सं. 1024) **कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्** (ग.सू. 198) इति कल-प्रत्ययः, प्रत्ययस्य च मुट्-आगमः। नपुं. प्र.वि. ए.व.।

953. कस्मात् (11-37) – किम् ङसि, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मात् आदेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। नपुं. पं.वि. ए.व.।

954. कस्यचित् (5-15) – किम् ङस्, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति स्यादेशः। चित् इत्यव्ययेन संयोगः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

955. कम् (2-21,21) –किम् अम्, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. द्वि.वि. ए.व.।

956. कन्दर्पः (10-28) – कम् (कुत्सितः) दर्पः अस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति कम् इत्यस्य मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति अनुस्वारस्य नकारः। दर्प इत्यत्र दृप्-धातोः (दृप हर्षमोहनयोः, दिवादिः, सि.कौ. - धा.सं. 1196) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। कम् इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं. 443) **अन्येभ्योऽपि दृश्यन्ते** (पा.सू. 3-2-75) इति सूत्रेण विच्-प्रत्ययः, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. प्र.वि. ए.व.।

957. कः (8-2, 11-31, 16-15) – किम् सु, **किमः कः** (पा.सू. 7-2-103) इति कादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. प्र.वि. ए.व.।

958. का (1-36, 2-28,54, 17-1) – किम् सु, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। स्त्री. प्र.वि. ए.व.।

959. काङ्क्षति (5-3, 12-17, 14-22, 18-54) – काक्षि-धातोः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, लट्, लटः तिप्, काङ्क्ष् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

960. काङ्क्षन्तः (4-22) – काक्षि इति धातुः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) , इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, काङ्क्ष् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, काङ्क्षत् जस्, **उगिदचां सर्वनामस्थाने चाधातोः** (पा.सू. 7-1-70) इति नुम्। पुं. प्र.वि. ब.व.।

961. काङ्क्षितम् (1-33) – काक्षि-धातोः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) , इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। नपुं. प्र.वि. ए.व.।

962. काङ्क्षे (1-32) – काक्षि इति धातुः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) परस्मैपदी, **काङ्क्षामि** इति भवेत्। काक्षि इति धातोः इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, काङ्क्ष् लट्, लटः मिप्। काङ्क्ष् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। आत्मनेपदम् अत्र आर्षं ग्राह्यम्। लट्, उ.पु. ए.व.।

963. कामकामाः (9-21) – कामान् कामयन्ते इति विग्रहे काम इति उपपदे कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

964. कामकामी (2-70) – कामान् कामयितुं शीलमस्य, काम इति उपपदे कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **सुप्यजातौ णिनिः ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

965. कामकारतः (16-23) – कामकार-शब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति वार्तिकेन तसि-प्रत्ययः। कामकार इत्यत्र कामेन कारः इति विग्रहे **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। कार इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। अव्ययम्।

966. कामकारेण (5-12) – कामेन कारः तेन, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। कार इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. तृ.वि. ए.व.।

967. कामक्रोधपरायणाः (16-12) – कामश्च क्रोधश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, परम् अयनम् परायणम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, कामक्रोधौ परायणं येषां ते कामक्रोधपरायणाः, **अनेकमन्यपदार्थे**

(पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अयन इत्यत्र अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. प्र.वि. ब.व.।

968. कामक्रोधवियुक्तानाम् (5-26) – कामश्च क्रोधश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, कामक्रोधाभ्यां वियुक्ताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। वियुक्त इत्यत्र वि-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

969. कामक्रोधोद्भवम् (5-23) – कामश्च क्रोधश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, कामक्रोधाभ्याम् उद्भवः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। उद्भव इत्यत्र उद्-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ए.व.।

970. कामधुक् (10-28) – कामान् दोग्धि, काम इत्युपपदे दुह्-धातोः (दुह प्रपूरणे, अदादिः, सि.कौ. - धा.सं.1014) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। स्त्री. प्र.वि. ए.व.।

971. कामभोगार्थम् (16-12) – कामानां भोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कामभोगाय इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, भ्वादिः, सि.कौ. - धा.सं.1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। नपुं. प्र.वि. ए.व.।

972. कामभोगेषु (16-16) – कामानां भोगाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. स.वि. ब.व.।

973. कामरागबलान्विताः (17-5) – कामश्च रागश्च बलञ्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, कामरागबलैः अन्विताः इति **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ.

- धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अन्वित इत्यत्र अनु-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

974. कामरागविवर्जितम् (7-11) – कामश्च रागश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, कामरागाभ्यां विवर्जितम् **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। विवर्जित इत्यत्र वि-पूर्वकात् वृज्-धातोः (वृजी वर्जने, चुरादिः, सि.कौ. - धा.सं. 1813) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

975. कामरूपम् (3-43) – कामं रूपं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. द्वि.वि. ए.व.।

976. कामरूपेण (3-39) – कामं रूपं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. तृ.वि. ए.व.।

977. कामसङ्कल्पवर्जिताः (4-19) – कामाश्चा सङ्कल्पाश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, कामसङ्कल्पैः वर्जिताः **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। सङ्कल्प इत्यत्र सम्पूर्वकात् कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **भावे** (पा.सू. 3-3-18) इति घञ्, **कृपो रो लः** (पा.सू. 8-2-18) इति रस्य लः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। वर्जित इत्यत्र वृज्-धातोः (वृजी वर्जने, चुरादिः, सि.कौ. - धा.सं. 1813) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च**

(पा.सू. 7-3-86) इति गुणः, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ब.व.।

978. कामहैतुकम् (16-8) – काम एव हेतुः **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, कामहेतुना चरति इत्यर्थे **चरति** (पा.सू. 4-4-8) इति ठक्, **इसुसुक्तान्तात् कः** (पा.सू. 7-3-51) इति ठस्य कः, **अनुशतकादीनां च** (पा.सू. 7-3-20) इति उभयवृद्धिः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 6-3-84) इति सूत्रेण गुणः। नपुं. द्वि.वि. ए.व.।

979. कामम् (16-10,18, 18-53) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

980. कामः (2-62, 3-37, 7-11, 16-21) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

981. कामात्मानः (2-43) – कामः आत्मा एषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. प्र.वि. ब.व.।

982. कामात् (2-62) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, काम ङसि, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति आत्। पुं. पं.वि. ए.व.।

983. कामान् (2-55,71, 6-24, 7-22) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। काम शस्, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति नकारादेशः। पुं. द्वि.वि. ब.व.।

984. कामाः (2-70) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। काम जस्, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः। पुं. प्र.वि. ब.व.।

985. कामेप्सुना (18-24) – कामम् ईप्सुः, **द्वितीया** (पा.सू. 2-1-24) इति योगविभागेन समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। ईप्सु इत्यत्र आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **धातोः कर्मणः समाकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **आप्ज्ञप्यृधामीत्** (पा.सू. 7-4-55) इति ईकारः, **अत्र लोपोऽभ्यासस्य** (पा.सू. 7-4-58) इति अभ्यासस्य लोपः, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः। पुं. तृ.वि. ए.व.।

986. कामैः (7-20) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। काम भिस्, **अतो भिस ऐस्** (पा.सू. 7-1-9)। पुं. तृ.वि. ब.व.।

987. कामोपभोगपरमाः (16-11) – कामानाम् उपभोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कामोपभोगः एव परमः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। उपभोग इत्यत्र उप-पूर्वकात् भुज्-

धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। परम इत्यत्र पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

988. काम्यानाम् (18-2) – कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **कमेर्णिङ्** (पा.सू. 3-1-30) इति णिङ्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, कामि, **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. ष.वि. ब.व.।

989. कायक्लेशभयात् (18-8) – कायस्य क्लेशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कायक्लेशात् भयम्, **पञ्चमी भयेन** (पा.सू. 2-1-37) इति समासः। काय इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (पा.सू. 3-3-41) इति घञ्-प्रत्ययः, चकारस्य कादेशश्च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। क्लेश इत्यत्र क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। भय इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. पं.वि. ए.व.।

990. कायशिरोग्रीवम् (6-13) – कायश्च शिरश्च ग्रीवा च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (पा.सू. 2-4-2) इति एकवद्भावः। काय इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (पा.सू. 3-3-41) इति घञ्-प्रत्ययः, चकारस्य कादेशश्च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। शिरस् इत्यत्र श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **श्रयतेः स्वाङ्गे शिरः किच्च** (उणा. 4-193) इति असुन्-प्रत्ययः, धातोः शिरादेशः च। ग्रीवा इत्यत्र गॄ-धातोः (गॄ निगरणे तुदादिः, सि.कौ. - धा.सं. 1410) **शेवायह्वजिह्वाग्रीवाप्वामीवाः** (उणा. 1-152) इति सूत्रेण वन्-प्रत्ययः ईडागमश्च, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

991. कायम् (11-44) – चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (पा.सू. 3-3-41) इति घञ्-प्रत्ययः, चकारस्य कादेशश्च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। पुं. द्वि.वि. ए.व.।

992. कायेन (5-11) – चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (पा.सू. 3-3-41) इति घञ्-प्रत्ययः, चकारस्य कादेशश्च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। पुं. तृ.वि. ए.व.।

993. कारणम् (6-3,3, 13-21) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, ततः कारि इत्यस्मात् **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. प्र.वि. ए.व.।

994. कारणानि (18-13) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, ततः कारि इत्यस्मात् **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. द्वि.वि. ब.व.।

995. कारयन् (5-13) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, कारि लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

996. कार्पण्यदोषोपहतस्वभावः (2-7) – कार्पण्यं दोषः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, कार्पण्यदोषेण उपहतः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, कार्पण्यदोषोपहतः स्वभावः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कार्पण्य इत्यत्र कृपण-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, कृपण इत्यत्र कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) बाहुलकात् क्युन्-प्रत्ययः बाहुलकात् एव च **कृपो रो लः** (पा.सू. 8-2-18) इति लत्वाभावः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। उपहत इत्यत्र उप-पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। स्वभाव इत्यत्र स्वस्य भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। पुं. प्र.वि. ए.व.।

997. कार्यकारणकर्तृत्वे (13-20) – कार्यं च कारणं च कार्यकारणे, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। कार्यकारणयोः कर्तृत्वम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कार्य इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। कारण इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, ततः कारि इत्यस्मात् **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। कर्तृत्व इत्यत्र कर्तृ-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, कर्तृ इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि. ए.व.।

998. कार्यते (3-5) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, ततः कारि इत्यस्य **सनाद्यन्ताः धातवः** (पा.सू. 3-1-32) इति धातुसंज्ञा, ततः **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, कारि यक् त, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

999. कार्यम् (3-17,19, 6-1, 18-5,9,31) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

1000. कार्याकार्यव्यवस्थितौ (16-24) – कार्यं च अकार्यं च कार्याकार्ये, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। कार्याकार्ययोः व्यवस्थितिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कार्य इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। अकार्य इत्यत्र

न कार्यम् अकार्यम्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। व्यवस्थिति इत्यत्र वि-आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति सूत्रेण धातोः आकारस्य इकारः। स्त्री. स.वि. ए.व.।

1001. कार्याकार्ये (18-30) – कार्यं च अकार्यं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। कार्य इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। अकार्य इत्यत्र न कार्यम् अकार्यम्, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। नपुं. द्वि.वि. द्वि.व.।

1002. कार्ये (18-22) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नपुं. स.वि. ए.व.।

1003. कालम् (8-23) – कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

1004. कालः (10-30,33, 11-32) – कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1005. कालानलसन्निभानि (11-25) – कालस्य अनलः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कालानलस्य सन्निभानि **षष्ठी** (पा.सू. 2-2-8) इति समासः। कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। अनल इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। सन्निभ इत्यत्र सम्-नि-पूर्वकात् भा-धातोः (भा दीप्तौ, अदादिः, सि.कौ. - धा.सं. 1051) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। नपुं. द्वि.वि. ब.व.।

1006. काले (8-23, 17-20) – कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1007. कालेन (4-2,38) – कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्**

(पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ए.व.।

1008. कालेषु (8-7,27) – कल्-धातोः (कल शब्दसंख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा कल्-धातोः (कल गतौ संख्याने च, चुरादिः, सि.कौ. - धा.सं. 1866) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. ब.व.।

1009. काशिराजः (1-5) – काश्याः राजा, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **राजाहस्सखिभ्यष्टच्** (पा.सू. 5-4-91) इति समासान्तः टच्-प्रत्ययः समासान्तः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। काशि इत्यत्र काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **सर्वधातुभ्य इन्** (उणा. 4-117) इत्यनेन इन्-प्रत्ययः। राजन् इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति कनिन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1010. काश्यः (1-17) – **क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्** (वा. 2669) इति वार्तिकसाहाय्येन काशी इति शब्दात् **वृद्धेत्कोसलाजादेर्ञ्यङ्** (पा.सू. 4-1-171) इति ञ्यङ्-प्रत्ययः। काशी इत्यत्र काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। पुं. प्र.वि. ए.व.।

1011. काम् (6-37) – किम् अम्, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। स्त्री. द्वि.वि. ए.व.।

1012. किम् (1-1,32,32,35, 2-36,54,54,54, 3-1,33, 4-16,16, 8-1,1,1,1,1, 9-33, 10-42, 16-8) – किम् सु, **स्वमोर्नपुंसकात्** (पा.सू. 7-1-23) इति सुलोपः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। नपुं. द्वि.वि. ए.व.।

1013. किमाचारः (14-21) – कः आचारः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। आचार इत्यत्र आङ्पूर्वकात् चर्-धातोः **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1014. किञ्चन (3-22) – किं च चन च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चन इत्यत्र चन्-धातोः (चन शब्दे, भ्वादिः इति कविकल्पद्रुमः) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

1015. किञ्चित् (4-20, 5-8, 6-25, 7-7, 13-26) – किं च चित् च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

1016. किरीटी (11-35) – किरीटः अस्ति अस्य, **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। किरीट कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) इत्यत्र **कॄतॄकृपेः कीटन्** (उणा. 4-

184) इति कीटन्-प्रत्ययः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति धातोः ऋ-वर्णस्य स्थाने इ-आदेशः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः। पुं. प्र.वि. ए.व.।

1017. किरीटिनम् (11-17,46) – किरीटः अस्ति अस्य तम्, **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। किरीट कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) इत्यत्र **कॄतॄकृपेः कीटन्** (उणा. 4-184) इति कीटन्-प्रत्ययः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति धातोः ऋ-वर्णस्य स्थाने इ-आदेशः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः। पुं. द्वि.वि. ए.व.।

1018. किल्बिषम् (4-21, 18-47) – किल्-धातोः (किल क्षेपे, तुदादिस्थः इति सुधाव्याख्याकारः) **किलेर्बुक् च** (उणा. 1-50) इति टिषच्-प्रत्ययः प्रत्ययस्य बुक्-आगमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

1019. कीर्तयन्तः (9-14) – कॄत्-धातोः (कॄत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः, **उपधायाञ्च** (पा.सू. 8-2-78) इति दीर्घः, कीर्ति, तस्मात् लट्, कीर्ति लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1020. किर्तिम् (9-33) – **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** (पा.सू. 3-3-97) इति सूत्रेण कॄत्-धातोः (कॄत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) चुरादित्वात् णिचि, **उपधायाश्च** (पा.सू. 7-1-101) इति इकारादेशः, **उपधायाञ्च** (पा.सू. 8-2-78) इति दीर्घः, **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युचि प्राप्ते अनेन क्तिन्नन्तः निपात्यते। स्त्री. द्वि.वि. ए.व.।

1021. कीर्तिः (10-34) – **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** (पा.सू. 3-3-97) इति सूत्रेण कॄत्-धातोः (कॄत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) चुरादित्वात् णिचि, **उपधायाश्च** (पा.सू. 7-1-101) इति इकारादेशः, **उपधायाञ्च** (पा.सू. 8-2-78) इति दीर्घः, **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युचि प्राप्ते अनेन क्तिन्नन्तः निपात्यते। स्त्री. प्र.वि. ए.व.।

1022. कुतः (2-2,66, 4-31, 11-43) – किम् तसिल्, **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्, **कु तिहोः** (पा.सू. 7-2-104) इति कु-आदेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्त्यात् अभस्यापि टेर्लोपः। अव्ययम्।

1023. कुन्तिभोजः (1-5) – कश्चन राजा। कुन्ति इति पृषोदरादित्वात् (पा.सू. 6-4-109) सिद्धम्। भोज इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1024. कुन्तीपुत्रः (1-16) – कुन्त्याः पुत्रः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुन्ति इति पृषोदरादित्वात् (पा.सू. 6-4-109) सिद्धम्। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

1025. कुरु (2-48, 3-8, 4-15, 12-11, 18-63) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लोट् लोटः सिप्, कृ सिप्, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-1-110) इति उकारादेशः, **उतश्च प्रत्ययात् असंयोगपूर्वात्** (पा.सू. 6-4-106) इति हेः लुक्। लोट्, म.पु. ए.व.।

1026. कुरुक्षेत्रे (1-1) – कुरूणां क्षेत्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि. ए.व.।

1027. कुरुते (3-21, 4-37,37) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, लटः त, **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (पा.सू. 1-3-72) इति आत्मनेपदम्, कृ त, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-1-110) इति उकारादेशः। लट्, प्र.पु. ए.व.।

1028. कुरुनन्दन (2-41, 6-43, 14-13) – कुरोः नन्दनः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। नन्दन इत्यत्र नद् (टुनदि समृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 67) इति धातोः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः नन्द् इत्यस्मात् **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **नन्दग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. सम्बो.वि. ए.व.।

1029. कुरुप्रवीर (11-48) – कुरुषु प्रवीरः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। प्रवीर इत्यत्र प्रकृष्टः वीरः इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। वीर इत्यत्र वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. सम्बो.वि. ए.व.।

1030. कुरुवृद्धः (1-12) – कुरुषु वृद्धः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। वृद्ध इत्यत्र वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **झषस्तथोः धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन पूर्वधकारस्य दकारः। पुं. प्र.वि. ए.व.।

1031. कुरुश्रेष्ठ (10-19) – कुरुषु श्रेष्ठः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। श्रेष्ठ इत्यत्र प्रशस्य इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू 5-3-55) इति इष्ठन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इति प्रशस्य-शब्दस्य स्थाने श्रादेशः। प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. सम्बो.वि. ए.व.।

1032. कुरुष्व (9-27) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लोट्, लोटः थास्। कृ थास्, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारादेशः, **थासः से** (पा.सू. 3-4-80) इति से, सवाभ्यां वामौ इति एकारस्य वकारः। लोट्, म.पु. ए.व.।

1033. कुरुसत्तम (4-31) – कुरुषु सत्तमः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। सत्तम इत्यत्र सत् इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू 5-3-55) इति तमप्-प्रत्ययः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। पुं. सम्बो.वि. ए.व.।

1034. कुरून् (1-25) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृग्रोरुच्च** (उणा. 1-24) इति सूत्रेण कु-प्रत्ययः धातोः ऋ-वर्णस्य च स्थाने उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। पुं. प्र.वि. ब.व.।

1035. कुर्यात् (3-25) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) विधिलिङ्, लिङः तिप्, कृ तिप्, **तनादिकृञ्भ्यः उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारादेशः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः। विधिलिङ्, प्र.पु. ए.व.।

1036. कुर्याम् (3-24) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) विधिलिङ्, लिङः मिप्, कृ मिप्, **तनादिकृञ्भ्यः उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारादेशः, **तस्थस्थमिपां तान्तन्तामः** (पा.सू. 3-4-101) इति अमादेशः। विधिलिङ्, उ.पु. ए.व.।

1037. कुर्वन् (4-21, 5-7,13, 12-10, 18-47) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **तनादिकृञ्भयः उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारः, यणादेशः, पुंलिङ्गे प्रथमैकवचने कुर्वन् इति। पुं. प्र.वि. ए.व.।

1038. कुर्वन्ति (3-25, 5-11) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, लटः झि। कृ झि, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) गुणः इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारः, यणादेशः। लट्, प्र.पु. ब.व.।

1039. कुर्वाणः (18-56) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारादेशः। पुं. प्र.वि. ए.व.।

1040. कुलक्षयकृतम् (1-38,39) – कुलानां क्षयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, कुलक्षयेन कृतम् **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। कुल इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। क्षय इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवयावः** (पा.सू. 6-1-78) इति अयादेशः। कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

1041. कुलक्षये (1-40) – कुलानां क्षयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुल इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च**

(पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। क्षय इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवयावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. स.वि. ए.व.।

1042. कुलघ्नानाम् (1-42,43) – कुलं घ्नन्ति तेषाम्, कुल इत्युपपदे हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **अमनुष्यकर्तृके च** (पा.सू. 3-2-53) इति टक्-प्रत्ययः, **गमहनजनखनघसां क्ङित्यनङि** (पा.सू. 6-4-98) इति उपधालोपः, **हो हन्तेर्ञ्णिन्नेषु** (पा.सू. 7-3-54) इति हस्य कवर्गादेशः। कुल इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

1043. कुलधर्माः (1-40,43) – कुलस्य धर्माः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुल इत्यत्र इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1044. कुलस्य (1-42) – इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. ष.वि. ए.व.।

1045. कुलस्त्रियः (1-41) – कुलस्य स्त्रियः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री इत्यत्र स्त्यै-धातोः (स्त्यै शब्दसंघातयोः, भ्वादिः, सि.कौ. - धा.सं. 910) **स्त्यायतेर्ड्रट्** (उणा. 4-166) इति ड्रट्, डित्त्वसामर्थ्यात् टेः लोपः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। स्त्री. प्र.वि. ब.व.।

1046. कुलम् (1-40) – इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

1047. कुले (6-42) – इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं.842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. स.वि. ए.व.।

1048. कुशले (18-10) – कुश्-धातोः (कुश संश्लेषणे, दिवादिः इति कविकल्पद्रुमकारः) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. स.वि. ए.व.।

1049. कुसुमाकरः (10-35) – कुसुमानामाकरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। कुसुम इत्यत्र **कुसोरुम्भोमेदेताः** (उणा. 4-106) इति कुस्-धातोः (कुस संश्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1218) उम-प्रत्ययः। आकर इत्यत्र आङ्पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **पुंसि संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1050. कूटस्थम् (12-3)– कूट इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64)इति आकारलोपः। कूट इत्यत्र कूट्-धातोः (कूट परितापे, चुरादिः, सि.कौ. - धा.सं. 1891) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1051. कूटस्थः (6-8, 15-16) – कूट इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64)इति आकारलोपः। कूट इत्यत्र कूट्-धातोः (कूट परितापे, चुरादिः, सि.कौ. - धा.सं. 1891) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1052. कूर्मः (2-58) – कुत्सितः ऊर्मिः यस्य, **पृषोदरादीनि यथोपदिष्टमि**ति (पा.सू. 6-3-109) साधुत्वम्। ऊर्मि इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **अर्तेरूच्च** (उणा. 4-44) इति उणादिसूत्रेण मि-प्रत्ययः धातोः ऊदादेशश्च, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। पुं. प्र.वि. ए.व.।

1053. कृतकृत्यः (15-20) – कृतं कृत्यं येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। कृत्य इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **विभाषा कृवृषोः** (पा.सू. 3-1-120) इति क्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

1054. कृतनिश्चयः (2-37) – कृतः निश्चयः येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। निश्चय इत्यत्र नि-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

1055. कृतम् (4-15,15, 17-28, 18-23) – कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। नपुं. प्र.वि. ए.व.।

1056. कृताञ्जलिः (11-14,35) – कृतः अञ्जलिः येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। कृत इत्यत्र कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। अञ्जलि इत्यत्र **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः** (उणा. 4-2) इति अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) अलि-प्रत्ययः। पुं. प्र.वि. ए.व.।

1057. कृतान्ते (18-13) – कृतानामन्तः यस्मिन् सः कृतान्तः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कृत इत्यत्र कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य

निषेधः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. स.वि. ए.व.।

1058. कृतेन (3-18) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। नपुं. तृ.वि. ए.व.।

1059. कृत्वा (2-38, 4-22, 5-27,27, 6-12,25, 11-35, 18-8,68) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

1060. कृत्स्नकर्मकृत् (4-18) – कृत्स्नं कर्म, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। कृत्स्नकर्म करोति इति विग्रहे कृत्स्नकर्मन् इत्युपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **न लोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। कृत्स्न इत्यत्र कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1061. कृत्स्नवत् (18-22) – कृत्स्नेन तुल्यम्, **तेन तुल्यं क्रिया चेद्वतिः** (पा.सू. 5-1-115) इति वति-प्रत्ययः। कृत्स्न इत्यत्र कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

1062. कृत्स्नवित् (3-29) – कृत्स्नं वेत्ति, कृत्स्न इति उपपदात् विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। कृत्स्न इत्यत्र कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

1063. कृत्स्नस्य (7-6) – कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. ष.वि. ए.व.।

1064. कृत्स्नम् (1-40, 7-29, 9-8, 10-42, 11-7,13, 13-33,33) – कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृत्यशूभ्यां क्स्नः** (उणा. 3-17) इति क्स्न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

1065. कृपणाः (2-49) – कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) बाहुलकात् क्युन्-प्रत्ययः बाहुलकात् एव च **कृपो रो लः** (पा.सू. 8-2-18) इति लत्वाभावः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. प्र.वि. ब.व.।

1066. कृपया (1-28, 2-1) – क्रप्-धातोः (क्रप कृपायां गतौ च, भ्वादिः, सि.कौ. - धा.सं. 771) **क्रपेः सम्प्रसारणं च** (ग.सू. 32) इति भिदादिपाठात् भिदादिभ्यो अङ् (पा.सू. 3-3-104) इति अङ्, सम्प्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

1067. कृपः (1-8) – आचार्यस्य नाम इदम्। कृपा अस्य अस्ति इति अर्थे कृपा शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति सूत्रेण अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। कृपा इत्यत्र क्रप्-धातोः (क्रप कृपायां गतौ च, भ्वादिः, सि.कौ. - धा.सं. 771) **क्रपेः सम्प्रसारणं च** (ग.सू. 32) इति भिदादिपाठात् भिदादिभ्यो अङ् (पा.सू. 3-3-104) इति अङ्, सम्प्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1068. कृषिगौरक्ष्यवाणिज्यम् (18-44) – कृषिश्च गौरक्ष्यं च वाणिज्यं च एतेषां समाहारः **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। कृषि इत्यत्र कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **इक्कृष्यादिभ्यः** (वा. 2232) इति इक्-प्रत्ययः। गौरक्ष्य इत्यत्र गां रक्षति इत्यर्थे गो-उपपदात् रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, ततः गोरक्ष-शब्दात् गोरक्षस्य भावः इत्यर्थे **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति सूत्रेण ष्यञ्प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इत्यनेन आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) इति डो-प्रत्ययः, डित्वात् अभस्यापि टेः लोपः। वाणिज्य इत्यत्र **पणेरिज्यादेश्च वः** (उणा. 2-71) इति पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) इजि-प्रत्ययः पस्य वः च, वणिज् इति सम्पन्नम्, ततः वणिजां कर्म भावो वा इत्यर्थे वणिज् इति शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इत्यनेन आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। नपुं. प्र.वि. ए.व.।

1069. कृष्ण (1-28,32,41, 5-1, 6-34,37,39, 11-41, 17-1) – कृष्ण इत्यत्र कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **कृषेर्वर्णे** (उणा. 3-4) इति नक्, ततः कृष्णः अस्य अस्ति इत्यर्थे कृष्ण-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, ततः **गुणवचनेभ्यो मतुपो लुक्** (वा. 3185) इति मतुपः लुक्। पुं. सम्बो.वि. ए.व.।

1070. कृष्णम् (11-35) – कृष्ण इत्यत्र कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **कृषेर्वर्णे** (उणा. 3-4) इति नक्, ततः कृष्णः अस्य अस्ति इत्यर्थे कृष्ण-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, ततः **गुणवचनेभ्यो मतुपः लुक्** (वा. 3185) इति मतुपः लुक्। पुं. द्वि.वि. ए.व.।

1071. कृष्णः (8-25, 18-78) – कृष्ण इत्यत्र कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **कृषेर्वर्णे** (उणा. 3-4) इति नक्, ततः कृष्णः अस्य अस्ति इत्यर्थे कृष्ण-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, ततः **गुणवचनेभ्यो मतुपो लुक्** (वा. 3185) इति मतुपः लुक्। पुं. प्र.वि. ए.व.।

1072. कृष्णात् (18-75) – कृष्ण इत्यत्र कृष्-धातोः (कृष विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **कृषेर्वर्णे** (उणा. 3-4) इति नक्, ततः कृष्णः अस्य अस्ति इत्यर्थे कृष्ण-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, ततः **गुणवचनेभ्यो मतुपो लुक्** (वा. 3185) इति मतुपः लुक्। पुं. पं.वि. ए.व.।

1073. के (21-1) – किम् जस्, **किमः कः** (पा.सू. 7-2-103) इति क-आदेशः, **जसः शी** (पा.सू. 7-1-17) इति शी-आदेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. प्र.वि. ब.व.।

1074. केचित् (11-21,27, 13-24) – किम् जस्, **किमः कः** (पा.सू. 7-2-103) इति क-आदेशः, **जसः शी** (पा.सू. 7-1-17) इति शी-आदेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। किमः पुंलिङ्गे बहुवचने रूपं के इति। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। चित् इति अव्ययम्। केन इत्यत्र पुं. प्र.वि. ब.व.।

1075. केन (3-36) – किम् टा, **किमः कः** (पा.सू. 7-2-103) इति क-आदेशः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. तृ.वि. ए.व.।

1076. केनचित् (12-19) – किम् टा, **किमः कः** इ(पा.सू. 7-2-103) ति क-आदेशः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। चित् इति अव्ययम्। केन इत्यत्र पुं. तृ.वि. ए.व.।

1077. केवलम् (4-21, 18-16) – केव्-धातोः (केवृ सेवने, भ्वादिः, सि.कौ. - धा.सं. 506) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1078. केवलैः (5-11) – केव्-धातोः (केवृ सेवने, भ्वादिः, सि.कौ. - धा.सं. 506) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कलप्रत्ययः। नपुं. तृ.वि. ब.व.।

1079. केशव (1-31, 2-54, 3-1, 10,14) – केशशब्दात् **केशाद्वोऽन्यतरस्याम्** (पा.सू. 5-2-109) इति सूत्रेण मतुबर्थे व-प्रत्ययः। केश इत्यत्र क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **क्लिशेरन् लो लोपश्च** (उणा. 5-33) इति अन्-प्रत्ययः ल-लोपः च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. सम्बो.वि. ए.व.।

1080. केशवस्य (11-35) – केशशब्दात् **केशाद्वोऽन्यतरस्याम्** (पा.सू. 5-2-109) इति सूत्रेण मतुबर्थे वप्रत्ययः। केश इत्यत्र क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **क्लिशेरन् लो लोपश्च** (उणा. 5-33) इति अन्-प्रत्ययः ल-लोपः च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ए.व.।

1081. केशवार्जुनयोः (18-76) – केशवश्च अर्जुनश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। केशव इत्यत्र केशशब्दात् **केशाद्वोऽन्यतरस्याम्** (पा.सू. 5-2-109) इति सूत्रेण मतुबर्थे वप्रत्ययः। केश इत्यत्र क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **क्लिशेरन् लो लोपश्च** (उणा. 5-33) इति अन्-प्रत्ययः ल-लोपः च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अर्जुन इत्यत्र अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **अर्जेर्णिलुक्** (उणा. सू. 3-58) च इति उनन्-प्रत्ययः णेः लुक् च। पुं. ष.वि. द्वि.व.।

1082. केशिनिषूदन (18-1) – केशिनः निषूदन! **षष्ठी** (पा.सू. 2-2-8) इति समासः। केशिन् इत्यत्र केश-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, केश इत्यत्र क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **क्लिशेरन् लो लोपश्च** (उणा. 5-33) इति अन्-प्रत्ययः ल-लोपः च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। निषूदन इत्यत्र नि-पूर्वकात् सूद्-धातोः (षूद क्षरणे, भ्वादिः, सि.कौ. - धा.सं. 25) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्। पुं. सम्बो.वि. ए.व.।

1083. केषु (10-17,27) – किम् सुप्, **किमः कः** (पा.सू. 7-2-103) इति कादेशः, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एकारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. स.वि. ब.व.।

1084. कैः (1-22, 14-21) – किम् भिस्, **किमः कः**, (पा.सू. 7-2-103) **अतो भिस ऐस्** (पा.सू. 7-1-9) इति ऐस्, **वृद्धिरेचि** (पा.सू. 6-1-88) इति वृद्धिः। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। पुं. तृ.वि. ब.व.।

1085. कौन्तेय (2-14,37,60, 3-9,39, 5-22, 6-35, 7-8, 8-6,16, 9-7,10,23,27,31, 13-1,31, 14-4,7, 16-20,22, 18-48,50,60) – कुन्त्याः अपत्यं पुमान्**, स्त्रीभ्यो ढक्** (पा.सू. 4-1-120) इति ढक्, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति एयादेशः, **किति च** (पा.सू. 7-2-118) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-कारलोपः। कुन्ति इति पृषोदरादित्वात् (पा.सू. 6-4-109) सिद्ध्यति। पुं. सम्बो.वि. ए.व.।

1086. कौन्तेयः (1-27) – कुन्त्याः अपत्यं पुमान्**, स्त्रीभ्यो ढक्** (पा.सू. 4-1-120) इति ढक्, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति एयादेशः, **किति च** (पा.सू. 7-2-118) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-कारलोपः। कुन्ति इति पृषोदरादित्वात् (पा.सू. 6-4-109) सिद्ध्यति। पुं. प्र.वि. ए.व.।

1087. कौमारम् (2-13) – कुमारस्य भावः, **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। कुमार इत्यत्र कुमार-धातोः (कुमार क्रीडायाम्, चुरादिः, सि.कौ. - धा.सं. 1878) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-3-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. प्र.वि. ए.व.।

1088. कौशलम् (2-50) – कुशलस्य भावः इत्यर्थे कुशल-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। कुशल इत्यत्र कुश्-धातोः (कुश संश्लेषणे, दिवादिः, वाचस्पत्यम्) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1089. क्रतुः (9-16,) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः कतुः** (उणा. 1-77) इति कतु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

1090. क्रियते (17-18,19, 18-9,24) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) कर्मणि लट्, लटः त। कृ त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

1091. क्रियन्ते (17-25) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) कर्मणि लट्, लटः झ, कृ झ, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्। कर्मणि लट्, प्र.पु. ब.व.।

1092. क्रियमाणानि (3-27, 13-29) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) कर्मणि लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **आने मुक्** (पा.सू. 7-2-82) इति मुगागमः। नपुं. प्र.वि. ब.व.।

1093. क्रियाभिः (11-48) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** इति शप्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङ्। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ब.व.।

1094. क्रियाविशेषबहुलाम् (2-43) – क्रियाविशेषाः बहुलाः यस्यां सा, क्रियाविशेषबहुला, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति शप्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। विशेष इत्यत्र वि-पूर्वकात् शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। बहुल इत्यत्र वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) बाहुलकात् उलच्-प्रत्ययः, माधवाद्याचार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। अथवा बहून् लाति इति अर्थे बहु इति उपपदे ला-धातोः (ला आदाने, रुधादिः, सि.कौ. - धा.सं. 1451) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। स्त्री. द्वि.वि. ए.व.।

1095. क्रूरान् (16-19) – कृत्-धातोः (कृती वेष्टने, रुधादिः, सि.कौ. - धा.सं. 1447) **कृतेश्छः क्रू च** (उणा. 2-21) इति सूत्रेण रक्प्रत्ययः धातोः क्रू-आदेशश्च, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

1096. क्रोधम् (16-18, 18-53) – क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1097. क्रोधः (2-62, 3-37, 16-4,21) – क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1098. क्रोधात् (2-63) – क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. पं.वि. ए.व.।

1099. क्लेदयन्ति (2-23) – क्लिद्-धातोः (क्लिदू आर्द्रीभावे, दिवादिः, सि.कौ. - धा.सं. 1242) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, लट्, लटः झि, क्लेदि झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ब.व.।

1100. क्लेशः (12-5) – क्लिश्-धातोः (क्लिश उपतापे, दिवादिः, सि.कौ. - धा.सं. 1161) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1101. क्लैब्यम् (2-3) – क्लीब-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। क्लीब इत्यत्र क्लीब्-धातोः (क्लीबृ अधार्ष्ट्ये, भ्वादिः, सि.कौ. - धा.सं. 381) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1102. क्वचित् (18-12) – किम् ङि, **किमोऽत्** (पा.सू. 5-3-12) इति अत्, **क्वाति** (पा.सू. 7-2-105) इति क्वादेशः, **सुपो धातुप्रातिपदिकयोः** (पा.सू. 2-4-71) इति ङेः लुक्। क्व इति सम्पन्नम्। किम् इत्यत्र कु-धातोः (कुङ् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 951) बाहुलकात् डिम्-प्रत्ययः, डित्त्वसामर्त्यात् अभस्यापि टेर्लोपः। चित् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। चित् इति अव्ययम्। अव्ययम्।

1103. क्षणम् (3-5) – क्षण्-धातोः (क्षणु हिंसायाम्, तनादिः, सि.कौ. - धा.सं. 1465) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1104. क्षत्त्रकर्म (18-43) – क्षत्राणां कर्म, **षष्ठी** (पा.सू. 2-2-8) इति समासः। क्षत्त्र इत्यत्र क्षद्-धातोः (क्षद संवृतौ, सौत्रधातुः) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। कर्मन् इत्यत्र कृ-धातोः

(डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1105. क्षत्रियस्य (2-31) – क्षत्र-शब्दात् **क्षत्राद्घः** (पा.सू. 4-1-138) इति घ-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति घ-स्थाने इयादेशः। क्षत्र इत्यत्र क्षद्-धातोः (क्षद संवृतौ, सौत्रधातुः) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. ष.वि. ए.व.।

1106. क्षत्रियाः (2-32) – क्षत्र-शब्दात् **क्षत्राद्घः** (पा.सू. 4-1-138) इति घ-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति घ-स्थाने इयादेशः। क्षत्र इत्यत्र क्षद्-धातोः (क्षद संवृतौ, सौत्रधातुः) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ब.व.।

1107. क्षमा (10-4,34, 16-3) – क्षम्-धातोः (क्षमूष् सहने, भ्वादिः, सि.कौ. - धा.सं. 442) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1108. क्षमी (12-13) – क्षम्-धातोः (क्षमूष् सहने, भ्वादिः, सि.कौ. - धा.सं. 442) **शमित्यष्टाभ्यो घिनुण्** (पा.सू. 3-2-141) इति घिनुण्-प्रत्ययः, **सौ च** (पा.सू. 6-4-13) इति दीर्घः। पुं. प्र.वि. ए.व.।

1109. क्षयम् (18-25) – क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. द्वि.वि. ए.व.।

1110. क्षयाय (16-9) – क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. च.वि. ए.व.।

1111. क्षरम् (15-18) – क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1112. क्षरः (8-4, 15-16,16) – क्षर्-धातोः (क्षर सञ्चलने, भ्वादिः, सि.कौ. - धा.सं. 851) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1113. क्षान्तिः (13-7, 18-42) – क्षम्-धातोः (क्षमूष् सहने, भ्वादिः, सि.कौ. - धा.सं. 442) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति दीर्घः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः। स्त्री. प्र.वि. ए.व.।

1114. क्षामये (11-42) – क्षम्-धातोः (क्षमूष् सहने, भ्वादिः, सि.कौ. - धा.सं. 442) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धौ क्षामि, **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (ग.सू. 1188) इति मित्त्वात् **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वे प्राप्ते अस्मिन् सूत्रे **वा चित्तविरागे** (पा.सू. 6-4-91) इति सूत्रात् वा इति पदमनुवर्त्य व्यवस्थितविभाषाश्रयणेन ह्रस्वो न, तेन क्षामि इति णिजन्तात् लट्, लटः इट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। लट्, उ.पु. ए.व.।

1115. क्षिपामि (16-19) – क्षिप्-धातोः (क्षिप प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1285) लट्, लटः मिप्। क्षिप् मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्, उ.पु. ए.व.।

1116. क्षिप्रम् (4-12, 9-31) – क्षिप्-धातोः (क्षिप प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1285) **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** (उणा. 2-13) इति रक्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

1117. क्षीणकल्मषाः (5-25) – क्षीणानि कल्मषाणि येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। क्षीण इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **निष्ठायामण्यदर्थे** (पा.सू. 6-4-60) इति दीर्घः, **क्षियो दीर्घात्** (पा.सू. 8-2-46) इति तस्य नकारः,

**अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। कल्मष इत्यत्र कर्म स्यति इति विग्रहे कर्मन् इति उपपदे सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सुं. 1147) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति सूत्रेण साधुत्वम्, तस्मादेव रेफस्य लत्वम्, षत्वञ्च, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1118. क्षीणे (9-21) – क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **गत्यर्थाकर्मकाश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **निष्ठायामण्यदर्थे** (पा.सू. 6-4-60) इति दीर्घः, **क्षियो दीर्घात्** (पा.सू. 8-2-46) इति तस्य नकारः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. स.वि. ए.व.।

1119. क्षुद्रम् (2-3) – क्षुद्-धातोः (क्षुदिर् सम्पेषणे, रुधादिः, सि.कौ. - धा.सं. 1443) **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** (उणा. 2-13) इति रक्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

1120. क्षेत्रक्षेत्रज्ञयोः (13-2, 34) – क्षेत्रं च क्षेत्रज्ञश्च तयोः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। क्षेत्रज्ञ इत्यत्र क्षेत्रं जानाति इति विग्रहे क्षेत्र-उपपदे ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. ष.वि. द्वि.व.।

1121. क्षेत्रक्षेत्रज्ञसंयोगात् (13-26) –क्षेत्रं च क्षेत्रज्ञश्च क्षेत्रक्षेत्रज्ञौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। क्षेत्रक्षेत्रज्ञयोः संयोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। क्षेत्र इत्यत्र क्षेत्र इत्यत्र क्षिधातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। क्षेत्रज्ञ इत्यत्र क्षेत्रं जानाति इति विग्रहे क्षेत्र-उपपदे ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। सम्पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. पं.वि. ए.व.।

1122. क्षेत्रज्ञम् (13-2) – क्षेत्रं जानाति इति विग्रहे क्षेत्र-उपपदे ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1123. क्षेत्रज्ञः (13-1) – क्षेत्रं जानाति, क्षेत्रपूर्वकात् ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति कप्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1124. क्षेत्रम् (13-1,3,6,18,33) – क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1125. क्षेत्री (13-33) – क्षेत्रमस्यास्ति इति विग्रहे **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1126. क्षेमतरम् (1-46) – क्षेम-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। क्षेम इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137)। इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1127. खम् (7-4) – खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। नपुं. प्र.वि. ए.व.।

1128. खे (7-8) – खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। नपुं. स.वि. ए.व.।

1129. गच्छ (18-62) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लोट्, लोटः सिप्, गम् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छ, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्, म.पु. ए.व.।

1130. गच्छति (6-37,40) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लट्, लटः तिप्। गम् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छ-आदेशः। लट्, प्र.पु. ए.व.।

1131. गच्छन् (5-8) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छ-आदेशः। पुं. प्र.वि. ए.व.।

1132. गच्छन्ति (2-51, 5-17, 8-24) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लट्, लटः झि। गम् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छ-आदेशः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

1133. गजेन्द्राणाम् (10-27) – गजानामिन्द्राः तेषाम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गज इत्यत्र गज्-धातोः (गज शब्दे मदने च, भ्वादिः, सि.कौ. - धा.सं. 246) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्र-भेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। पुं. ष.वि. ब.व.।

1134. गतरसम् (17-10) – गतः रसः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। रस इत्यत्र रस्-धातोः (रस शब्दे, भ्वादिः, सि.कौ. - धा.सं. 713) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1135. गतव्यथः (12-16) – गता व्यथा यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति सूत्रेण पूर्वपदस्य पुंवद्भावः। गता इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। व्यथा इत्यत्र व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः,

सि.कौ. - धा.सं. 764) **घटादयो षितः** (ग.सू. 186) इति अतिदेशात् **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, ततः **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1136. गतसङ्गस्य (4-23) – गतः सङ्गः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. ष.वि. ए.व.।

1137. गतसन्देहः (18-73) – गतः सन्देहः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। सन्देह इत्यत्र सम्पूर्वकात् दिह-धातोः (दिह उपचये, अददिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1138. गतः (11-51) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ए.व.।

1139. गतागतम् (9-21) – गतं च तद् अगतं च **क्तेन नञ्विशिष्टेनानञ्** (पा.सू 2-2-6) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। अगत इत्यत्र न गत इति द्वयोः शब्दयोः **नञ्** (पा.सू. 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। नपुं. द्वि.वि. ए.व.।

1140. गतासून् (2-11) – गताः असवः येभ्यः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। असु इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ब.व.।

1141. गताः (8-15, 14-1, 15-4) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ब.व.।

1142. गतिम् (6-37,47, 7-18, 8-13,21, 9-32, 13-28, 16-20,22,23 – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। स्त्री. द्वि.वि. ए.व.।

1143. गतिः (4-17, 9-18, 12-5) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। स्त्री. प्र.वि. ए.व.।

1144. गती (8-26) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। स्त्रीपुं. प्र.वि. द्वि.व.।

1145. गत्वा (14-15, 15-6) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। अव्ययम्।

1146. गदिनम् (11-17,46) – गदा-प्रातिपदिकात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। गदा इत्यत्र गद्-धातोः (गद व्यक्तायां वाति, भ्वादिः, सि.कौ. - धा.सं. 52) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। अजाद्यतष्टाप् (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

1147. गन्तव्यम् (4-24) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। नपुं. प्र.वि. ए.व.।

1148. गन्तासि (2-52) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लुट्, लुटः सिप्, गम् सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति तास्, **तासस्त्योर्लोपः** (पा.सू. 7-4-50) इति सलोपः, मकारस्य **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। लुट्, म.पु. ए.व.।

1149. गन्धर्वयक्षासुरसिद्धसङ्घाः (11-22) – गन्धर्वाश्च यक्षाश्च असुराश्च सिद्धाश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। गन्धर्वयक्षासुरसिद्धानां सङ्घाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। गन्धर्व इत्यत्र गन्धम् अर्वति इति विग्रहे गन्ध इत्युपपदे अर्व्-धातोः (अर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 584) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, गन्ध इत्यत्र गन्ध्-धातोः (गन्ध अर्दने, चुरादिः, सि.कौ. - धा.सं. 1685) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। यक्ष इत्यत्र यक्ष्-धातोः (यक्ष पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1693) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अकर्तरि चकारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। असुर इत्यत्र अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **असेरुरन्** (उणा. 1-42) इति उरन्-प्रत्ययः। सिद्ध इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47)

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति इति पूर्वधकारस्य जश्त्वेन दकारः। सङ्घ इत्यत्र सम्पूर्वकात् हन्-धातोः (हन हिसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्धौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. प्र.वि. ब.व.।

1150. गन्धर्वाणाम् (10-26) - गन्धम् अर्वति इति विग्रहे गन्ध इत्युपपदे अर्व्-धातोः (अर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 584) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, गन्ध इत्यत्र गन्ध्-धातोः (गन्ध अर्दने, चुरादिः, सि.कौ. - धा.सं. 1685) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. ष.वि. ब.व.।

1151. गन्धः (7-9) – गन्ध्-धातोः (गन्ध अर्दने, चुरादिः, सि.कौ. - धा.सं. 1685) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1152. गन्धान् (15-8) – गन्ध्-धातोः (गन्ध अर्दने, चुरादिः, सि.कौ. - धा.सं. 1685) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

1153. गमः (2-3) – मा स्म गमः इति श्लोकपादः, गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) लुङ्, लुङः सिप्, गम् सिप्, **पुषादिद्युताद्यॢदितः परस्मैपदेषु** (पा.सू. 3-1-55) इति अङ्, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः, सस्य रुत्वम्, विसर्गः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अट्-आगमः प्राप्तः परन्तु **न माङ्योगे** (पा.सू. 6-4-74) इति अडागमाभावः। लुङ्, म.पु. ए.व.।

1154. गम्यते (5-5) – गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) कर्मणि लट्, लटः त, गम् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्-प्रत्ययः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

1155. गरीयसे (11-37) – गुरु-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः, **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति सूत्रेण ईयसुन्-प्रत्ययः, ततः **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति गुरुशब्दस्य गर-आदेशः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। गुरु इत्यत्र गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च** इति कु-प्रत्ययः (उणा. 1-24) इति कु-प्रत्ययः, उकारान्तादेशश्च **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् भवति। पुं. च.वि. ए.व.।

1156. गरीयः (2-6) – गुरु-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः, **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति सूत्रेण ईयसुन्-प्रत्ययः, ततः **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति गुरुशब्दस्य गर-आदेशः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। गुरु इत्यत्र गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च** इति कु-प्रत्ययः (उणा. 1-24) इति कु-प्रत्ययः, उकारान्तादेशश्च **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् भवति। नपुं. द्वि.वि. ए.व.।

1157. गरीयान् (11-43) – गुरु-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः, **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति सूत्रेण ईयसुन्-प्रत्ययः, ततः **प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः** (पा.सू. 6-4-157) इति

गुरुशब्दस्य गर-आदेशः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। गुरु इत्यत्र गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च** इति कु-प्रत्ययः (उणा. 1-24) इति कु-प्रत्ययः, उकारान्तादेशश्च **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् भवति। पुं. प्र.वि. ए.व.।

1158. गर्भम् (13-3) – गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **अर्तिगॄभ्यां भन्** (उणा. 3-152) इति भन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1159. गर्भः (3-38) – गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **अर्तिगॄभ्यां भन्** (उणा. 3-152) इति भन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1160. गवि (5-18) – गो ङि, गो इ, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अव्-आदेशः। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गमेर्डोः** (उणा. 2-67) इति डो-प्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। पुं/स्त्री. स.वि. ए.व.।

1161. गहना (4-17) – गाह्-धातोः (गाहू विलोडने, भ्वादिः, सि.कौ. - धा.सं. 649) **बहुलमन्यत्रापि** (उणा. 2-79) इति उणादिसूत्रेण युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृच्छ्रगहनयोः कषः** (पा.सू. 7-2-22) इति ह्रस्वनिर्देशात् ह्रस्वः। स्त्री. प्र.वि. ए.व.।

1162. गाण्डीवम् (1-30) – गाण्डी इति प्रातिपदिकात् व-प्रत्ययः **गाण्ड्यजगात् संज्ञायाम्** (पा.सू. 5-2-110) इति सूत्रेण। गाण्डी इत्यत्र गडि-धातोः (गडि वदनैकदेशे, भ्वादिः, सि.कौ. - धा.सं. 65, 361) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **सर्वधातुभ्य इन्** (उणा. 4-117) इति इन्-प्रत्ययः, **गाण्ड्यजगात् संज्ञायाम्** (पा.सू. 5-2-110) इति निर्देशादेव वृद्धिः, **कृदिकारादक्तिनः** (ग.सू. 50) इति ङीष्। पुं. द्वि.वि. ए.व.।

1163. गात्राणि (1-29) – गा-धातोः (गाङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 950) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 1-158) इति ष्ट्रन्-प्रत्ययः। नपुं. प्र.वि. ब.व.।

1164. गायत्री (1-35) – गायेन त्रायते इति अर्थे गाय इत्युपपदे त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। गाय इत्यत्र गा-धातोः (गा स्तुतौ, जुहोत्यादिः, सि.कौ. - धा.सं. 1106) **भावे** (पा.सू. 3-3-318) इति घञ्-प्रत्ययः, **आतो युक्चिण्कृतोः** (पा.सू. 7-3-33) इति युक्-आगमः। स्त्री. प्र.वि. ए.व.।

1165. गाम् (15-13) – गो अम्, **औतोऽम्शसोः** (पा.सू. 6-1-93) इति आकारः एकादेशः। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गमेर्डोः** (उणा. 2-67) इति डोप्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। स्त्री. द्वि.वि. ए.व.।

1166. गिराम् (10-25) – **सम्पदादिभ्यः क्विप्** (वा. 2233) इति गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इकारः, स च **उरण्रपर** (पा.सू. 1-1-51) इत्यनेन रपरः। पुं. ष.वि. ब.व.।

1167. गीतम् (13-4) – गा-धातोः (गा स्तुतौ, जुहोत्यादिः, सि.कौ. - धा.सं. 1106) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईकारादेशः। नपुं. प्र.वि. ए.व.।

1168. गुडाकेश (10-20, 11-7) – गुडाकायाः ईश!, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुडाका इत्यत्र गुडा इति उपपदपूर्वकात् कै-धातोः (कै शब्दे, भ्वादिः, सि.कौ. - धा.सं. 916) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। गुडा इत्यत्र गुड्-धातोः (गुड रक्षायाम्,

तुदादिः, सि.कौ. - धा.सं. 1370) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। ईश इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

1169. गुडाकेशः (2-9) – गुडाकायाः ईशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुडाका इत्यत्र गुडा इति उपपदपूर्वकात् कै-धातोः (कै शब्दे, भ्वादिः, सि.कौ. - धा.सं. 916) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। गुडा इत्यत्र गुड्-धातोः (गुड रक्षायाम्, तुदादिः, सि.कौ. - धा.सं. 1370) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। ईश इत्यत्र ईश्-धातोः **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. प्र.वि. ए.व.।

1170. गुडाकेशेन (1-24) – गुडाकायाः ईशेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुडाका इत्यत्र गुडा इति उपपदपूर्वकात् कै-धातोः (कै शब्दे, भ्वादिः, सि.कौ. - धा.सं. 916) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। गुडा इत्यत्र गुड्-धातोः (गुड रक्षायाम्, तुदादिः, सि.कौ. - धा.सं. 1370) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। ईश इत्यत्र ईश्-धातोः **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. तृ.वि. ए.व.।

1171. गुणकर्मविभागयोः (3-28) – गुणः च कर्म च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः, गुणकर्मणोः विभागौ गुणकर्मविभागौ तयोः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुण इत्यत्र गुण (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। विभाग इत्यत्र वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. ष.वि. द्वि.व.।

1172. गुणकर्मविभागशः (4-13) – गुणाश्च कर्माणि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। गुणकर्मणां विभागः **षष्ठी** (पा.सू. 2-2-8) इति समासः। ततः गुणकर्मविभाग इति शब्दात् **सङ्ख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति शस्-प्रत्ययः। गुण इत्यत्र गुण धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। विभाग इत्यत्र वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। अव्ययम्।

1173. गुणकर्मसु (3-29) – गुणानां कर्माणि तेषु, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुण इत्यत्र गुण धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं.

1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि. ब.व.।

1174. गुणतः (18-29) – गुणेन इत्यर्थः, गुण धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। अव्ययम्।

1175. गुणप्रवृद्धाः (15-2) – गुणैः प्रवृद्धाः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। प्रवृद्ध इत्यत्र प्र-पूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **झषस्तथोः धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन पूर्वधकारस्य दकारः। पुं. प्र.वि. ब.व.।

1176. गुणभेदतः (18-19) – गुणानां भेदः तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः, गुणभेदशब्दात् **आद्यादिभ्यः उपसङ्ख्यानम्** (वा. 3339) इति वार्तिकेन तसिप्रत्ययः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। भेद इत्यत्र भिद्-धातोः (भिदिर् विदारणे, रुधादिः, सि.कौ. - धा.सं. 1439) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

1177. गुणभोक्तृ (13-14) – गुणानां भोक्तृ, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। भोक्तृ इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं. 1454) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. प्र.वि. ए.व.।

1178. गुणमयी (7-14) – गुण-शब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। स्त्री. प्र.वि. ए.व.।

1179. गुणमयैः (7-13) – गुणशब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. तृ.वि. ब.व.।

1180. गुणसङ्गः (13-21) – गुणेषु सङ्गः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे,

भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. प्र.वि. ए.व.।

1181. गुणसम्मूढाः (3-29) – गुणैः सम्मूढाः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। सम्मूढ इत्यत्र सम्पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **हो ढः** (पा.सू. 8-2-31) इति ढ, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढलोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। पुं. प्र.वि. ब.व.।

1182. गुणसङ्ख्याने (18-19) – गुणानां सङ्ख्यानम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। सङ्ख्यान इत्यत्र सम्पूर्वकात् ख्याधातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. स.वि. ए.व.।

1183. गुणातीतः (14-25) – गुणम् अतीतः. **द्वितीया श्रितातीतगतात्यस्यप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। अतीत इत्यत्र अतिपूर्वकात् इण्धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, अति इत इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

1184. गुणान् (13-19,21, 14-20,21,21,26) – गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। गुण शस्। पुं. द्वि.वि. ब.व.।

1185. गुणान्वितम् (15-10) – गुणैः अन्वितः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। गुण इत्यत्र गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। अन्वित इत्यत्र अनु-पूर्वकात् इण्-धातोः कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. द्वि.वि. ए.व.।

1186. गुणाः (3-28, 14-5,23) – गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. प्र.वि. ब.व.।

1187. गुणेषु (3-28) – गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. स.वि. ब.व.।

1188. गुणेभ्यः (14-19,19) – गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. पं.वि. ब.व.।

1189. गुणैः (3-5,27, 13-23, 14-23, 18-40,41) – गुण इति चुरादिधातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। गुण भिस्। पुं. तृ.वि. ब.व.।

1190. गुरुणा (6-22) – गॄधातोः **कृग्रोरुच्च इति कुः** (उणा. 1-24) इति कुप्रत्ययः, उकारान्तादेशश्च। गुरु टा, **आङो नाऽस्त्रियाम्** (पा.सू. 7-3-120) इति नादेशः। नपुं. तृ.वि. ए.व.।

1191. गुरुः (11-43) – गॄधातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च इति कुः** (उणा. 1-24) इति कुप्रत्ययः, उकारान्तादेशश्च। पुं. प्र.वि. ए.व.।

1192. गुरून् (2-5,5) – गॄधातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च इति कुः** (उणा. 1-24) इति कुप्रत्ययः, उकारान्तादेशश्च। गुरु टा, **आङो नास्त्रियाम्** (पा.सू. 7-3-120) इति नादेशः। पुं. द्वि.वि. ब.व.।

1193. गुह्यतमम् (9-1, 15-20) – गुह्य इति प्रातिपदिकात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति तमप्, गुह्य इत्यत्र गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (वा. 1835) इति वार्तिकेन क्यप्। नपुं. द्वि.वि. ए.व.।

1194. गुह्यतरम् (18-63) – गुह्य इति प्रातिपदिकात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्। गुह्य इत्यत्र गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (वा. 1835) इति वार्तिकेन क्यप्। नपुं. प्र.वि. ए.व.।

1195. गुह्यम् (11-1, 18-68,75) – गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (वा. 1835) इति वार्तिकेन क्यप्। नपुं. प्र.वि. ए.व.।

1196. गुह्यात् (18-63) – गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (वा. 1835) इति वार्तिकेन क्यप्। नपुं. पं.वि. ए.व.।

1197. गुह्यानाम् (10-38) – गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (वा. 1835) इति वार्तिकेन क्यप्। पुं. ष.वि. ब.व.।

1198. गृणन्ति (11-21) – गॄधातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) लट्, लटः झि। गॄ झि, **प्वादीनां ह्रस्वः** (पा.सू. 7-3-80) इति ह्रस्वः, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारलोपः, **ऋवर्णान्नस्य ण्त्वं वाच्यम्** (वा. 4969) इति ण्त्वम्। लट्, प्र.पु. ब.व.।

1199. गृह्णन् (5-9) – ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्नाप्रत्ययः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्। पुं. प्र.वि. ए.व.।

1200. गृह्णाति (2-22) – ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) लट्, लटः तिप्। ग्रह् ति, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति ङिद्वद्भावः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्। लट्, प्र.पु. ए.व.।

1201. गृहीत्वा (15-8, 16-10) – ग्रह-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **ग्रहोऽलिटि दीर्घः** (पा.सू. 7-2-37) इति दीर्घः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्। अव्ययम्।

1202. गृह्यते (6-35) – ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) कर्मणि लट्, लटः त। ग्रह त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्, प्र.पु. ए.व.।

1203. गेहे (6-41) – गेन ईह्यते इति, ग इति उपपदे ईह् इति धातोः (ईह ,चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं. 632) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्। ग इत्यत्र बाहुलकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) डप्रत्ययः। नपुं. स.वि. ए.व.।

1204. गोविन्द (1-32) – गाः विन्दति, गो-उपपदे विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) **गवादिषु विन्देः संज्ञायाम्** (वा. 1969) इति वार्तिकेन शप्रत्ययः, **तुदादिभ्यः शः** (पा.सू. 3-2-77) इति शप्रत्ययः। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गमेर्डोः** (उणा. 2-67) इति डोप्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। पुं. सम्बो.वि. ए.व.।

1205. गोविन्दम् (2-9) – गाः विन्दति, गो-उपपदे विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) **गवादिषु विन्देः संज्ञायाम् तुदादिभ्यः शः** (वा. 1969) इति शप्रत्ययः। **तुदादिभ्यः शः** (पा.सू. 3-2-77) इति शप्रत्ययः। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **गमेर्डोः** (उणा. 2-67) इति डोप्रत्ययः, डित्त्वात् अभस्यापि टेः लोपः। पुं. द्वि.वि. ए.व.।

1206. ग्रसमानः (11-30) – ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्। पुं. प्र.वि. ए.व.।

1207. ग्रसिष्णु (13-16) – ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **भुवश्च** (पा.सू. 3-2-138) इति सूत्रे चकारेण अस्मादपि इष्णुच्प्रत्ययः। नपुं. प्र.वि. ए.व.।

1208. ग्लानिः (4-7) – ग्लैधातोः (ग्लै हर्षक्षये, भ्वादिः, सि.कौ. - धा.सं. 903) **आदेच उपदेशेशिति** (पा.सू. 6-1-45) इति आत्वम्, **ग्लाम्लाज्याहाभ्यो निः** (वा. 4048) इति निप्रत्ययः। स्त्री. प्र.वि. ए.व.।

1209. घातयति (2-21) – हन्-धातोः (हन हिंसागत्येः, अदादिः, सि.कौ. - धा.सं. 1012) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **हनस्तोऽचिण्णलोः** (पा.सू. 7-3-32) इति नस्य तकारः, **हो हन्तेर्ञ्णिन्नेषु** (पा.सू. 7-3-54) इति हस्य कुत्वम्, घाति इति सम्पन्नम्, तस्मात् लट्, लटः तिप्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ए.व.।

1210. घोरम् (11-49, 17-5) – घुर्-धातोः (घुर भीमार्थशब्दयोः, तुदादिः, सि.कौ. - धा.सं. 1345) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. द्वि.वि. ए.व.।

1211. घोरे (3-1) – घुर्-धातोः (घुर भीमार्थशब्दयोः, तुदादिः, सि.कौ. - धा.सं. 1345) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. स.वि. ए.व.।

1212. घोषः (1-19) – घुष्-धातोः (घुषिर् अविशब्दने, भ्वादिः, सि.कौ. - धा.सं. 653) **हलश्च** (पा.सू. 3-3-121) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1213. घ्नतः (1-35) – हन्-धातोः (हन हिंसागत्येः, अदादिः, सि.कौ. - धा.सं. 1012) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **गमहनजनखनघसां लोपः क्ङित्यनङि** (पा.सू. 6-4-96) इति अकारलोपः, **हो हन्तेर्ञ्णिन्नेषु** (पा.सू. 7-3-54) इति हस्य कुत्वम्। पुं. द्वि.वि. ब.व.।

1214. घ्राणम् (15-9) – घ्राधातोः (घ्रा गन्धोपादाने घ्राणे च, भ्वादिः, सि.कौ. - धा.सं. 926) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. द्वि.वि. ए.व.।

1215. च (1-1,4,4,5,5,5,6,6,6,8,8,8,8,8,9,11,13,13,14,16,17,17,17,17,17,18,18,18,19,19,25,27,29,29,29,30,30,31,31,31,32,32,33,33,34,38,42,43, 2-,4,6,8,11,11,12,19,23,24,26,27,29,29,31,32,33,34,34,35,36,41,52,58,66,66, 3-,4,8,17,17,18,22,24,38,39, 4-3,5,8,9,17,17,18,22,27,28,40,40, 5-1,2,5,5,15,18,18,20,27, 6-1,1,1,9,13,16,16,20,21,22,29,30,30,35,43,46, 7-4,9,9,9,11,12,12,16,17,2,26,26,29,30,30, 8-1,2,4,5,7,10,12,23,28,28, 9-4,5,5,9,12,14,14,15,17,19,19,19,19,24,24,29, 10-2,3,4,4,7,9,9,9,13,17,18,20,20,20,22,23,23,24,26,27,28,29,29,30,30,30,31,32,32,33,34,34,34,38,39, 11-2,5,7,15,15,17,20,22,22,22,22,24,25,25,26,34,34,34,36,36,37,38,38,39,39,42,43,45,48,49,50,53,54,54, 12-1,2,13,15,18,18, 13-2,3,3,3,3,3,4,5,5,5,8,9,10,14,15,15,15,15,16,16,16,16,18,19,19,19,22,22,23,24,25,29,30,34, 14,2,6,10,10,13,13,17,17,19,21,22,22,22,26,27,27,27, 15-2,2,3,3,4,8,9,9,9,11,12,13,15,15,15,15,16,16,18,18,20, 16-1,1,4,4,4,6,7,7,7,11,14,18, 17-2,2,4,6,10,10,12,14,15,15,18,20,20,21,22,23,23,25,26,27,27,28,28, 18-1,3,5,6,9,12,12,14,14,19,19,22,25,28,29,30,30,30,31,31,32,35,36,39,39,41,42,43,51,51,55,67,67,69,70,71,74,76,77,77) – अव्ययम्।

1216. चक्रहस्तम् (11-46) – चक्रं हस्ते यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **प्रहरणार्थेभ्यश्च परे निष्ठासप्तम्यौ** (वा. 1425) भवतः इति वक्तव्यम् इति वार्तिकेन चक्रस्य पूर्वनिपातः। चक्र इत्यत्र **घञर्थे कविधानम्** (वा. 2204) इति कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) कप्रत्ययः, **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** (वा. ३४२९) इति वार्तिकेन द्वित्वम्। **उरत्** (पा.सू. 7-4-66) इति अभायसस्य उरदत्वम्। **उरण्रपरः** (पा.सू. 1-1-51)। **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति अभ्यासचुत्वम्। **इको यणचि** (पा.सू. 6-1-77) इति यण्। हस्त इत्यत्र हस्-धातोः (हसे हसने, भ्वादिः, सि.कौ. - धा.सं. 721) **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (पा.सू. 3-86) इति तन्। पुं. दि.वि. ए.व.।

1217. चक्रम् (3-16) – चक्र इत्यत्र **घञर्थे कविधानम्** (वा. 2204) इति कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) कप्रत्ययः, **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** (वा. ३४२९) इति वार्तिकेन द्वित्वम्। **उरत्** (पा.सू. 7-4-66) इति अभायसस्य उरदत्वम्। **उरण्रपरः** (पा.सू. 1-1-51)। **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति अभ्यासचुत्वम्। **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. द्वि.वि. ए.व.।

1218. चक्रिणम् (11-17) – चक्रशब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। चक्र इत्यत्र **घञर्थे कविधानम्** (वा. 2204) इति कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) कप्रत्ययः, **द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्** (वा. ३४२९) इति वार्तिकेन द्वित्वम्। **उरत्** (पा.सू. 7-4-66) इति अभायसस्य उरदत्वम्। **उरण्रपरः** (पा.सू. 1-1-51)। **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति अभ्यासचुत्वम्। **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. द्वि.वि. ए.व.।

1219. चक्षुः (5-27, 11-8, 15-9) – चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) **चक्षेः शिच्च** (उणा. 2-119) इति सूत्रेण उसिप्रत्ययः। नपुं. द्वि.वि. ए.व.।

1220. चञ्चलत्वात् (6-33) – चञ्चलस्य भावः, **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। चञ्चल इत्यत्र चञ्च्-धातोः (चञ्चु गतौ, भ्वादिः, सि.कौ. - धा.सं. 190) बाहुलकात् अलच्। नपुं. पं.वि. ए.व.।

1221. चञ्चलम् (6-26,34) – चञ्च्-धातोः (चञ्चु गतौ, भ्वादिः, सि.कौ. - धा.सं. 190) बाहुलकात् अलच्। नपुं. प्र.वि. ए.व.।

1222. चतुर्भुजेन (11-46) – चत्वारः भुजाः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। चतुर् इत्यत्र चत्-धातोः (चते यातने, भ्वादिः, सि.कौ. - धा.सं. 865) **चतेरुरन्** (उणा. 5-58) इति उरन्-प्रत्ययः (उणा. 5-58)। भुज इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं. 1454) **हलश्च** इति घञ्, **भुजन्युब्जौ पाण्युपतापयोः** (पा.सू. 7-3-61) इति निपातनात्। नपुं. तृ.वि. ए.व.।

1223. चतुर्विधम् (15-14) – चतस्रः विधाः यस्य तत्, **अनेकमन्यपदार्थे (पा.सू. 2-2-24)** इति समासः। **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। चतसृ इत्यत्र चतुर् शब्दात् जस्। **त्रिचतुरोः स्त्रियां तिसृचतसृ** (पा.सू. 7-2-99) इत्यनेन चतुर्-शब्दस्य स्थाने चतसृ-आदेशः। **इको यणचि** (पा.सू. 6-1-77) इति यण्। चतुर् इत्यत्र चत्-धातोः (चते यातने, भ्वादिः, सि.कौ. - धा.सं. 865) **चतेरुरन्** (उणा. 5-58) इति उरन्-प्रत्ययः। विधा इत्यत्र विपूर्वकात् धाधातोः (डुधाञ् धारणपोषणयोः, भ्वादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

1224. चतुर्विधाः (7-16) – चतस्रः विधाः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। चतसृ इत्यत्र चतुर् शब्दात् जस्। **त्रिचतुरोः स्त्रियां तिसृचतसृ** (पा.सू. 7-2-99) इत्यनेन चतुर्-शब्दस्य स्थाने चतसृ-आदेशः। **इको यणचि** (पा.सू. 6-1-77) इति यण्। चतुर् इत्यत्र चत्-धातोः (चते यातने, भ्वादिः, सि.कौ. - धा.सं. 865) **चतेरुरन्** (उणा. 5-58) इति उरन्-प्रत्ययः। विध इत्यत्र विपूर्वकात् धाधातोः (डुधाञ् धारणपोषणयोः, भ्वादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः। पुं. प्र.वि. ब.व.।

1225. चत्वारः (10-6) – चतुर् जस्, **चतुरनडुहोरामुदात्तः** (पा.सू. 7-1-98) इति आम्-आगमः, **इको यणचि** (पा.सू. 6-1-77) इति यणादेशः। चतुर् इत्यत्र चत्-धातोः (चते यातने, भ्वादिः, सि.कौ. - धा.सं. 865) **चतेरुरन्** (उणा. 5-58) इति उरन्-प्रत्ययः। पुं. प्र.वि. नित्य-ब.व.।

1226. चन्द्रमसि (15-12) – चन्द्र इति उपपदात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **चन्द्रो मे डिच्च** (उणा. 4-227) इति उणादिसूत्रेण अस्-प्रत्ययः। चन्द्र इत्यत्र चन्द्-धातोः (चदि आह्लादे दीप्तौ च, भ्वादिः, सि.कौ. - धा.सं. 68)
**स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो** रक् (उणा. 2-13) इत्यनेन रक्। पुं. स.वि. ए.व.।

1227. चमूम् (1-3) – चम्-धातोः (चमु अदने, भ्वादिः, सि.कौ. - धा.सं. 469) **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** (उणा. 1-81) इति ऊ-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

1228. चरताम् (2-67) – चर्-धातोः (डुधाञ् धारणपोषणयोः, भ्वादिः, सि.कौ. - धा.सं. 1092) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। नपुं. ष.वि. ब.व.।

1229. चरति (2-71, 3-36) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, लटः तिप्। चर् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

1230. चरन् (2-64) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

1231. चरन्ति (8-11) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लटि प्रथमपुरुषबहुवचने रूपम्। चर् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

1232. चरम् (13-15) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. प्र.वि. ए.व.।

1233. चराचरस्य (11-43) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **चरिचलिपतिवदीनां द्वित्वमच्याक्च अभ्यासस्य** (वा. 3430) इति द्वित्वम् आक्-आगमश्च। नपुं. ष.वि. ए.व.।

1234. चराचरम् (10-39) – चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **चरिचलिपतिवदीनां द्वित्वमच्याक्च अभ्यासस्य** (वा. 3430) इति द्वित्वम् आक्-आगमश्च। नपुं. प्र.वि. ए.व.।

1235. चलति (6-21) – चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) लट्, लटः तिप्, चल् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

1236. चलम् (6-35, 17-18) – चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1237. चलितमानसः (6-37) – चलितं मानसं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मानस इत्यत्र मनस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1238. चातुर्वर्ण्यम् (4-13) – चत्वारः ते वर्णाः चतुर्वर्णाः, **दिक्सङ्ख्ये संज्ञायाम्** (पा.सू. 2-1-50) इति समासः। ततः चतुर्वर्णस्य भावः इति विग्रहे चतुर्वण इति शब्दात् **चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्** (वा. 3061) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। चतुर् इत्यत्र चत्-धातोः (चते यातने, भ्वादिः, सि.कौ. - धा.सं. 865) **चतेरुरन्** (उणा. 5-58) इति उरन्-प्रत्ययः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **कॄवृजॄषिद्रुगुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति षत्वम्। नपुं. प्र.वि. ए.व.।

1239. चान्द्रमसम् (8-25) – चन्द्रमसः इदम्, चन्द्रमस् इति शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। चन्द्रमस् इत्यत्र चन्द्र इति उपपदात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **चन्द्रो मे डिच्च** (उणा. 4-227) इति उणादिसूत्रेण अस्-प्रत्ययः। चन्द्र इत्यत्र चन्द्-धातोः (चदि आह्लादे दीप्तौ च, भ्वादिः, सि.कौ. - धा.सं. 68) **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपि-दृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** (उणा. 2-13) इत्यनेन रक्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1240. चापम् (1-47) – चप-शब्दात् **अवयवे च प्राण्योषधिवृक्षेभ्यः** (पा.सू. 4-3-135) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। चप इत्यत्र चप्-धातोः (चप सान्त्वने, भ्वादिः, सि.कौ. - धा.सं. 399) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1241. चिकीर्षुः (3-25) – कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **अज्झनगमां सनि** (पा.सू. 6-4-16) इति दीर्घः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरत्वम्, **सन्यङोः** (पा.सू. 6-9-1) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति अभ्यासस्य आदिः हल् शिष्यते, **कुहोश्चुः** (पा.सू. 7-4-62) इति चर्त्वम्, **हलि च** (पा.सू. 8-2-77) इति दीर्घः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम् चिकीर्ष इति सम्पन्नम्, ततः **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः। पुं. प्र.वि. ए.व.।

1242. चित्तम् (6-18,20, 12-9) – चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। नपुं. प्र.वि. ए.व.।

1243. चित्ररथः (10-26) – कस्यचित् संज्ञा। चित्र इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **अमिचिमिशमिभ्यः** (उणा. 4-163) इत्यनेन क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। रथ इत्यत्र रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) **हनिकुषिरमिकाशिभ्यः कथन्** (उणा. 2-2) इत्यनेन कथन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति** (पा.सू. 6-4-37) इत्यनेन धातोः मकारस्य लोपः। पुं. प्र.वि. ए.व.।

1244. चिन्तयन्तः (9-22) – चिति (चिति स्मृत्याम्, चुरादिः, सि.कौ. - धा.सं. 1535) इति धातोः इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, चिन्ति, चिन्ति लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ब.व.।

1245. चिन्तयेत् (6-25) – चिति (चिति स्मृत्याम्, चुरादिः, सि.कौ. - धा.सं. 1535) इति धातोः इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच् चिन्ति, तस्मात् लिङ् लिङः तिप्। चिन्ति तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति स-लोपः, **अतो येयः** (पा.सू. 7-2-80) इति इय्-आदेशः, **लोपोर्व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **इतश्च** (पा.सू. 6-4-100) इति इकारलोपः। विधिलिङ्, प्र.पु. ए.व.।

1246. चिन्ताम् (16-11) – चिति (चिति स्मृत्याम्, चुरादिः, सि.कौ. - धा.सं. 1535) इति धातोः इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **चिन्तिपूजिकथिकुम्बिचर्चश्च** (पा.सू. 3-3-105) इति सूत्रेण अङ्प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

1247. चिन्त्यः (10-17) – चिति (चिति स्मृत्याम्, चुरादिः, सि.कौ. - धा.सं. 1535) इति धातोः इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1248. चिरात् (12-7) – चिर-पूर्वकात् अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **अन्येभ्योऽपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। चिर इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं.

1251) बाहुलकात् रक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। विभक्तिप्रतिरूपकम् अव्ययम्।

1249. चिरेण (5-6) – चिर इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) बाहुलकात् रक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। विभक्तिप्रतिरूपकम् अव्ययम्।

1250. चूर्णितैः (11-27) – चूर्ण्-धातोः (चूर्ण सङ्कोचने, चुरादिः, सि.कौ. - धा.सं. 1642) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। नपुं. तृ.वि. ब.व.।

1251. चेकितानः (1-5) – कस्यचित् राज्ञः संज्ञा। कित्-धातोः (कित निवासे रोगापनयने व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च, भ्वादिः, सि.कौ. - धा.सं. 993) **धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** (पा.सू. 3-1-7) इति यङ्-प्रत्ययः, **यङोऽचि च** (पा.सू. 2-4-74) इति यङः लुक्, **गुणो यङ्लुकोः** (पा.सू. 7-4-82) इति अभ्यासस्य गुणः, ततः चेकित् इति यङ्लुगन्तात् कित्-धातोः **ताच्छील्यवयोवचनशक्तिषु चानश्** (पा.सू. 3-2-129) इति चानश्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1252. चेत् (2-33, 3-1,14, 4-36, 9-30, 18-58) – अव्ययम्। चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **अन्येभ्योपि दृश्यन्ते** (पा.सू. 3-2-75) इति विच्-प्रत्ययः, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः।

1253. चेतना (10-22, 13-6) – चित्-धातोः (चित सञ्चेतने, चुरादिः, सि.कौ. - धा.सं. 1674) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1254. चेतसा (8-8, 18-57,72) – चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. तृ.वि. ए.व.।

1255. चेष्टते (3-33) – चेष्ट-धातोः (चेष्ट चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं. 256) कर्तरि लट्, लटः त, चेष्ट् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

1256. चेष्टाः (18-14) – चेष्ट्-धातोः (चेष्ट चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं. 256) **गुरोश्च हलः** (पा.सू. 3-3-103) इति सूत्रेण अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

1257. चैलाजिनकुशोत्तरम् (6-11) – चैलं च अजिनं च कुशश्च चैलाजिनकुशाः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। चैलाजिनकुशाः उत्तरे यस्मिन् तत् **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। चैल इत्यत्र चिल्-धातोः (चिल वसने, तुदादिः, सि.कौ. - धा.सं. 1355) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्स्य च** (पा.सू. 7-3-86) इति गुणे च चेल इति, ततः चेल शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। अजिन इत्यत्र अज्-धातोः (अज गतिक्षेपणयोः, भ्वादिः, सि.कौ. - धा.सं. 230) **अजेरज च** (उणा. 2-49) इति सूत्रेण इनच्-प्रत्ययः। कुश इत्यत्र कुश्-धातोः (कुश संश्लेषणे) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। उत्तर इत्यत्र उत्पूर्वकात् तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं.969) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकतोः** (पा.सू. 7-3-84) इति गुणः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरत्वम्। पुं. द्वि.वि. ए.व.।

1258. च्यवन्ति (9-14) – च्यु-धातोः (च्युङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 955) लट्, लटः झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। च्युधातुः आत्मनेपदी, अतः च्यवन्ते इति आत्मनपदं स्यात्, प्रकृते परस्मैपदम् आर्षम्। लट्, प्र.पु. ब.व.।

1259. छन्दसाम् (10-35) – चदि-धातोः (चदि आह्लादे दीप्तौ च, भ्वादिः, सि.कौ. - धा.सं. 68) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुमागमः, **चन्देरादेश्च छः** (उणा. 4-218) इति असुन्-प्रत्ययः चकारस्य छकारः च। नपुं. ष.वि. ब.व.।

1260. छन्दांसि (15-1) – चदि-धातोः (चदि आह्लादे दीप्तौ च, भ्वादिः, सि.कौ. - धा.सं. 68) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुमागमः, **चन्देरादेश्च छः** (उणा. 4-218) इति असुन्-प्रत्ययः चकारस्य छकारः च। नपुं. प्र.वि. ब.व.।

1261. छन्दोभिः (13-4) – चदि-धातोः (चदि आह्लादे दीप्तौ च, भ्वादिः, सि.कौ. - धा.सं. 68) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुमागमः, **चन्देरादेश्च छः** (उणा. 4-218) इति असुन्-प्रत्ययः चकारस्य छकारः च। नपुं. तृ.वि. ब.व.।

1262. छलयताम् (10-36) – छल इत्यस्मात् शब्दात् **तत्करोति तदाचष्टे** (ग.सू.204) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, छलि, तस्मात् लट्, लटः इत्यस्मात् **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. ष.वि. ब.व.।

1263. छित्वा (4-42, 15-3) – छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। अव्ययम्।

1264. छिन्दन्ति (2-23) – छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) लट्, लटः झि, छिद् झि, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

1265. छिन्नद्वैधाः (5-25) – छिन्नं द्वैधं यैः ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। छिन्न इत्यत्र छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दस्य नकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। द्वैध इत्यत्र द्वि-शब्दात् **संख्याया विधार्थे धा** (पा.सू. 5-3-42) इति धा-प्रत्ययः, तस्य **द्वित्र्योश्च धमुञ्** (पा.सू. 5-3-45) इति धमुञ्-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः। पुं. प्र.वि. ब.व.।

1266. छिन्नसंशयः (18-10) – छिन्नः संशयः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। छिन्न इत्यत्र छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दस्य नकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। संशय इत्यत्र सम्पूर्वकात् शी-धातोः (शीङ् स्वप्ने, रुधादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

1267. छिन्नाभ्रम् (6-38) – छिन्नम् अभ्रम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। छिन्न इत्यत्र छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति दस्य नकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। अभ्र इत्यत्र अभ्र्-धातोः (अभ्र गतौ, भ्वादिः, सि.कौ. - धा.सं. 556) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1268. छेत्ता (6-39) – छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

1269. छेत्तुम् (6-39) – छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अव्ययम्।

1270. जगतः (7-6, 8-26, 9-17, 16-9) – गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **द्युतिगमिजुहोतीनां द्वे च** (वा. 2149) इति द्वित्वं क्विप् च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति गकारस्य जकारः, **गमः क्वौ** (पा.सू. 6-4-40) इति मलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। नपुं. ष.वि. ए.व.।

1271. जगत् (7-5,13, 9-4,10, 10-42, 11-7,13,30,36, 15-12, 16-8) – गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **द्युतिगमिजुहोतीनां द्वे च** (वा. 2149) इति द्वित्वं क्विप् च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति गकारस्य जकारः, **गमः क्वौ** (पा.सू. 6-4-40) इति मलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। नपुं. प्र.वि. ए.व.।

1272. जगत्पते (10-15) – जगतः पतिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। जगत् इत्यत्र गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **द्युतिगमिजुहोतीनां द्वे च** (वा. 2149) इति द्वित्वं क्विप् च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति गकारस्य जकारः, **गमः क्वौ** (पा.सू. 6-4-40) इति मलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डतिः** (उणा.सू. 4-57) डतिः, डित्त्वसामर्थ्यात् टेर्लोपः। पुं. सम्बो.वि. ए.व.।

1273. जगन्निवास (11-2,37,45) – जगतः निवासः, षष्ठी (पा.सू. 2-2-8) इति समासः। जगत् इत्यत्र गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 1137) **द्युतिगमिजुहोतीनां द्वे च** (वा. 2149) इति द्वित्वं क्विप् च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **हलादिश्शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः। **कुहोश्चुः** (पा.सू. 7-4-62) इति गकारस्य जकारः, **गमः क्वौ** (पा.सू. 6-4-40) इति मलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। निवास इत्यत्र निपूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. सम्बो.वि. ए.व.।

1274. जघन्यगुणवृत्तिस्थाः (14-18) – जघन्यः गुणः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, जघन्यगुणस्य वृतिः – जघन्यगुणवृत्तिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, जघन्यगुणवृत्तौ तिष्ठन्ति इति विग्रहे जघन्यवृत्ति इत्युपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। जघन्य इत्यत्र जघन-शब्दात् **शरीरावयवाच्च** (पा.सू. 4-3-55) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। जघन इत्यत्र हन्-धातोः (हन हंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1137) **हन्तेः शरीरावयवे द्वे च** (उणा. 5-32) इति अच्-प्रत्ययः, **कुहोश्चुः** (पा.सू. 7-4-62) इति अभ्यासचुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-58) इति जश्त्वम्, **अभ्यासाच्च** (पा.सू. 7-3-55) इति

कुत्वम्। गुण इत्यत्र गुण-इति धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। वृत्ति इत्यत्र वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

1275. जनकादयः (3-20) – जनकः आदौ येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। जनक इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (ग.सू. 1188) इति मित्त्वं तेन **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वः, ततः जनि इति णिजन्तात् **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ब.व.।

1276. जनयेत् (3-26) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (ग.सू. 1188) इति मित्त्वं तेन **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वः, ततः लिङ्, लिङः तिप्, जनि तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। विधिलिङ्, प्र.पु. ए.व.।

1277. जनसंसदि (13-10) – जनानां संसत्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। जन इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। संसद् इत्यत्र सम्पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **सम्पदादिभ्यो क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. स.वि. ए.व.।

1278. जनः (3-21) – जन्-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1279. जनाधिपाः (2-12) – जनानाम् अधिपाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। जन इत्यत्र जन्-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अधिप इत्यत्र अधि-पूर्वकात् पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. प्र.वि. ब.व.।

1280. जनानाम् (7-28) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. ष.वि. ब.व.।

1281. जनार्दन (1-36,39,44, 3-1, 10-18, 11-51) – जनान् अर्दयति इति विग्रहे जन इति उपपदे अर्द्-धातोः (अर्द गतौ याचने च, भ्वादिः, सि.कौ. - धा.सं. 55) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। जन इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

1282. जनाः (7-16, 8-18,24, 9-22, 16-7, 17-4,5) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ब.व.।

1283. जन्तवः (5-15) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः। पुं. प्र.वि. ब.व.।

1284. जन्म (2-27, 4-4,4,9,9, 6-42, 8-15,16) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1285. जन्मकर्मफलप्रदाम् (2-43) – कर्मणः फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। जन्म च कर्मफले च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, जन्मकर्मफलयोः प्रदा **षष्ठी** (पा.सू. 2-2-8) इति समासः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। प्रदा इत्यत्र प्र-पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **प्रे दाज्ञः** (पा.सू. 3-2-6) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

1286. जन्मनाम् (7-19) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. ष.वि. ब.व.।

1287. जन्मनि (16-20,20) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. स.वि. ए.व.।

1288. जन्मबन्धविनिर्मुक्ताः (2-51) –जन्म एव बन्धः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, जन्मबन्धेन विनिर्मुक्ताः **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समसाः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। बन्ध इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। विनिर्मुक्त इत्यत्र वि-निर्-पूर्वकात् मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इत्यनेन क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ब.व.।

1289. जन्ममृत्युजरादुःखैः (14-20) – जन्म च मृत्यु च जरा च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। जन्ममृत्युजराः एव दुःखानि **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। मृत्यु इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। जरा इत्यत्र जॄ-धातोः (जॄष् वयोहानौ, दिवादिः, सि.कौ. - धा.सं. 1130) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **ऋदृशोऽङि गुणः** (पा.सू. 7-4-16) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. तृ.वि. ब.व.।

1290. जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् (13-8) – जन्म च मृत्युश्च जरा च व्याधिश्च दुःखञ्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। तेषु दोषः जन्ममृत्युजराव्याधिदुःखदोषः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, तस्य जन्ममृत्युजराव्याधिदुःखदोषस्य अनुदर्शनम् **षष्ठी** (पा.सू. 2-2-8) इति समासः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। मृत्यु इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः,

**सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। जरा इत्यत्र जॄ-धातोः (जॄष् वयोहानौ, दिवादिः, सि.कौ. - धा.सं. 1130) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **ऋदृशोऽङि गुणः** (पा.सू. 7-4-16) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। व्याधि इत्यत्र वि-आपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। अनुदर्शन इत्यत्र अनु-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ल्युट् च** (पा.सू. 3-3-3115) इति ल्युट्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

1291. जन्मानि (4-5) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. प्र.वि. ब.व.।

1292. जपयज्ञः (10-25) – जपः इति यज्ञः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। जप इत्यत्र जप्-धातोः (जप व्यक्तायां वाचि मानसे च, भ्वादिः, सि.कौ. - धा.सं. 397) **व्यधजपोऽरनुपसर्गे** (पा.सू. 3-3-61) इति अप्-प्रत्ययः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ए.व.।

1293. जयद्रथम् (11-34) – कस्यचिन्नामधेयम्। जयत् इत्यत्र जि धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-प्रत्ययः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। रथ इत्यत्र **हनिकुषिनिरमिकाशिभ्यः क्थन्** (उणा. 2-2) इति रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. द्वि.वि. ए.व.।

1294. जयः (10-36) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

1295. जयाजयौ (2-38) – जयश्च अजयश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। जय इत्यत्र जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। अजय इत्यत्र न जयः अजयः, **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. द्वि.वि. द्वि.व.।

1296. जयेम (2-6) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) लिङ्, लिङः मस्, जि मस्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **नित्यं ङितः** (पा.सू. 3-4-99) इति सलोपः। विधिलिङ्, उ.पु. ब.व.।

1297. जयेयुः (2-6) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) लिङ्, लिङः झि। जि झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्ते ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **झेर्जुस्** (पा.सू. 3-4-108) इति जुस्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः। विधिलिङ्, प्र.पु. ब.व.।

1298. जरा (2-13) – जॄ-धातोः (जॄष् वयोहानौ, दिवादिः, सि.कौ. - धा.सं. 1130) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **ऋदृशोऽङि गुणः** (पा.सू. 7-4-16) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1299. जरामरणमोक्षाय (7-29) – जरा च मरणं च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, जरामरणयोः मोक्षः इति विग्रहे **षष्ठी** (पा.सू. 2-2-8) इति समासः। जरा इत्यत्र जॄ-धातोः (जॄष् वयोहानौ, दिवादिः, सि.कौ. - धा.सं. 1130) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्, **ऋदृशोऽङि गुणः** (पा.सू. 7-4-16) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। मरण इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनाादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। मोक्ष इत्यत्र मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। पुं. च.वि. ए.व.।

1300. जहाति (2-50) – हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) लट्, लटः तिप्, हा तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-74) इति श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः, **कुहोश्चुः** (पा.सू. 7-4-62) इति हस्य चुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्। लट्, प्र.पु. ए.व.।

1301. जहि (3-43, 11-34) – हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लोट्, लोटः सिप्। हन् सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि, **हन्तेर्जः** (पा.सू. 6-4-36) इति ज-आदेशः। लोट्, म.पु. ए.व.।

1302. जागर्ति (2-69) – जागृ-धातोः (जागृ निद्राक्षये, अदादिः, सि.कौ. - धा.सं. 1072) लट्, लटः तिप्। जागृ ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **जाग्रोऽविचिण्णल्ङित्सु** (पा.सू. 7-3-85) इति गुणः। लट्, प्र.वि. ए.व.।

1303. जाग्रतः (6-16) – जागृ-धातोः (जागृ निद्राक्षये, अदादिः, सि.कौ. - धा.सं. 1072) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **इको यणचि** (पा.सू. 6-1-77) इति यणादेशः। पुं. ष.वि. ए.व.।

1304. जाग्रति (2-69) – जागृधातोः (जागृ निद्राक्षये, अदादिः, सि.कौ. - धा.सं. 1072) लट्, लटः झि। जागृ झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **जक्षित्यादयः षट्** (पा.सू. 6-1-6) इति अभ्यस्तसंज्ञा, तस्मात् **अदभ्यस्तात्** (पा.सू. 7-1-4) इति अत्-आदेशः, यणादेशश्च। **इको यणचि** (पा.सू. 6-1-77) इतिणादेशः। लट्, प्र.पु. ब.व.।

1305. जातस्य (2-27) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नकारस्य आकारदेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. ष.वि. ए.व.।

1306. जाताः (10-6) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नकारस्य आकारदेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ब.व.।

1307. जातिधर्माः (1-43) – जातेः धर्माः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। जाति इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नकारस्य आकारादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1308. जातु (2-12, 3-5,23) – जै-धातोः (जै क्षये, भ्वादिः, सि.कौ. - धा.सं. 914) बाहुलकात् तुन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्। अव्ययम्।

1309. जानन् (8-27) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः। पुं. प्र.वि. ए.व.।

1310. जानाति (15-29) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) लट्, लटः तिप्, ज्ञा तिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः। लट्, प्र.पु. ए.व.।

1311. जाने (11-25) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) लट्, लटः इट्, **अनुपसर्गाज्ज्ञः** (पा.सू. 1-3-76) इति आत्मनेपदम्। ज्ञा इट्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आलोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, उ.पु. ए.व.।

1312. जायते (1-29,41, 2-20, 14-15,15) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) लट्, लटः त, जन् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ए.व.।

1313. जायन्ते (14-12,13) – जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) लट्, लटः झ, जन् झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्, प्र.पु. ब.व.।

1314. जाह्नवी (10-31) – जह्नु-शब्दात् **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः,**ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति सूत्रेण ङीप्। जह्नु इत्यत्र **जहातेर्द्वे अन्तलोपश्च** (उणा. 3-36) इति हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) नु-प्रत्ययः धातोः द्वित्वं च, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः, **कुहोश्चुः** (पा.सू. 7-4-62) इति चुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्। स्त्री. प्र.वि. ए.व.।

1315. जिगीषताम् (10-38) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **अज्झनगमां सनि** (पा.सू. 6-4-16) इति दीर्घः, **सन्यतः** (पा.सू. 7-4-79) इति द्वित्वम्, **सन्लिटोर्जेः** (पा.सू. 7-3-57) इति कुत्वम्, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः। पुं. ष.वि. ब.व.।

1316. जिघ्रन् (5-8) – घ्रा-धातोः (घ्रा गन्धोपादाने च, भ्वादिः, सि.कौ. - धा.सं. 926) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति जिघ्रादेशः। पुं. प्र.वि. ए.व.।

1317. जिजीविषामः (2-6) – जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-1-9) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति प्रथमः हल् शिष्टः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः, ततः जिजीविष इति सन्नन्तात् धातोः लट्, लटः मस्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्, उ.पु. ब.व.।

1318. जिज्ञासुः (6-44, 7-16) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्-प्रत्ययः, **सन्यङोः** (पा.सू. 6-1-9) इति धातोः द्वित्वम्, **हलादिः शेषः**

(पा.सू. 7-4-60) इति आदिर्हल् शिष्यते, **सन्यतः** (पा.सू. 7-4-79) इति अभ्यासस्य इकारः, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

1319. जितसङ्गदोषाः (15-5) – सङ्गः इति दोषः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। जितः सङ्गदोषः यैः ते **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। जित इत्यत्र जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1320. जितः (5-19, 6-6) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

1321. जितात्मनः (6-7) – जितः आत्मा येन तस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, जित इत्यत्र जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्यः। पुं. ष.वि. ए.व.।

1322. जितात्मा (19-49) – जितः आत्मा येन सः, अनेकमन्यपदार्थे (पा.सू. 2-2-24) इति समासः। जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् मनिण्-प्रत्यः। पुं. प्र.वि. ए.व.।

1323. जित्वा (2-37, 11-33) – जिधातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

1324. जितेन्द्रियः (5-7) – जितानि इन्द्रियाणि येन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। जित इत्यत्र जिधातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1325. जीर्णानि (2-22,22) – जॄ-धातोः (जॄष् वयोहानौ, दिवादिः, सि.कौ. - धा.सं. 1130) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **ॠत इद्धातोः** (पा.सू. 7-1-100) इति

इकारः, **हलि च** (पा.सू. 8-2-77) इति दीर्घः, **उरण् रपरः** (पा.सू. 1-1-51) इति सः रपरः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति नत्वम्, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। नपुं. द्वि.वि. ब.व.।

1326. जीवति (3-16) – जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) लट्, लटः तिप्, जीव् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

1327. जीवनम् (7-9) – जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति करणे ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. प्र.वि. ए.व.।

1328. जीवभूतः (15-7) – जीवं भूतः, **सह सुपा** (पा.सू. 2-1-4), इति समासः। जीव इत्यत्र जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **भावे** (पा.सू. 3-3-18 इति घञ्-प्रत्ययः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

1329. जीवभूताम् (7-5) – जीवेन सदृशीम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। जीव इत्यत्र जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। भूता इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. द्वि.वि. ए.व.।

1330. जीवलोके (15-7) – जीवानां लोकः **षष्ठी** (पा.सू. 2-2-8) इति समासः। जीव इत्यत्र जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. स.वि. ए.व.।

1331. जीवितेन (1-32) – जीव्-धातोः (जीव प्राणधारणे, भ्वादिः, सि.कौ. - धा.सं. 562) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। नपुं. तृ.वि. ए.व.।

1332. जुहोषि (9-27) – हु-धातोः (हु दानादानयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1083) लट्, लटः सिप्, हु सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लुः, **श्लौ** (पा.सू. 6-1-10) इति धातोः द्वित्वम्, **कुहोश्चुः** (पा.सू. 7-4-62) इति चुत्वम्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लट्, म.पु. ए.व.।

1333. जुह्वति (4-26,26,27,29,30) – हु-धातोः (हु दानादानयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1083) लट्, लटः झि, हु झि, **अदभ्यस्तात्** (पा.सू. 7-1-4) इति अत्-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लुः, **श्लौ** (पा.सू. 6-1-10) इति धातोः द्वित्वम्, **कुहोश्चुः** (पा.सू. 7-4-62) इति चुत्वम्। लट्, प्र.पु. ब.व.।

1334. जेतासि (11-34) – जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) लुट्, लुटः सिप्। जि सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति तास्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **तासस्त्योर्लोपः** (पा.सू. 7-4-50) इति सलोपः। लुट्, म.पु. ए.व.।

1335. जोषयेत् (3-26) – जुष्-धातोः (जुष परितर्कणे परितर्पणे च, चुरादिः, सि.कौ. - धा.सं. 1835) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-4-86) इति गुणः, णिजन्तात् जोषि इत्यस्मात् विध्यादौ लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः**

**सलोपोनन्त्यस्य** (पासू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। विधिलिङ्, प्र.पु. ए.व.।

1336. ज्ञातव्यम् (7-2) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

1337. ज्ञातुम् (11-54) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्** (पा.सू. 3-3-10) इति तुमुन्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इत्यनेन निषेधः। अव्ययम्।

1338. ज्ञातेन (10-42) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इत्यनेन निषेधः। नपुं. तृ.वि. ए.व.।

1339. ज्ञात्वा (1-15,16,32,35, 5-29, 7-2, 9-1,13, 13-12, 14-1, 16-24, 18-55) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः। **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इत्यनेन निषेधः। अव्ययम्।

1340. ज्ञानगम्यम् (13-17) – ज्ञानेन गम्यम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) अथवा **कृत्यैरधिकार्थवचने** (पा.सू. 2-1-33) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। गम्य इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **पोरदुपधात्** (पा.सू. 3-1-98) इति यत्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1341. ज्ञानचक्षुषः (15-10) – ज्ञानमेव चक्षुः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। चक्षुष् इत्यत्र चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) **चक्षेः शिच्च** (उणा. 2-119) उसि-प्रत्ययः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। पुं. प्र.वि. ब.व.।

1342. ज्ञानचक्षुषा (13-34) – ज्ञानमेव चक्षुः तेन, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। चक्षुष् इत्यत्र चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) **चक्षेः शिच्च** (उणा. 2-119) उसि-प्रत्ययः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। नपुं. तृ.वि. ए.व.।

1343. ज्ञानतपसा (4-10) – ज्ञानमेव तपः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

1344. ज्ञानदीपिते (4-27) – ज्ञानेन दीपितः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। दीपित इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **गत्यर्थाकर्मश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्य इड्वलादेः** (पा.सू. 7-2-35) इति इट्। पुं. स.वि. ए.व.।

1345. ज्ञानदीपेन (10-11) – ज्ञानमेव दीपः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। दीप इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. तृ.वि. ए.व.।

1346. ज्ञाननिर्धूतकल्मषाः (5-17) – ज्ञानेन निर्धूतम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। ज्ञाननिर्धूतं कल्मषं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। निर्धूत इत्यत्र निर्पूर्वकात् धू-धातोः (धू विधूनने, तुदादिः, सि.कौ. - धा.सं. 1398) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। कल्मष इत्यत्र कर्म स्यति इति कर्मन् उपपदे सोधातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्यय, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति सूत्रेण साधुत्वम्, तस्मादेव रेफस्य लत्वम्, षत्वञ्च। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1347. ज्ञानप्लवेन (4-16) – ज्ञानमेव प्लवः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। प्लव इत्यत्र प्लुधातोः (प्लुङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 958) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. तृ.वि. ए.व.।

1348. ज्ञानयज्ञः (4-33) – ज्ञानमेव यज्ञः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ए.व.।

1349. ज्ञानयज्ञेन (9-15, 18-70) – ज्ञानमेव यज्ञः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. तृ.वि. ए.व.।

1350. ज्ञानयोगव्यवस्थितिः (16-1) – ज्ञानं च योगं च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। ज्ञानयोगयोः व्यवस्थितिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। व्यवस्थिति इत्यत्र वि-आङ्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) धातोः आकारस्य इति इकारः। स्त्री. प्र.वि. ए.व.।

1351. ज्ञानयोगेन (3-3) – ज्ञान एव योगः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। योग इत्यत्र युज्-धातोः (युज समाधौ,

दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ए.व.।

1352. ज्ञानवताम् (10-38) – ज्ञान-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोयवादिभ्यः** (पा.सू. 8-2-9) इति मतुपः मस्य वकारः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. ष.वि. ब.व.।

1353. ज्ञानवान् (3-33, 7-19) – ज्ञान-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, **मादुपधायाश्च मतोर्वेयवादिभ्यः** (पा.सू. 8-2-9) इति वकारादेशः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

1354. ज्ञानविज्ञानतृप्तात्मा (6-8) – ज्ञानं विज्ञानं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, ज्ञानविज्ञानाभ्यां तृप्तः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, ज्ञानविज्ञानतृप्तः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। विज्ञान इत्यत्र वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। तृप्त इत्यत्र तृप्-धातोः (तृप प्रीणने, दिवादिः, सि.कौ. - धा.सं. 1195) क्त-प्रत्ययः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1355. ज्ञानविज्ञाननाशनम् (3-41) – ज्ञानं च विज्ञानं च **चार्थे द्वन्द्वः (पा.सू.** 2-2-29) इति समासः, ज्ञानविज्ञानयोः नाशनम् **षष्ठी** (पा.सू. 2-2-8) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इत ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। विज्ञान इत्यत्र वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नाशन इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, ततः णिजन्तात् नाशि इति धातोः **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति ल्युटः कर्तरि विधानम्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

1356. ज्ञानसङ्गेन (14-6) – ज्ञानस्य सङ्गः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। सङ्ग इत्यत्र सञ्ज्-धातोः (सञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्**, अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. तृ.वि. ए.व.।

1357. ज्ञानसंच्छिन्नसंशयम् (4-41) – ज्ञानेन सञ्च्छिन्नः **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, ज्ञानसञ्च्छिन्नः संशयः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। संच्छिन्न इत्यत्र सम्पूर्वकात् छिद्-धातोः (छिदिर् द्वैधीकरणे, रुधादिः, सि.कौ. - धा.सं. 1440) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-

102) इति दकारस्य तकारस्य च नत्वम्। संशय इत्यत्र सम्पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति सूत्रेण अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ए.व.।

1358. ज्ञानस्य (18-50) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. ष.वि. ए.व.।

1359. ज्ञानम् (3-39,40, 4-34,39,39, 5-15,16, 7-2, 9-1, 10-4,38, 12-12, 13-2,2,11,17,18, 14-1,2,9,11,17, 15-15, 18-18,19,20,21,21,42,63) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. प्र.वि. ए.व.।

1360. ज्ञानाग्निदग्धकर्माणम् (4-19) – ज्ञानमेव अग्निः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, ज्ञानाग्निना दग्धानि **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। ज्ञानाग्निदग्धानि कर्माणि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च। दग्ध इत्यत्र दह्-धातोः (दह् भस्मीकरणे, भ्वादिः, सि.कौ. - धा.सं. 991) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **दादेर्धातोर्घः** (पा.सू. 8-2-32) इति हकारस्य घकारः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1361. ज्ञानाग्निः (4-37) – ज्ञानमेव अग्निः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च पुं. प्र.वि. ए.व.।

1362. ज्ञानात् (12-12) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः।नपुं. पं.वि. ए.व.।

1363. ज्ञानानाम् (14-1) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. ष.वि. ब.व.।

1364. ज्ञानावस्थितचेतसः (4-23) – ज्ञाने अवस्थितम्, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। ज्ञानावस्थितं चेतः यस्य तस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अवस्थित इत्यत्र अवपूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति धातोः आकारस्य

इकारः। चे‌ेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. ष.वि. ए.व.।

1365. ज्ञानासिना (4-42) – ज्ञानमेव असिः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। असि इत्यत्र अस्-धातोः (अस गतिदीप्त्यादानेषु, भ्वादिः, सि.कौ. - धा.सं. 886) **खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च** (उणा. 4-139) इति इ-प्रत्ययः। पुं. तृ.वि. ए.व.।

1366. ज्ञानिनः (3-39, 4-34, 7-27) – ज्ञान-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. ष.वि. ए.व.।

1367. ज्ञानिभ्यः (6-46) – ज्ञान-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. पं.वि. ब.व.।

1368. ज्ञानी (7-16,17,18) – ज्ञान-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

1369. ज्ञाने (4-33) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. स.वि. ए.व.।

1370. ज्ञानेन (4-38, 5-16) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, युस्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. तृ.वि. ए.व.।

1371. ज्ञास्यसि (7-1) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) लृट्, लृटः सिप्, ज्ञा सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, लृट्, म.पु. ए.व.।

1372. ज्ञेयम् (1-39, 13-12,16,17,18, 18-18) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **अचो यत्** (पा.सू. 3-1-124) इति यत्, **ईद्यति** (पा.सू. 6-4-65) इति धातोः आकारस्य ईकारादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1373. ज्ञेयः (5-3, 8-2) – ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **अचो यत्** (पा.सू. 3-1-124) इति यत्, **ईद्यति** (पा.सू. 6-4-65) इति धातोः आकारस्य ईकारादेशः ईकारादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1374. ज्यायसी (3-1) – वृद्ध इति शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्-प्रत्ययः, **वृद्धस्य च** (पा.सू. 5-3-62) इति ज्य-आदेशः, **ज्यादादीयसः** (पा.सू. 6-4-160) इति आत्वम्, **उगितश्च** (पा.सू. 4-1-6) इति ङीप्। वृद्ध इत्यत्र वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च**

(पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **झषस्तथोः धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन पूर्वधकारस्य दकारः। स्त्री. प्र.वि. ए.व.।

1375. ज्यायः (3-8) – वृद्ध इति शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्-प्रत्ययः, **वृद्धस्य च** (पा.सू. 5-3-62) इति ज्य-आदेशः, **ज्यादादीयसः** (पा.सू. 6-4-160) इति आत्वम्। वृद्ध इत्यत्र वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **झषस्तथोः धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन पूर्वधकारस्य दकारः। नपुं. प्र.वि. ए.व.।

1376. ज्योतिषाम् (10-21, 13-17) – द्युत्-धातोः (द्युत दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 741) **द्युतेरिसिन्नादेश्च जः** (उणा. 2-110) इति इसिन्-प्रत्ययः, जकारादेशश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. ष.वि. ब.व.।

1377. ज्योतिः (8-24,25, 13-17) – द्युत्-धातोः (द्युत दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 741) **द्युतेरिसिन्नादेश्च जः** (उणा. 2-110) इति इसिन्-प्रत्ययः, जकारादेशश्च। **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

1378. ज्वलद्भिः (11-30) – ज्वल्-धातोः (ज्वल दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 804) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। नपुं. तृ.वि. ब.व.।

1379. ज्वलनम् (11-29) – ज्वल्-धातोः (ज्वल दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 804) **जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः** (पा.सू. 3-2-150) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. द्वि.वि. ए.व.।

1380. झषाणाम् (10-31) – झष्-धातोः (झष आदानसंवरणयोः, भ्वादिः, सि.कौ. - धा.सं. 891) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. ष.वि. ब.व.।

1381. ततम् (2-17, 8-22, 9-4, 11-38, 18-46) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **तनिमृङ्भ्यां किच्च** (उणा. 3-88) इति तन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। नपुं. ष.वि. ब.व.।

1382. ततः (1-13,14, 2-33,36,38, 6-22,26,26,43,45, 7-22, 11-4,9,14,40, 112-1,11, 13-28,30, 14-3, 15-4, 16-20,22, 18-55,64) – तद्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थाय् टेः लोपः। अव्ययम्।

1383. तत् (1-10,46, 2-7,17,57,57,67, 3-1,2,21,21,21, 4-16,34,38, 5-1,5,16, 6-21, 7-1,23,29, 8-1,11,21,28, 9-26,27, 10-39,39,41,41, 11-4,42,42,45,49, 13-2,3,3,12,12,13,13,15,15,16,17,26, 14-7,8, 15-4,5,6,6,12, 17-17,18,19,20,21,22,23,25,28, 18-5,20,21,22,23,24,25,37,37,38,38,39,40,45,60,67) – तद् सु, **स्वमोर्नपुंसकात्** (पा.सू. 7-1-23) इति सुलोपः, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। नपुं. प्र.वि. ए.व.।

1384. तत्परम् (5-16, 11-37) – तत् परं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः। डित्त्वसामर्थात् टेः लोपः। नपुं. द्वि.वि. ए.व.।

1385. तत्परः (4-39) – तत् परं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः। डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ए.व.।

1386. तत्परायणाः (5-17) – परम् अयनम्, **विशेषणं विशेषेण बहुलम्** (पा.सू. 2-1-57) इति समासः। तत् परायणं येषां ते **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, तनादिः, सि.कौ. - धा.सं. 1463) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अयन इत्यत्र अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। अथवा परायण इत्यत्र परा-उपसर्गात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति कर्मणि ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ब.व.।

1387. तत्प्रसादात् (18-62) – तस्य प्रसादः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। प्रसाद इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

1388. तत्र (1-26, 2-13,28, 6-12,43, 8-18,24,25, 11-13, 14-6, 18-4,16,78) – तद्-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

1389. तत्त्वज्ञानार्थदर्शनम् (13-11) – तत्त्वस्य ज्ञानम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तत्त्वज्ञानस्य अर्थः, **षष्ठी** (पा.सू. 2-2-8) इति समास। तत्त्वज्ञानार्थस्य दर्शनम् **षष्ठी** (पा.सू. 2-2-8) इति समासः। तत्त्व इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति वप्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तीरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। दर्शन इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

1390. तत्त्वतः (4-9, 6-21, 7-3, 10-7, 18-55,55) – तत्त्व-शब्दात् **आद्यादिभ्य उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू.

1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति व-प्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

1391. तत्त्वदर्शिनः (4-34) – तत्त्वं पश्यन्ति, तदुपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। तत्त्व इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति वप्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ब.व.।

1392. तत्त्वदर्शिभिः (2-16) – तत्त्वं पश्यन्ति तैः, तदुपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। तत्त्व इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति व-प्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः। पुं. तृ.वि. ब.व.।

1393. तत्त्ववित् (3-18, 5-8) –तत्त्वं वेत्ति, तदुपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। तत्त्व इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति वप्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु

विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ए.व.।

1394. तत्त्वम् (18-1) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति व-प्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। तद् इत्यत्र तन्-धातोः **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थात् टेः लोपः। नपुं. द्वि.वि. ए.व.।

1395. तत्त्वेन (9-24, 11-45) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **अन्येभ्योपि दृश्यते** (वा. 3210) इति वप्रत्ययः मतुबर्थे, **अनचि च** (पा.सू. 8-4-47) इति तकारस्य द्वित्वम्, अथवा तद्-शब्दात् **तस्य भावस्त्वतलौ (पा.सू.** 5-1-119) इति त्वप्रत्ययः। तद् इत्यत्र तन्-धातोः **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थात् टेः लोपः। नपुं. तृ.वि. ए.व.।

1396. तथा (1-8,26,34,34, 2-1,13,22,26,29, 3-25,38, 4-11,28,29,37, 5-24, 6-7, 7-6, 8-25, 9-6,32,33, 10-6,13,35, 11-6,15,23,26,28,29,34,46,50, 12-18, 13-18,29,32,33, 14-10,15, 15-3, 16-21, 17-7,26, 18-14,15,63) – तद्-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

1397. तदनन्तरम् (18-55) – तस्मात् अनन्तरम्, **ञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अनन्तर इत्यत्र न अन्तरम् इति विग्रहे **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, अन्तर इत्यत्र नास्ति अन्तरं यस्य इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च। अन्तर इत्यत्र अन्त-पूर्वकात् रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। नपुं. द्वि.वि. ए.व.।

1398. तदर्थम् (3-9) – तस्मै इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाञ्चायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1399. तदर्थीयम् (17-27) – तदर्थस्य इदम् इति विग्रहे तदर्थ-शब्दात् **तस्येदम्** (पा.सू. 4-3-20) इति छ-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति ईयादेशः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। तदर्थ इत्यत्र सः अर्थः तदर्थः इति विग्रहे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाट्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ् प्रत्ययः। नपुं. प्र.वि. ए.व.।

1400. तदा (1-2,21, 2-52,53,55, 4-7, 6-4,18, 11-13, 13-30, 14-11,14) – तद्-शब्दात् **तदो दा च** (पा.सू. 5-3-19) इति दा-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

1401. तदात्मानः (5-17) – तस्मिन् आत्मा येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

1402. तद्बुद्धयः (5-17) – तस्मिन् बुद्धिः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, दिवादिः, सि.कौ. - धा.सं. 1172) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ब.व.।

1403. तद्भावभावितः (8-6) – तस्य भावः तद्भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, तद्भावेन भावितः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः, अथवा भू-धातो (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। भावित इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **हेतुमति च** (पा.सू. 3-1-26) इति णिचि, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1404. तद्वत् (2-70) – तद्-शब्दात् **तेन तुल्यं क्रिया चेद्वतिः** (पा.सू. 5-1-115) इति वति-प्रत्ययः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

1405. तद्विदः (13-1) – तद्विदन्ति, तद् इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे,

तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ब.व.।

1406. तनुम् (7-21, 9-11) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः** (उणा. 1-7) इति उ-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

1407. तन्निष्ठाः (5-17) – तस्मिन् निष्ठा येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। निष्ठा इत्यत्र नि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति षत्वम्। स्त्री. प्र.वि. ए.व.।

1408. तपन्तम् (11-19) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, तपत् इति निष्पन्नम्। पुं. द्वि.वि. ए.व.।

1409. तपसा (11-53) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

1410. तपसि (17-27) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. स.वि. ए.व.।

1411. तपस्यसि (9-27) – तपः चरति, **कर्मणो रोमन्थतपोभ्यां वर्तिचरोः** (पा.सू. 3-1-15) इति सूत्रेण क्यङ्-प्रत्ययः, **सनाद्यन्ताः धातवः** (पा.सू. 3-1-32) इति धातुसंज्ञा, **तपसः परस्मैपदं च** (वा. 1766) इति परस्मैपदम्, तपस्य लट्, लटः सिप्। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। लट्, म.पु. ए.व.।

1412. तपस्विभ्यः (6-46) – तपस्-शब्दात् **अस्मायामेधास्रजो विनिः** (पा.सू. 5-2-121) इति विनि-प्रत्ययः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. पं.वि. ब.व.।

1413. तपस्विषु (7-9) – तपस्-शब्दात् **अस्मायामेधास्रजो विनिः** (पा.सू. 5-2-121) इति विनि-प्रत्ययः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. स.वि. ब.व.।

1414. तपः (7-9, 10-5, 16-1, 17-5,7,14,15,16,17,18,19,28, 18-5,5,42) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1415. तपःसु (8-28) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. स.वि. ब.व.।

1416. तपामि ( 9-19) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) लट्, लटः मिप्। तप् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्, उ.पु. ए.व.।

1417. तपोभिः (11-48) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, तपस् भिस्, **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति पदसंज्ञा, **ससजुषो रुः** (पा.सू. 8-2-66) इति उकारः, **आद्गुणः** (पा.सू. 8-1-87) इति गुणः। नपुं. तृ.वि. ब.व.।

1418. तपोयज्ञाः (4-28) – तपः एव यज्ञः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तपस् यज्ञ इति स्थिते **ससजुषो रुः** (पा.सू. 8-2-66) इति रुः, **हशि च** (पा.सू. 6-1-114) इति उकारादेशः, **आद् गुणः** (पा.सू. 6-1-87) इति गुणः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः।

यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति यज्-धातोः नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

1419. तप्तम् (17-17,28) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः भवति परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः अभावः। नपुं. प्र.वि. ए.व.।

1420. तप्यन्ते (17-5) – तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) कर्मणि लट्, लटः झ, तप् झ, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। कर्मणि लट्, प्र.पु. ब.व.।

1421. तमसः (8-9, 13-17, 14-16,17) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. पं.वि. ए.व.।

1422. तमसा (18-32) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

1423. तमसि (14-13,15) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. स.वि. ए.व.।

1424. तमः (10-11, 14-5,8,9,10, 17-1) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1425. तमोद्वारैः (16-22) – तमसः द्वाराणि तैः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तमस् इत्यत्र तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। द्वार इत्यत्र द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. तृ.वि. ब.व.।

1426. तया (2-44, 7-22) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् टा, **त्यदादीनामः** (पा.सू. 7-2-102) इति अ, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **आङि चापः** (पा.सू. 7-3-105) इति एकारः। **एचोयवायावः** (पा.सू. 6-1-78) इति अय्। स्त्री. तृ.वि. ए.व.।

1427. तयोः (3-34, 5-2) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् ओस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अः, **ओसि च** (पा.सू. 7-3-104) इति एकारः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. स.वि. द्वि.व.।

1428. तरन्ति (7-14) – तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) लट्, लटः झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्, प्र.पु. ब.व.।

1429. तरिष्यसि (18-58) – तॄधातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) लृट्, लृटः सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लृट्, म.पु. ए.व.।

1430. तव (1-3, 2-36,36, 4-5, 10-42, 11-15,16,20,28,29,30,31,36,41,47,51, 18-73) – युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। युष्मद् ङस्, **तवममौ ङसि** (पा.सू. 7-2-96) इति तवादेशः, **युष्मदस्मद्भ्यां ङसोऽश्** (पा.सू. 7-1-17) इति अश्। पुं. ष.वि. ए.व.।

1431. तस्मात् (1-37, 2-18,25,27,30,37,50,38, 3-15,19,41, 4-15,42, 5-19, 6-46, 8-7,20,27, 11-33,44, 16-21,24, 17-24, 18-69,69) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् ङसि, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मात्। नपुं. प्र.वि. ए.व.।

1432. तस्मिन् (14-3) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् ङि, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मिन्। नपुं. प्र.वि. ए.व.।

1433. तस्य (1-12, 2-57,58,61,68, 3-17,18, 4-13, 6-6,30,34, 11-12, 15-2, 18-7,15) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। ङस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति ङसः स्यादेशः। पुं. ष.वि. ए.व.।

1434. तस्याम् (2-69) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् ङि, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **सर्वनाम्नः स्याड्ढ्रस्वश्च** (पा.सू. 7-3-114) इति स्याट्, **ङेराम्नद्याम्नीभ्यः** (पा.सू. 7-3-116) इति आम्। स्त्री. स.वि. ए.व.।

1435. तस्याः (7-22) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् ङस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **सर्वनाम्नः स्याड्ढ्रस्वश्च** (पा.सू. 7-3-114) इति स्याट्। स्त्री. ष.वि. ए.व.।

1436. तम् (2-1,10, 4-19, 6-2,23,43, 7-20,20, 8-6,6,10,21,23, 9-21, 10-10, 13-1, 15-1,4, 17-12, 18-46,62) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः। पुं. द्वि.वि. ए.व.।

1437. तात (6-40) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **दुतनिभ्यां दीर्घश्च** (उणा. 3-90) इति क्त-प्रत्ययः धातोः अकारस्य दीर्घः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. सम्बो.वि. ए.व.।

1438. तानि (2-61, 4-5, 9-7,9, 18-19) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः। डित्त्वसामर्थ्यात् टेः लोपः। तद् शस् **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **जश्शसोः शिः** (पा.सू. 7-1-20) इति शि, **नपुंसकस्य झलचः** (पा.सू. 7-1-72) इति नुम्, **सर्वनाम्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधादीर्घः। नपुं. द्वि.वि. न.व.।

1439. तान् (1-7,7,27, 2-14, 3-29,32, 4-11,32, 7-12,22, 16-19,17-6) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तद् शस्. **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति नकारः। पुं. प्र.वि. ब.व.।

1440. तामसप्रियम् (17-10) – तामसानां प्रियम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तामस इत्यत्र तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्यये तमस् इति सिद्धम्, ततः तमस्-शब्दात् **ज्योत्स्नादिभ्य उपसङ्ख्यानम्** (उणा. 3197) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-1-117) इति आदिवृद्धिः। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङ्-आदेशः। नपुं. प्र.वि. ए.व.।

1441. तामसम् (17-13,19,22, 18-22,25,39) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्यये तमस् इति सिद्धम्, तमस्-शब्दात् **ज्योत्स्नादिभ्य उपसङ्ख्यानम्** (उणा. 3197) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। पुं. द्वि.वि. ए.व.।

1442. तामसः (17-7,28) – तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्यये तमस् इति सिद्धम्, तमस्-शब्दात् **ज्योत्स्नादिभ्य उपसङ्ख्यानम्** (उणा. 3197) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। पुं. प्र.वि. ए.व.।

1443. तामसाः (7-12, 14-18, 17-4) –तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्यये तमस् इति सिद्धम्, तमस्-शब्दात् **ज्योत्स्नादिभ्य उपसङ्ख्यानम्** (उणा. 3197) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। पुं. प्र.वि. ब.व.।

1444. तामसी (17-2, 18-32,35) –तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्यये तमस् इति सिद्धम्, तमस्-शब्दात् **ज्योत्स्नादिभ्य उपसङ्ख्यानम्** (वा. 3197) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। स्त्री. प्र.वि. ए.व.।

1445. तावान् (2-46) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः, ततः तद्-शब्दात् **यत्तदेतेभ्यो परिमाणे वतुप्** (पा.सू. 5-2-39) इति वतुप्-प्रत्ययः, **आ सर्वनाम्नः** (पा.सू. 6-3-91) इति आकारः। पुं. प्र.वि. ए.व.।

1446. तासाम् (14-4) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् आम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **आमि सर्वनाम्नः सुट्** (पा.सू. 7-1-52) इति सुट्। स्त्री. ष.वि. ब.व.।

1447. ताम् (7-21, 8-17, 17-2) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। स्त्री. प्र.वि. ए.व.।

1448. तितिक्षस्व (2-14) – तिज्-धातोः (तिज निशाने क्षमायां च, भ्वादिः, सि.कौ. - धा.सं. 971) **गुप्तिज्कुद्भ्यः सन्** (पा.सू. 3-1-5) इति सन्-प्रत्ययः, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति अभ्यासस्य आदिः हल् शिष्यते, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्, लोट्, लोटः थास्। तितिक्ष थास्, **थासः से** (पा.सू. 3-4-80) इति थासः स्थाने से, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति वादेशः। लोट्, म.पु. ए.व.।

1449. तिष्ठति (3-5, 13-13, 18-61) – स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः** (पा.सू. 7-3-78) इति स्थाधातोः तिष्ठ-आदेशः। लट्, प्र.पु. ए.व.।

1450. तिष्ठन्तम् (13-27) – स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः** (पा.सू. 7-3-78) इति स्था-धातोः तिष्ठ-आदेशः। पुं. द्वि.वि. ए.व.।

1451. तिष्ठन्ति – (14-18) स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, लटः झि, स्था झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः** (पा.सू. 7-3-78) इति स्था-धातोः तिष्ठ-आदेशः। लट्, प्र.पु. ब.व.।

1452. तिष्ठसि (10-16) – स्थाधातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, लटः सिप्, स्था सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति स्था-धातोः तिष्ठ-आदेशः। लट्, म.पु. ए.व.।

1453. तु (1-2,7,10, 2-5,12,14,16,17,39,64, 3-7,13,17,18,32,42,42, 5-2,6,14,16, 6-6,16,35,36,45, 7-5,12,18,23,26,28, 8-16,20,22,23, 9-1,13,24,29, 10-40, 11-8,54, 12-3,6,20, 13-25, 14-8,9,14,16, 15-17, 17-1,7,12,21, 18-6,7,11,12,16,21,22,24,34,36) – तुद्-धातोः (तुद व्यथने, तुदादिः, सि.कौ. - धा.सं. 1281) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

1454. तुमुलः (1-13,19) – कस्यचिद्वृक्षस्य नाम। तु इति सौत्रात् धातोः बाहुलकात् मुलक्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1455. तुल्यनिन्दात्मसंस्तुतिः (14-24) – आत्मनः ससंस्तुतिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। निन्दा च आत्मसंस्तुतिश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, तुल्ये निन्दात्मसंस्तुती यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तुल्य इत्यत्र **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्य- प्राप्यवध्यानाम्यसमसमितसम्मितेषु** (पा.सू. 4-4-91) इति सूत्रेण तुलाशब्दात् यत्प्रत्ययः। तुला इत्यत्र तुल्-धातोः (तुल उन्माने, चुरादिः, सि.कौ. - धा.सं. 1599) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इत्यनेन अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्। निन्दा इत्यत्र निद्-धातोः (णिदि कुत्सायाम्, भ्वादिः, सि.कौ. - धा.सं. 66) इति इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति अत्-इत्यस्मात् मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। संस्तुतिः इत्यत्र सम्पूर्वकात् स्तु-धातोः (ष्टुञ् स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1043) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इत्यनेन क्तिन्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

1456. तुल्यनिन्दास्तुतिः (12-19) – निन्दा च स्तुतिश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः, तुल्ये निन्दासंस्तुती यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तुल्य इत्यत्र **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्य- प्राप्यवध्यानाम्यसमसमितसम्मितेषु** (पा.सू. 4-4-91) इति सूत्रेण तुलाशब्दात् यत्प्रत्ययः। तुला इत्यत्र तुल्-धातोः (तुल उन्माने, चुरादिः, सि.कौ. - धा.सं. 1599) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इत्यनेन अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्। निन्दा इत्यत्र निद्-धातोः (णिदि कुत्सायाम्, भ्वादिः, सि.कौ. - धा.सं. 66) इति इदित्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्तुतिः इत्यत्र स्तुधातोः (ष्टुञ् स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1043) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इत्यनेन क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

1457. तुल्यप्रियाप्रियः (14-24) – प्रियश्च अप्रियश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, तुल्यौ प्रियाप्रियौ यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। तुल्य इत्यत्र (तुल उन्माने, चुरादिः, सि.कौ. - धा.सं. 1599) **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्य- प्राप्यवध्यानाम्यसमसमितसम्मितेषु** (पा.सू. 4-4-91) इति सूत्रेण तुलाशब्दात् यत्प्रत्ययः। तुला इत्यत्र तुल्-धातोः **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इत्यनेन अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः ईकारस्य इयङादेशः। अप्रिय इत्यत्र न प्रियः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। पुं. प्र.वि. ए.व.।

1458. तुल्यः (14-25,25) – तुला इति शब्दात् **नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्य- प्राप्यवध्यानाम्यसमसमितसम्मितेषु** (पा.सू. 4-4-91) इति सूत्रेण यत्प्रत्ययः। तुला इत्यत्र तुल्-धातोः (तुल उन्माने, चुरादिः,

सि.कौ. - धा.सं. 1599) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इत्यनेन अङ्-प्रत्ययः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्। पुं. प्र.वि. ए.व.।

1459. तुष्टः (2-55) – तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति तस्य निषेधः। पुं. प्र.वि. ए.व.।

1460. तुष्टिः (10-5) – तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति तस्य निषेधः। स्त्री. प्र.वि. ए.व.।

1461. तुष्यति (6-20) – तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) लट्, लटः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। लट्, प्र.पु. ए.व.।

1462. तुष्यन्ति (10-9) – तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) लट्, लटः झिः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्, प्र.पु. ब.व.।

1463. तूष्णीम् (2-9) – तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) बाहुलकात् नीम्-प्रत्ययः उपधादीर्घश्च, **रषाभ्यां णो नः समानपादे** (पा.सू. 8-4-1) इति णत्वम्। अव्ययम्।

1464. तृप्तिः (10-18) – तृप्-धातोः (तृप प्रीणने, दिवादिः, सि.कौ. - धा.सं. 1195) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति तस्य निषेधः। स्त्री. प्र.वि. ए.व.।

1465. तृष्णासङ्गसमुद्भवम् (14-7) – तृष्णा च सङ्गश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, तृष्णासङ्गाभ्यां समुद्भवम् **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। तृष्णा इत्यत्र तृष्-धातोः (ञितृषा पिपासायाम्, दिवादिः, सि.कौ. - धा.सं. 1228) **तृषिशुषिरसिभ्यः कित्** इति न-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। सङ्ग इत्यत्र (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। समुद्भव इत्यत्र सम्-पूर्वकात् उत्पूर्वकात् च भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. द्वि.वि. ए.व.।

1466. ते (1-7,33, 2-6,7,34,39,47,47,52,53, 3-1,8,11,13,31, 4-3,16,34, 5-19,22, 7-2,12,14,28,29,30, 8-11,17, 9-1,20,21,23,24,29,32, 10-1,10,14,19, 11-3,8,23,25,27,31,37,39,39,40,40,49, 12-2,4,20, 13-25,34, 16-8,17,24, 18-59,63,64,65,77,72) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्वसामर्थात् टेः लोपः। तद्-शब्दात् जस् – **त्यदादीनामः** (पा.सू. 7-2-102) इति अ, **जसः शी** (पा.सू. 7-1-17) इति शी। स्त्रियां तु तद् औ/औट्। **त्यदादीनामः** (पा.सू. 7-2-102) इति अः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इत्यनेन टाप्। **औङ आपः** (पा.सू. 7-1-18) इति शी-आदेशः। तव, तुभ्यम् अनयोः पदात् परयोः **तेमयावेकवचनस्य** (पा.सू. 8-1-22) इति सूत्रेण ते इत्यादेशः। पुं. च.वि. ए.व.।

1467. तेजस्विनाम् (7-10, 10-36) – तेजस्-शब्दात् **अस्मायामेधास्रजोविनिः** (पा.सू. 5-2-121) इति विनि-प्रत्ययः। तेजस् इत्यत्र तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

1468. तेजः (7-9,10, 10-36, 15-12,12, 16-3, 18-43) – तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

1469. तेजोभिः (11-30) – तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। तेजस् भिस्, **ससजुषो रुः** (पा.सू. 8-2-66) इति रुः, **हशि च** (पा.सू. 6-1-114) इति उकारादेशः, **आद् गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. तृ.वि. ब.व.।

1470. तेजोमयम् (11-47) – तेजस्-शब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्। तेजस् इत्यत्र तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। तेजस् मय इति स्थिते **ससजुषो रुः** (पा.सू. 8-2-66) इति रुः, **हशि च** (पा.सू. 6-1-114) इति उकारादेशः, **आद् गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. प्र.वि. ए.व.।

1471. तेजोराशिम् (11-17) – तेजसः राशिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तेजस् राशि इति स्थिते **ससजुषो रुः** (पा.सू. 8-2-66) इति रुः, **हशि च** (पा.सू. 6-1-114) इति उकारादेशः, **आद् गुणः** (पा.सू. 6-1-87) इति गुणः। तेजस् इत्यत्र तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। राशि इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशिपणाय्यरुडायलुकौ च** (उणा. 4-132) इति सूत्रेण इण्-प्रत्ययः धातोः रुडागमः च, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

1472. तेजोंऽशसम्भवम् (10-41) – तेजोंऽशात् सम्भवम्, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। तेजसः अंशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। तेजस् इत्यत्र तिज्-धातोः (तिज निशाने क्षमायाम् च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। तेजस् अंश इति स्थिते **ससजुषो रुः** (पा.सू. 8-2-66) इति रुः, **हशि च** (पा.सू. 6-1-114) इति उकारादेशः। **आद् गुणः** (पा.सू. 6-1-87) इति गुणः। **एङः पदान्तादति** (पा.सू. 6-1-109) इति पररूपम्। अंश इत्यत्र अंश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्। सम्भव इत्यत्र **ऋदोरप्** (पा.सू. 3-3-57) इति सम्पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. द्वि.वि. ए.व.।

1473. तेन (3-38, 4-24, 5-15, 6-44, 11-1,46, 17-23, 18-70) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् टा, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। पुं. तृ.वि. ए.व.।

1474. तेषाम् (5-16, 7-17,23, 9-22, 10-10,11, 12-1,5,7, 17-1,7) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् आम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **आमि सर्वनाम्नः सुट्** (पा.सू. 7-1-52) इति सुट्, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एत्वम्। **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। पुं. ष.वि. ब.व.।

1475. तेषु (2-62, 5-22, 7-12, 9-4,9,29, 16-7) – तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् सुप्, **त्यदादीनामः** (पा.सू. 7-2-

102) इति अः, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एत्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। पुं. स.वि. ब.व.।

1476. तैः (3-12, 5-19, 7-20,20) –तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् भिस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अ, **अतो भिस ऐस्** (पा.सू. 7-1-1) इति भिसः ऐस्। पुं. तृ.वि. ब.व.।

1477. तोयम् (9-26) – तु-धातोः (तु गतिवृद्धिहिंसासु, अदादिः, सौत्रः) **अघ्न्यादयश्च** (उणा. 4-111) इति य-प्रत्ययः निपात्यते, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

1478. तौ (2-19, 3-34) – तद् इत्यत्र तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः, डित्त्वसामर्थात् टेः लोपः। तद् औ,औट्। **त्यदादीनामः** (पा.सू. 7-2-102) इति अः, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घे प्राप्ते, **नादिचि** (पा.सू. 6-1-104) इति पूर्वसवर्णदीर्घनिषेधः। **वृद्धिरेचि** (पा.सू. 6-1-88) इति वृद्धिः। पुं. प्र.वि. द्वि.व.।

1479. त्यक्तजीविताः (1-9) – त्यक्तं जीवितं यैः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। त्यक्त इत्यत्र त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। जीवित इत्यत्र जीव्-धातोः (जीव प्राणाधारे, भ्वादिः, सि.कौ. - धा.सं. 562) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। पुं. प्र.वि. ब.व.।

1480. त्यक्तसर्वपरिग्रहः (4-21) – सर्वः परिग्रहः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। त्यक्तः स्ववपरिग्रहः येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। त्यक्त इत्यत्र त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्प्रत्यये साधुः। अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। परिग्रह इत्यत्र परिपूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, भ्वादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** इति अप्-प्रत्ययः। प्र.वि. ए.व.।

1481. त्यक्तुम् (18-11) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अव्ययम्।

1482. त्यक्त्वा (1-33, 2-3,48,51, 4-9,20, 5-10,11,12, 6-24, 18-6,9,51) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अव्ययम्।

1483. त्यजति (8-6) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

1484. त्यजन् (8-13) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

1485. त्यजेत् (16-21, 18-8,48) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू.

7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। विधिलिङ्, प्र.पु. ए.व.।

1486. त्यागफलम् (18-8) – त्यागस्य फलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। त्याग इत्यत्र त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1487. त्यागस्य (18-1) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। त्याग ङस्, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-52) इति स्यादेशः। पुं. ष.वि. ए.व.।

1488. त्यागम् (18-2,8) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

1489. त्यागः (16-2, 18-4,9) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

1490. त्यागात् (12-12) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. पं.वि. ए.व.।

1491. त्यागी (18-10,11) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण त्यज-धातोः घिनुण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

1492. त्यागे (18-4) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. स.वि. ए.व.।

1493. त्याज्यम् (18-3,3,5) – त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 983) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **त्यजेश्च** (भाष्यवार्तिकम्) इति कुत्वस्य निषेधः। नपुं. प्र.वि. ए.व.

1494. त्रयम् (16-21) – त्रि-शब्दात् **संङ्ख्याया अवयवे तयप्** (पा.सू. 5-2-42) इति सूत्रेण तयप्-प्रत्ययः, **द्वित्रिभ्यां त्रयस्यायज्वा** (पा.सू. 5-2-43) इति इति तयपः स्थाने अयच्-आदेशः विकल्पेन, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. द्वि.वि. ए.व.।

1495. त्रयीधर्मम् (9-21) – त्रय्याः धर्मम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। त्रयी इत्यत्र त्रि-शब्दात् **सङ्ख्यया: अवयवे तयप्** (पा.सू. 5-2-42) इति तयप्-प्रत्ययः, **द्वित्रिभ्यां तयस्यायज्वा** (पा.सू. 5-2-43) इति तयपः अयच्-आदेशः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे,

भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1496. त्रायते (2-40) – त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आय्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एकारः। लट्, प्र.पु. ए.व.।

1497. त्रिधा (18-29) – त्रि-शब्दात् **सङ्ख्याया विधार्थे धा** (पा.सू. 5-3-42) इति धा-प्रत्ययः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

1498. त्रिभिः (7-13, 16-22, 18-40) – त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। त्रि भिस्, त्रिभिः। पुं. तृ.वि. ब.व.।

1499. त्रिविधम् (16-21, 17-17, 18-12,29,36) – तिस्रः विधाः यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। विधा इत्यत्र विपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. प्र.वि. ए.व.।

1500. त्रिविधः (17-7,23, 18-4,18, ) – तिस्रः विधाः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। विधा इत्यत्र विपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1501. त्रिविधा (17-2, 18-18) – तिस्रः विधा अस्याः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति ह्रस्वः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1502. त्रिषु (3-22) – त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। त्रि सुप्। पुं. स.वि. नित्य-ब.व.।

1503. त्रीन् (14-20,21,21) – त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। त्रि शस्, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति सकारस्य नकारः। पुं. द्वि.वि. ब.व.।

1504. त्रैगुण्यविषयाः (2-45) – त्रैगुण्यं विषयः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। त्रैगुण्य इत्यत्र त्रिगुण-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इत्यनेन आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। त्रिगुण इत्यत्र त्रयाणां गुणानां समाहारः इति विग्रहे **तद्धितार्थोत्तरपदसमाहारे च** (पा.सू. 2-1-51) इति समासः। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं.

969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। गुण इत्यत्र गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् इति प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। विषय इत्यत्र वि-पूर्वकात् षि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ब.व.।

1505. त्रैलोक्यराज्यस्य (1-35) – त्रैलोक्यस्य राज्यम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। त्रैलोक्य इत्यत्र त्रिलोकी-शब्दात् **चतुर्वर्णादीनां स्वार्थ उपसंख्यानम्** (वा. 3091) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इत्यनेन आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति ईकारलोपः। त्रिलोकी इत्यत्र त्रयाणां लोकानां समाहारः इति विग्रहे **तद्धितार्थोत्तरपदसमाहारे च** (पा.सू. 2-1-51) इति समासः, **अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः** (वा. 1556) इति वार्तिकेन स्त्रीलिङ्गता, **द्विगोः** (पा.सू. 4-1-21) इति ङीप्। त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, राज्य इत्यत्र राजन्-शब्दात् **पत्यन्तपुरोहितादिभ्यो यक्** (पा.सू. 5-1-128) इति यक्-प्रत्ययः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। नपुं. ष.वि. ए.व.।

1506. त्रैविद्याः (9-20) – त्रिसङ्ख्याकाः विद्याः, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्** (वा. 1310) इति समासः संख्याका इति उत्तरपदस्य च लोपः। त्रिविद्याशब्दात् अधीते वेत्ति वा इत्यर्थयोः **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इत्यनेन आदिवृद्धिः। त्रि इत्यत्र तॄधातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रिप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। विद्या इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

1507. त्वक् (1-30) – त्वच्-धातोः (त्वच् संवरणे, तुदादिः, सि.कौ. - धा.सं. 1301) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। प्रथमैकवचने सुप्रत्ययः, तस्य च **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति लोपे **सुप्तिङन्तं पदम्** (पा.सू. 1-4-14) इति पदसंज्ञायाम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वे निष्पन्नमिदम्। स्त्री. प्र.वि. ए.व.।

1508. त्वत्तः (11-2) – युष्मद्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अव्ययम्।

1509. त्वत्प्रसादात् (18-73) – तव प्रसादः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। प्रसाद इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

1510. त्वत्समः (11-43) – त्वया समः, **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** (पा.सू. 2-1-31) इति समासः। **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1511. त्वदन्यः (6-39) – त्वत् अन्यः, **पञ्चमी** इति योगविभागेन समासः। **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1512. त्वदन्येन (11-47,48) – त्वत् अन्यः, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अन्य इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययः। पुं. तृ.वि. ए.व.।

1513. त्वया (6-33, 11-1,20,38, 18-72) – युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। युष्मद् टा, **त्वमावेकवचने** (पा.सू. 7-2-97) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **योऽचि** (पा.सू. 7-2-89) इति दस्य यकारः। पुं. तृ.वि. ए.व.।

1514. त्वयि (2-3) – युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। युष्मद् ङि, **त्वमावेकवचने** (पा.सू. 7-2-97) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **योऽचि** (पा.सू. 7-2-89) इति दस्य यकारः। पुं. स.वि. ए.व.।

1515. त्वरमाणः (11-27) – त्वर्-धातोः (ञित्वरा सम्भ्रमे, भ्वादिः, सि.कौ. - धा.सं. 775) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण शानच्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. प्र.वि. ए.व.।

1516. त्वम् (2-11,12,26,27,30,33,35, 3-8,41, 4-4,5,15, 10-15,16,41, 11-3,4,18,18,18,18,33,34,37,38,38,39,40,43,49, 18-58) – युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। युष्मद् सु, **त्वाहौ सौ** (पा.सू. 7-2-94) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ङे प्रथमयोरम्** (पा.सू. 7-1-28) इति अमादेशः। पुं. प्र.वि. ए.व.।

1517. त्वा (2-2, 11-21,22,32, 18-66) – पदात् परस्य त्वाम्-स्थाने **त्वामौ द्वितीयायाः** (पा.सू. 8-1-23) इति त्वादेशः। युष्मद् इत्यत्र युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। युष्मद् अम्, **त्वमावेकवचने** (पा.सू. 7-2-97) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ङे प्रथमयोरम्** (पा.सू. 7-1-28) इति अम्, **द्वितीयायां च** (पा.सू. 7-2-87) इति आकारः। पुं. द्वि.वि. ए.व.।

1518. त्वाम् (2-7,7,35, 10-13,17, 11-16,17,19,21,24,26,42,44,46, 12-1, 18-59) – युष्-धातोः (युष भजने, सौत्रः) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। युष्मद् अम्, **त्वमावेकवचने** (पा.सू. 7-2-97) इति मपर्यन्तस्य युष्मद्-शब्दस्य त्वादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ङे प्रथमयोरम्** (पा.सू. 7-1-28) इति अम्, **द्वितीयायां च** (पा.सू. 7-2-87) इति आकारः। पुं. द्वि.वि. ए.व.।

1519. दक्षः (12-16) – दक्ष्-धातोः (दक्ष वृद्धौ शीघ्रार्थे च, भ्वादिः, सि.कौ. - धा.सं. 608) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1520. दक्षिणायनम् (8-25) – दक्षिणम् अयनम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। दक्षिण इत्यत्र दक्ष्-धातोः (दक्ष वृद्धौ शीघ्रार्थे च, भ्वादिः, सि.कौ. - धा.सं. 608) **द्रुदक्षिभ्यामिनन्** (उणा. 2-51) इति इनन्-प्रत्ययः। अयनम् इत्यत्र अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. प्र.वि. ए.व.।

1521. दण्डः (10-38) – दम्-धातोः (दमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1203) **ञमन्ताड्डः** (उणा. 1-111) इति सूत्रेण ड-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति धातोः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः णकारः। पुं. प्र.वि. ए.व.।

1522. दत्तम् (17-28) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **दो दद्घोः** (पा.सू. 7-4-46) इति दथ्-आदेशः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. प्र.वि. ए.व.।

1523. दत्तान् (3-12) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **दो दद्घोः** (पा.सू. 7-4-46) इति दथ्-आदेशः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. द्वि.वि. ब.व.।

1524. ददामि (10-10, 11-8) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लट्, लटः मिप्, दा मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति शपः श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः। लट्, उ.पु. ए.व.।

1525. ददासि (9-27) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लट्, लटः सिप्। दा सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति शपः श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः। लट्, म.पु. ए.व.।

1526. दधामि (14-3) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्, लटः मिप्, धा मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति शपः श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः। लट्, उ.पु. ए.व.।

1527. दध्मुः (1-18) – ध्मा-धातोः (ध्मा शब्दाग्निसंयोगयोः, भ्वादिः, सि.कौ. - धा.सं. 927) लिट्, ध्मा झि, **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति उस्, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति द्वित्वम्, ध्मा ध्मा उस्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिः हल् शिष्यते, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्, **उस्यपदान्तात्** (पा.सू. 6-1-96) इति पररूपैकादेशः। लिट्, प्र.पु. ब.व.।

1528. दध्मौ (1-12,15) – ध्मा (ध्मा शब्दाग्निसंयोगयोः, भ्वादिः, सि.कौ. - धा.सं. 927) लिट्, ध्मा तिप्/मिप्, **परस्मैपदानां णलतुसस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति णल्, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति द्वित्वम्, ध्मा ध्मा उस्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिः हल् शिष्यते, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्, **आत औ णलः** (पा.सू. 7-1-34) इति औ-आदेशः। लिट्, प्र/उ.पु. ए.व.।

1529. दमयताम् (10-38) – दम्-धातोः (दमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1203) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दमयत् आम्। पुं. ष.वि. ब.व.।

1530. दमः (10-4, 16-1, 18-42) – दम्-धातोः (दमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1203) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, अत उपधायाः इति वृद्धौ प्राप्तायाम्, **नोदात्तोपदेशस्य मान्तस्याचमेः** (पा.सू. 7-3-34) इति सूत्रेण ञिति उक्तस्य निषेधात् उपधायाः वृद्धिः न भवति। पुं. प्र.वि. ए.व.।

1531. दम्भमानमदान्विताः (16-10) – दम्भश्च मानश्च मदञ्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, तैः अन्विताः, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। दम्भ इत्यत्र दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं.

1270) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। मान इत्यत्र मान्-धातोः (मान पूजायां जिज्ञासायां च, भ्वादिः, सि.कौ. - धा.सं. 972) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। मद इत्यत्र मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **मदोऽनुपसर्गे** (पा.सू. 3-3-67) इति अप्-प्रत्ययः। अन्वित इत्यत्र अनु-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ब.व.।

1532. दम्भः (16-4) – दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं. 1270) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1533. दम्भार्थम् (17-12) – दम्भाय इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-ो-36) इति समासः। दम्भ इत्यत्र दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं. 1270) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1534. दम्भाहङ्कारसंयुक्ताः (17-5) – दम्भश्च अहङ्कारश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, दम्भाहङ्काराभ्यां संयुक्ताः, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। दम्भ इत्यत्र दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं. 1270) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। अहङ्कार इत्यत्र अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। संयुक्त इत्यत्र सम्पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समो मकारस्य अनुस्वारः। पुं. प्र.वि. ब.व.।

1535. दम्भेन (16-17, 17-18) – दम्भ्-धातोः (दम्भु दम्भने, स्वादिः, सि.कौ. - धा.सं. 1270) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। दम्भ टा, **टाङसिङसाम् इनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। पुं. तृ.वि. ए.व.।

1536. दया (16-2) – दय्-धातोः (दय दानगतिरक्षणहिंसादानेषु, भ्वादिः, सि.कौ. - धा.सं. 481) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति सूत्रेण अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1537. दर्पः (16-4) – दृप्-धातोः (दृप हर्षमोहनयोः, दिवादिः, सि.कौ. - धा.सं. 1196) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1538. दर्पम् (16-18, 18-53) – दृप्-धातोः (दृप हर्षमोहनयोः, दिवादिः, सि.कौ. - धा.सं. 1196) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1539. दर्शनकाङ्क्षिणः (11-52) – दर्शनं काङ्क्षन्ति, दर्शन इति उपपदात् काङ्क्ष्-धातोः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः। दर्शन इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ल्युट् च** (पा.सू. 3-3-115) ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1540. दर्शय (11-4,45) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, दर्शि इति णिजन्तात् लोट्, लोटः सिप्, दर्शि सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्, म.पु. ए.व.।

1541. दर्शयामास (11-9,50) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, दर्शि इति णिजन्तात् लिट्, लिटः तिप्। **कास्प्रत्ययादाममन्त्रे लिटि** (पा.सू. 3-1-35) इति आम्-प्रत्ययः। **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति इकारस्य गुणः, तस्य च **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **आमः** (पा.सू. 2-4-81) इति सूत्रेण आमः परस्य लिटः लोपः, **कृञ्चानुप्रयुज्यते लिटि** (पा.सू. 3-1-40) इति अस्-धातोः अनुप्रयोगः। तस्य च लिटि प्रथमपुरुषैकवचने मध्यमपुरुषबहुवचने उत्तमपुरुषैकवचने च आस इति रूपम्। लिट्, प्र.पु. ए.व.।

1542. दर्शितम् (11-47) – दृश्-धातुः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

1543. दश (13-5) – दंश्-धातोः (दंश दशने, भ्वादिः, सि.कौ. - धा.सं. 989) बाहुलकात् कनिन्-प्रत्ययः अनुस्वारस्थानिकस्य धातोः नकारस्य लोपः च। दशन् जस्/शस्, **ष्णान्ताः षट्** (पा.सू. 1-1-24) इति षट्संज्ञा, अतः **षड्भ्यो लुक्** (पा.सू. 7-1-22) इति जस्-शसोः लुक्। नपुं. प्र.वि. नित्य-ब.व.।

1544. दशनान्तरेषु (11-27) – दशनानाम् अन्तराणि, **षष्ठी** (पा.सू. 2-2-8) इति समासः। दशन इत्यत्र दंश्-धातोः (दंश दशने, भ्वादिः, सि.कौ. - धा.सं. 989) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **जपजभदहदशभञ्जपशां च** (पा.सू. 7-4-86) इति सूत्रे नलोपनिर्देशात् नलोपश्च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। अन्तर इत्यत्र अन्त-पूर्वकात् रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। नपुं. स.वि. ब.व.।

1545. दहति (2-23) – दह्-धातोः (दह भस्मीकरणे, भ्वादिः, सि.कौ. - धा.सं. 989) लट्, लटः तिप्, दह् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्, प्र.पु. ए.व.।

1546. दंष्ट्राकरालानि (11-25,27) – दंष्ट्राभिः करालानि, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। दंष्ट्रा इत्यत्र दंश्-धातोः (दंश दशने, भ्वादिः, सि.कौ. - धा.सं. 989) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदहनहः करणे** (पा.सू. 3-2-182) इति ष्ट्रन्-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। कराल इत्यत्र कर इत्युपपदे अल्-धातोः (अल भूषणपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, कर इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

1547. दाक्ष्यम् (18-43) – दक्षस्य भावः, **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। दक्ष इत्यत्र दक्ष्-धातोः (दक्ष वृद्धौ शीघ्रार्थे च, भ्वादिः, सि.कौ. - धा.सं. 608) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1548. दातव्यम् (17-20) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत् तव्य वा प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

1549. दानक्रियाः (17-25) – दानानि इति क्रियाः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। दान इत्यत्र दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। क्रिया इत्यत्र **कृञः श च** इति कृ-धातोः

(डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) शप्रत्ययः, **रिङ्शयग्लिङ्क्षु** (पा.सू. 3-3-100) इति रिङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

1550. दानवाः (10-14) – दनोः अपत्यानि इति विग्रहे दनु-शब्दात् **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुण, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। दनु इत्यत्र दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) बाहुलकात् क्नु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ब.व.।

1551. दानम् (10-5, 16-1, 17-7,20,20,21,22, 18-5,43) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। दान अम्। नपुं. प्र.वि. ए.व.।

1552. दाने (17-17) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। दान ङि, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. ष.वि. ए.व.।

1553. दानेन (11-53) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। दान टा, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। नपुं. तृ.वि. ए.व.।

1554. दानेषु (8-28) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। दान सुप्, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एकारः। **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। नपुं. स.वि. ब.व.।

1555. दानैः (11-48) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। दान भिस्, **अतो भिस ऐस्** (पा.सू. 7-1-9) इति ऐस्-आदेशः। नपुं. तृ.वि. ब.व.।

1556. दास्यन्ते (3-12) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लृट्, लृटः झ, दा झ, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। लृ, प्र.पु. ब.व.।

1557. दास्यामि (16-15) – दा (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लृट्, लृटः मिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। लृट्, उ.पु. ए.व.।

1558. दिवि (9-20, 11-12, 18-40) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिवि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दिव् ङि। स्त्री. स.वि. ए.व.।

1559. दिव्यगन्धानुलेपनम् (11-11) – दिव्यः गन्धः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, दिव्यगन्धस्य अनुलोपनं यस्मिन्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दिव्य इत्यत्र दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। गन्ध इत्यत्र गन्ध्-धातोः (गन्ध अर्दने, चुरादिः, सि.कौ. - धा.सं. 1685) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अनुलेपन इत्यत्र अनुपूर्वकात् लिप्-धातोः (लिप उपदेहे, तुदादिः, सि.कौ.

- धा.सं. 1433) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

1560. दिव्यमाल्याम्बरधरम् (11-11) – माल्यं च अम्बरं च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। दिव्ये माल्याम्बरे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। दिव्यमाल्याम्बरयोः धरः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। दिव्य इत्यत्र दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। माल्य इत्यत्र मल्-धातोः (मल धारणे, भ्वादिः, सि.कौ. - धा.सं. 493) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। अम्बर इत्यत्र अब्-धातोः (अबि शब्दे, भ्वादिः, सि.कौ. - धा.सं. 378) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, बाहुलकात् अर-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः मकारः। धर इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

1561. दिव्यम् (4-9, 8-8) – दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. प्र.वि. ए.व.।

1562. दिव्यानाम् (10-40) – दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दिव्य आम्। स्त्री. ष.वि. ब.व.।

1563. दिव्यानि (11-5) – दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. द्वि.वि. ब.व.।

1564. दिव्यानेकोद्यतायुधम् (11-10) – उद्यतम् आयुधम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, अनेकम् उद्यतायुधम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, दिव्यम् अनेकोद्यतायुधम् यस्मिन्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दिव्य इत्यत्र दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अनेक इत्यत्र न एकम् अनेकम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, **तस्मान्नुडचि** (पा.सू. 6-3-74) इति नुट्। एक इत्यत्र इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **इण्भीकापाशल्यतिमर्चिभ्यः कन्** (उणा. 3-43) इति कन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। उद्यत इत्यत्र उद्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आयुध इत्यत्र आङ्पूर्वकात् युध-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **घञर्थे कविधानम् स्थास्नापाहनियुध्यर्थम्** (वा. 2204) इति वार्तिकेन क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

1565. दिव्यान् (9-20, 11-15) –दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दिव्य शस्। पुं. द्वि.वि. ब.व.।

1566. दिव्याः (10-16,19) – दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दिव्य जस्। स्त्री. द्वि.वि. ब.व.।

1567. दिव्यौ (1-14) – दिव् इति शब्दात् **द्युप्रागपागुदक्प्रतीचो यत्** (पा.सू. 4-2-101) इति सूत्रेण यत्-प्रत्ययः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिविप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दिव्य औ,औट्। पुं. प्र.वि. द्वि.व.।

1568. दिशः (6-13, 11-20,25,36) – दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. द्वि.वि. ब.व.।

1569. दीपः (6-19) – दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. प्र.वि. ए.व.।

1570. दीप्तविशालनेत्रम् (11-24) – दीप्ते च ते विशाले **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, दीप्तविशाले नेत्रे यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दीप्त इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। विशाल इत्यत्र वि इत्यस्मात् **वेः शालच्छङ्कटचौ** (पा.सू. 5-2-28) इति शालच्प्रत्ययः। नेत्र इत्यत्र नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति ष्ट्रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1571. दीप्तहुताशवक्त्रम् (11-19) – दीप्तः हुताशः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, दीप्तहुताशः वक्त्रे यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दीप्त इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। हुताश इत्यत्र हुतम् अश्नाति इति विग्रहे हुत इत्युपपदे अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। हुत इत्यत्र हु-धातोः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। वक्त्र इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **गृधृविपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा. 4-166) इति त्र-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

1572. दीप्तम् (11-24) – दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। पुं. द्वि.वि. ए.व.।

1573. दीप्तानलार्कद्युतिम् (11-17) – अनलश्च अर्कश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, दीप्तौ अनलार्कौ **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। दीप्तानलार्कयोः द्युतिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। दीप्तानलार्कद्युतिः इव द्युतिः यस्य तं दीप्तानलार्कद्युतिम्, **सप्तम्युपमानपूर्वपदस्य उत्तरपदलोपश्च** (भाष्यवार्तिक - 1387) इति समासः उत्तरपदलोपश्च। दीप्त इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। अनल इत्यत्र अनल इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **वृषादिभ्यश्चित्** (उणा. 1-106) इति कल-प्रत्ययः। अर्क इत्यत्र अर्च्-धातोः (अर्च पूजायाम् भ्वादिः, सि.कौ. - धा.सं. 204) **अकर्तरि च कारके संज्ञायाम्** (पा.सू.

3-3-19) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। द्युति इत्यत्र द्युत्-धातोः (द्युत दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 741) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

1574. दीप्तिमन्तम् (11-17) – दीप्ति-शब्दात् **तदस्यास्मिन्स्तीति मतुप्** (पा.सू. 5-2-94) इति सूत्रेण मतुप्-प्रत्ययः। दीप्ति इत्यत्र दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **स्त्रियां क्तिन्** (पा.सू. ) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। पुं. द्वि.वि. ए.व.।

1575. दीयते (17-20,21,22) – दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) लट्, लटः त, दा त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईकारः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

1576. दीर्घसूत्री (18-28) – दीर्घं सूत्रम्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, दीर्घसूत्र-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। दीर्घ इत्यत्र दॄ-धातोः (दॄ भये, भ्वादिः, सि.कौ. - धा.सं. 808) बाहुलकात् घक्-प्रत्ययः, **ॠत इद्धातोः** (पा.सू. 7-1-100) इति इकारः, **हलि च** (पा.सू. 8-2-77) इति दीर्घः। सूत्र इत्यत्र सूत्र-धातोः (सूत्र वेष्टने विमोचने ग्रन्थने च, चुरादिः, सि.कौ. - धा.सं. 1908) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा सिव्-धातोः **सिविमुच्योष्टेरू च** (उणा. 4-162) इति ष्ट्रन्-प्रत्ययः टेः ऊ इति आदेशः च। पुं. प्र.वि. ए.व.।

1577. दुरत्यया (7-14) – दुर्-अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1578. दुरासदम् (3-43) – दुर्-आङ्पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1579. दुर्गतिम् (6-40) – दुष्टा गतिः, **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। गति इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। स्त्री. द्वि.वि. ए.व.।

1580. दुर्निग्रहम् (6-35) – दुर्-निपूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1581. दुर्निरीक्ष्यम् (11-17) – दुर्निर्पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1582. दुर्बुद्धेः (1-23) – दुर् अर्थात् दुष्टा बुद्धिः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, दिवादिः, सि.कौ. - धा.सं. 1172) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। पुं. ष.वि. ए.व.।

1583. दुर्मतिः (18-16) – दुष्टा मतिः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मति इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

1584. दुर्मेधाः (18-35) – दुर् अर्थात् दुष्टा मेधा यस्य, **अनेकन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **नित्यमसिच् प्रजामेधयोः** (पा.सू. 5-4-122) इति असिच् समासान्तः। मेधा इत्यत्र मेध्-धातोः (मेधृ मेधाहिंसनयोः सङ्गमे च, भ्वादिः,

सि.कौ. - धा.सं. 870) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1585. दुर्योधनः (1-2) – दुर्-पूर्वकात् युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः** (वा. 2243) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. प्र.वि. ए.व.।

1586. दुर्लभतरम् (6-42) – दुर्लभ-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। दुर्लभ इत्यत्र दुर्पूर्वकात् लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं. 975) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1587. दुष्कृताम् (4-8) – दुस्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. ष.वि. ब.व.।

1588. दुष्कृतिनः (7-15) – दुष्कृत इति शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। दुष्कृत इत्यत्र दुष्टं कृतम् इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। कृत इत्यत्र कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **निष्ठा** (पा.सू. 2-2-36) इति क्त-प्रत्ययः, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. प्र.वि. ब.व.।

1589. दुष्टासु (1-41) – दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. स.वि. ब.व.।

1590. दुष्पूरम् (16-10) – दुस्पूर्वकात् पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उदोष्ठ्यपूर्वस्य** (पा.सू. 7-1-102) इति उत्वम्, **र्वोरुपधाया: दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. द्वि.वि. ए.व.।

1591. दुष्पूरेण (3-39) – दुस्पूर्वकात् पॄधातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उदोष्ठ्यपूर्वस्य** (पा.सू. 7-1-102) इति उत्वम्, **र्वोरुपधाया: दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. तृ.वि. ए.व.।

1592. दुष्प्रापः (6-36) – दुस्पूर्वकात् प्र-पूर्वकात् आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. प्र.वि. ए.व.।

1593. दुःखतरम् (2-36) – दुःख-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. द्वि.वि. ए.व.।

1594. दुःखयोनयः (5-22) – दुःखस्य योनयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। योनि इत्यत्र **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। स्त्री. प्र.वि. ब.व.।

1595. दुःखशोकामयप्रदाः (17-9) – दुःखं च शोकश्च आमयश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, दुःखशोकमयानां प्रदाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। शोक इत्यत्र शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। आमय इत्यत्र आम-उपपदे या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः डित्त्वसामर्थ्यात् टेः लोपः। आम इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। प्रद इत्यत्र प्र-पूर्वकात् दा-धातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **प्रे दाज्ञः** (पा.सू. 3-2-6) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. प्र.वि. ब.व.।

1596. दुःखसंयोगवियोगम् (6-23) – दुःखस्य संयोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, दुःखसंयोगात् वियोगः, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। संयोग इत्यत्र सम्-पूर्वकात् युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः। वियोग इत्यत्र वि-पूर्वकात् युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं. 1177) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

1597. दुःखहा (6-17) – दुःखं हन्ति, दुःख इति उपपदात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1598. दुःखम् (5-6, 6-32, 10-4, 12-5, 13-6, 14-16, 18-8) – दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

1599. दुःखान्तम् (18-36) – दुःखस्य अन्तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1600. दुःखालयम् (8-15) – दुःखानाम् आलयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। आलय इत्यत्र आङ्पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1139) **एरच्** (पा.सू. 3-3-56) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. द्वि.वि. ए.व.।

1601. दुःखेन (6-22) – दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. तृ.वि. ए.व.।

1602. दुःखेषु (2-56) – दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. स.वि. ब.व.।

1603. दूरस्थम् (13-15) – दूरे तिष्ठति इति विग्रहे दूर इत्युपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति कप्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। दूर इत्यत्र दुर्-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **दुरीणो लोपश्च** (उणा. 2-20) इति सूत्रेण रक्-प्रत्ययः धातोः च लोपः, **रो रि** (पा.सू. 8-3-14) इति रेफलोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। नपुं. प्र.वि. ए.व.।

1604. दूरेण (2-49) – दुर्-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **दुरीणो लोपश्च** (उणा. 2-20) इति सूत्रेण रक्-प्रत्ययः धातोः च लोपः, **रो रि** (पा.सू. 8-3-14) इति रेफलोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। दूर टा, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः। नपुं. तृ.वि. ए.व.।

1605. दृढनिश्चयः (12-14) – दृढः निश्चयः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दृढ इति **दृढः स्थूलबलयोः** (पा.सू. 7-2-20) इत्यत्र दृंह्-धातोः (दृहि वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 734) क्त-प्रत्ययस्य निपातनेन निष्पन्नम्। निश्चय इत्यत्र निपूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 8-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

1606. दृढव्रताः (7-28, 9-14) – दृढं व्रतं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। दृढ इति **दृढः स्थूलबलयोः** (पा.सू. 7-2-20) इत्यत्र दृंह्-धातोः (दृहि वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 734) क्त-प्रत्ययस्य निपातनेन निष्पन्नम्। व्रत इत्यत्र वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **पृषिरञ्जिभ्यां कित्** (उणा. 3-111) इति बाहुलकात् अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

1607. दृढम् (6-34, 18-64) – दृढ इति **दृढः स्थूलबलयोः** (पा.सू. 7-2-20) इत्यत्र दृंह्-धातोः (दृहि वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 734) क्त-प्रत्ययस्य निपातनेन निष्पन्नम्। नपुं. प्र.वि. ए.व.।

1608. दृढेन (15-3) – दृढ इति **दृढः स्थूलबलयोः** (पा.सू. 7-2-20) इत्यत्र दृंह्-धातोः (दृहि वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 734) क्त-प्रत्ययस्य निपातनेन निष्पन्नम्। नपुं. तृ.वि. ए.व.।

1609. दृष्टपूर्वम् (11-47) – दृष्टं पूर्वम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। दृष्ट इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1610. दृष्टवान् (11-52,53) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति क्तवतु-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

1611. दृष्टः (2-16) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

1612. दृष्टिम् (16-9) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। स्त्री. द्वि.वि. ए.व.।

1613. दृष्ट्वा (1-2,20,28, 2-59, 11-20,23,25,45,49,51) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

1614. देव (11-15,44,45) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. सम्बो.वि. ए.व.।

1615. देवताः (4-12) – देव-शब्दात् **देवात्तल्** (पा.सू. 5-4-27) इति सूत्रेण तल्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। स्त्री. द्वि.वि. ब.व.।

1616. देवदत्तम् (1-15) – देवाः एनं दद्यासुः इति विग्रहे **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति सूत्रेण देव-उपपदे दा-धातोः आशिषि संज्ञायां क्त-प्रत्ययः, **दो दद्घोः** (पा.सू. 7-4-46) इति दथ्-आदेशः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1617. देवदेव (10-15) – देवानां देव!, **षष्ठी** (पा.सू. 2-2-8) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. सम्बो.वि. ए.व.।

1618. देवदेवस्य (11-13) – देवानां देवः तस्य, **षष्ठी** (पा.सू. 2-2-8) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ए.व.।

1619. देवद्विजगुरुप्राज्ञपूजनम् (17-14) – देवाश्च द्विजाश्च गुरवश्च प्राज्ञाश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। देवद्विजगुरुप्राज्ञानां पूजनम् **षष्ठी** (पा.सू. 2-2-8) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। द्विज इत्यत्र द्विपूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामार्थ्यात् टेर्लोपः। गुरु इत्यत्र गॄ-धातोः (गॄ निगरणे, तुदादिः, सि.कौ. - धा.सं. 1410) **कृग्रोरुच्च** इति कु-प्रत्ययः (उणा. 1-24) इति कु-प्रत्ययः, उकारान्तादेशश्च **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् भवति। प्राज्ञ इत्यत्र प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, ततः प्रज्ञ-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-114) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। नपुं. प्र.वि. ए.व.।

1620. देवभोगान् (9-20) – देवानां भोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, भ्वादिः, सि.कौ. - धा.सं. 1454) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ब.व.।

1621. देवयजः (7-23) – देवान् यजन्ति इति विग्रहे देव इत्युपपदे यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1622. देवर्षिः (10-13) – देवानाम् ऋषिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **आद्गुणः** (पा.सू. 6-1-87) इति **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् गुणः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः अयं च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

1623. देवर्षीणाम् (10-26) – देवानाम् ऋषिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **आद्गुणः** (पा.सू. 6-1-87) इति **उरण्रपरः** (पा.सू. 1-1-51) इति रपरसन् गुणः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः अयं च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

1624. देवलः (10-13) – देवान् लाति, देव-उपपदे ला-धातोः (ला आदाने, अदादिः, सि.कौ. - धा.सं. 1058) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1625. देववर (11-31) – देवनां वर!, **षष्ठी** (पा.सू. 2-2-8) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। वर इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. सम्बो.वि. ए.व.।

1626. देवव्रताः (9-25) – देवेषु व्रतं येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। व्रत इत्यत्र वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **पृषिरञ्जिभ्यां कित्** (उणा. 3-111) इति बाहुलकात् अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

1627. देवम् (11-11,14) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1628. देवानाम् (10-2,22) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

1629. देवान् (3-11, 7-23, 9-25, 11-15, 17-4) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ब.व.।

1630. देवाः (3-11,12, 10-14, 11-52) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1631. देवेश (11-25,37,45) – देवानाम् ईश!, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। ईश इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

1632. देवेषु (18-40) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ब.व.।

1633. देशे (6-11, 17-20) – दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। देश ङि। पुं. स.वि. ए.व.।

1634. देहभृता (18-11) – देहं बिभर्ति तेन, देह-उपपदे भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्-प्रत्ययः, क्विपः सर्वलोपः - क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ए.व.।

1635. देहभृताम् (8-4) – देहं बिभ्रति तेषाम्, देह-उपपदात् भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

1636. देहभृत् (14-14) – देहं बिभर्ति, देह-उपपदात् भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1637. देहवद्भिः (12-5) – देह-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति वकारादेशः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ब.व.।

1638. देहसमुद्भवान् (14-20) – देहस्य समुद्भवाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। समुद्भव इत्यत्र सम्-उत्पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ब.व.।

1639. देहम् (4-9, 8-13, 15-14) – दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1640. देहान्तरप्राप्तिः (2-23) – अन्यः देहः देहान्तरम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। देहान्तरस्य प्राप्तिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अन्तर इत्यत्र अन्त-उपपदे रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, अन्त इत्यत्र अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति

अच्-प्रत्ययः, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। प्राप्ति इत्यत्र प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **क्तिन्नाबादिभ्यश्च वक्तव्यः** (वा. 4043) इति वार्तिकेन क्तिन्-प्रत्ययः। स्त्री. प्र.वि. ए.व.।

1641. देहाः (2-18) – दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1642. देहिनम् (3-40, 14-5,7) – देह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनिप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1643. देहिनाम् (17-2) – देह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनिप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

1644. देहिनः (2-13,59) – देह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनिप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ए.व.।

1645. देही (2-22,30, 5-13, 14-20) – देह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनिप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1646. देहे (2-13,30, 8-2,4, 11-7,15, 13-22,32, 14-5) – दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ए.व.।

1647. दैत्यानाम् (10-30) – दिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 8-4-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। दिति इति नामधेयम्, दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. ष.वि. ब.व.।

1648. दैवम् (4-25, 18-14) – देव-शब्दात् **तत आगतः** (पा.सू. 4-3-74) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1649. दैवः (16-6,6) – देवशब्दात् **तत आगतः** (पा.सू. 4-3-74) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1650. दैवी (7-24, 16-5) – देव-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, **यस्येति च** (पा.सू. 6-4-148) इति ईलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। स्त्री. प्र.वि. ए.व.।

1651. दैवीम् (7-14, 16-5) – देव-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, **यस्येति च** (पा.सू. 6-4-148) इति ईलोपः। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। स्त्री. द्वि.वि. ए.व.।

1652. दोषवत् (18-3) – दोष-शब्दात् **तेन तुल्यं क्रिया चेद्वतिः** (पा.सू. 5-1-125) इति वति-प्रत्ययः। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

1653. दोषम् (1-38,39) – दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1654. दोषेण (18-48) – दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ए.व.।

1655. दोषैः (1-43) – दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ब.व.।

1656. द्यावापृथिव्योः (11-20) – द्यौश्च पृथिवी च तयोः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। **दिवसश्च पृथिव्याम्** (पा.सू. 6-3-30) इत्यनेन दिवः स्थाने द्यावा इति आदेशः। दिव् इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) बाहुलकात् डिवि(इव्)-प्रत्ययः, डित्त्वसामर्थ्यात् इव् इति टेः लोपः। पृथिवी इत्यत्र **प्रथेः षिवन् सम्प्रसारणञ्च** (उणा. 1-148) इत्यनेन प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) षिवन्-प्रत्ययः धातोः संप्रसारणम् ऋकारः च, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। स्त्री. ष.वि. द्वि.व.।

1657. द्यूतम् (10-36) – दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **च्छ्वोः शूडनुनासिके च** (पा.सू. 3-4-19) इति ऊठ्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. प्र.वि. ए.व.।

1658. द्रक्ष्यसि (4-35) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लृट्, लृटः सिप्, **स्यतासीलृलुटोः** (पा.सू. 3-1-33) इति स्य, **सृजिदृशोर्झल्यमकिति** (पा.सू. 6-1-58) इति अम्-आगमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षकारः, **षढोः कः सि** (पा.सू. 8-2-41) इति ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यः आदेशः। लृट्. म.पु. ए.व.।

1659. द्रवन्ति (11-28,36) – द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) लट्, लटः झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ब.व.।

1660. द्रव्यमयात् (4-33) – द्रव्यशब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति सूत्रेण मयट्-प्रत्ययः। द्रव्य इति **द्रव्यं च भव्ये** (पा.सू. 5-3-114) इति सूत्रे द्रु-शब्दात् यत्-प्रत्ययान्तः निपातनात् सिद्धः। द्रु इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. पं.वि. ए.व.।

1661. द्रव्ययज्ञाः (4-28) – द्रव्यमेव यज्ञं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः। द्रव्य इति **द्रव्यं च भव्ये** (पा.सू. 5-3-114) इति सूत्रे द्रु-शब्दात् यत्-प्रत्ययान्तः निपातनात् सिद्धः। द्रु इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। यज्ञ इत्यत्र यज्-

धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

1662. द्रष्टा (14-19) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **सृजिदृशोर्झल्यमकिति** (पा.सू. 6-1-58) इति अम्-आगमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

1663. द्रष्टुम् (11-3,4,7,8,46,48,53,54) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **सृजिदृशोर्झल्यमकिति** (पा.सू. 6-1-58) इति अम्-आगमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

1664. द्रुपदपुत्रेण (1-3) – द्रुपदस्य पुत्रः **षष्ठी** (पा.सू. 2-2-8) इति समासः। द्रुपद इत्यत्र बाहुलकात् द्रु इति उपपदे पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) अच्-प्रत्ययः। द्रु इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. तृ.वि. ए.व.।

1665. द्रुपदः (1-4,18) – द्रुपद इत्यत्र बाहुलकात् द्रु इति उपपदात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) अच्-प्रत्ययः। द्रु इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

1666. द्रोणम् (2-4, 11-34) – द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति सूत्रेण न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। ततः द्रोणः अर्थात् कलशः उत्पत्तिस्थानत्वेन अस्य अस्ति इत्यर्थे द्रोण-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-24-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। पुं. द्वि.वि. ए.व.।

1667. द्रोणः (11-26) – द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति सूत्रेण न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। ततः द्रोणः अर्थात् कलशः उत्पत्तिस्थानत्वेन अस्य अस्ति इत्यर्थे द्रोण-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-24-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। पुं. प्र.वि. ए.व.।

1668. द्रौपदेयाः (1-3,28) – द्रौपदी-शब्दात् **स्त्रीभ्यो ढक्** (पा.सू. 4-1-120) इति ढक्-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति एयादेशः, **किति च** (पा.सू. 7-2-118) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति ईलोपः। द्रौपदी इत्यत्र द्रुपद-शब्दात् **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-114) इति आदिवृद्धिश्च, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। द्रुपद इत्यत्र बाहुलकात् द्रु इति उपपदात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) अच्-प्रत्ययः। द्रु इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ब.व.।

1669. द्वन्द्वमोहनिर्मुक्ताः (7-28) – द्वन्द्वस्य मोहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, द्वन्द्वमोहेन निर्मुक्ताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। द्वन्द्व इत्यत्र द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्वि-शब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। निर्मुक्त इत्यत्र निर्पूर्वकात् मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इत्यनेन क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ए.व.।

1670. द्वन्द्वमोहेन (7-27) – द्वन्द्वस्य मोहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। द्वन्द्व इत्यत्र द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ए.व.।

1671. द्वन्द्वः (10-33) – द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्वि-शब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। पुं. प्र.वि. ए.व.।

1672. द्वन्द्वातीतः (4-22) – द्वन्द्वम् अतीतः, **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। द्वन्द्व इत्यत्र द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। अतीत इत्यत्र अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, अति इत इति स्थिते **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

1673. द्वन्द्वैः (15-5) – द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्वि-शब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। पुं. तृ.वि. ब.व.।

1674. द्वारम् (16-21) – द्वृधातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. प्र.वि. ए.व.।

1675. द्विजोत्तम (1-7) – द्विजानाम् उत्तमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। द्विज इत्यत्र द्वि-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। द्वि इति द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। उत्तम इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ् वा, **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति उपधावृद्धिर्न। पुं. सम्बो.वि. ए.व.।

1676. द्विविधा (3-3) – द्वे विधे अस्याः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। द्वि इति द्रु-धातोः (द्रु स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1677. द्विषतः (16-19) – द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **द्विषोऽमित्रे** (पा.सू. 3-2-131) इति शतृ-प्रत्ययः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति तस्य लुक्, द्विषत् शस्। पुं. द्वि.वि. ब.व.।

1678. द्वेषः (13-6) – द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1679. द्वेष्टि (2-57, 5-3, 12-17, 14-22, 18-10) –द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। लट्. प्र.पु. ए.व.।

1680. द्वेष्यः (9-29) – द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1681. द्वौ (15-16, 16-6) – द्वि औ/औट्, **त्यदादीनामः** (पा.सू. 7-1-102) इति अकारः, **वृद्धिरेचि** (पा.सू. 6-1-88) इति वृद्धिः। द्वि इति द्रु-धातोः (द्रु स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। पुं. प्र.वि. नित्य-द्वि.व.।

1682. धनमानमदान्विताः (16-17) – धनं च मानं च मदश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। धनमानमदैः अन्विताः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। धन इत्यत्र धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। मान इत्यत्र मान्-धातोः (मान पूजायां जिज्ञासायां च, भ्वादिः, सि.कौ. - धा.सं. 972) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। मद इत्यत्र मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **मदोऽनुपसर्गे** (पा.सू. 3-3-67) इति अप्-प्रत्ययः। अन्वित इत्यत्र अनु-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ब.व.।

1683. धनम् (16-13) – धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1684. धनञ्जय (2-48,49, 4-41, 7-7, 9-9, 12-9, 18-29,72) – **संज्ञायां भृतॄवृजिधारिसहितपिदमः** (पा.सू. 3-2-46) इति सूत्रेण धन इति उपपदे जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) खच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अरुर्द्विषदजन्तस्य मुम्** (पा.सू. 6-3-67) इति मुम्। धन इत्यत्र धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

1685. धनञ्जयः (1-15, 10-37, 11-14) – **संज्ञायां भृतॄवृजिधारिसहितपिदमः** (पा.सू. 3-2-46) इति सूत्रेण धन इति उपपदे जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) खच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अरुर्द्विषदजन्तस्य मुम्** (पा.सू. 6-3-67) इति मुम्। धन इत्यत्र धन्-

धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1686. धनानि (1-33) – धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

1687. धनुर्धरः (18-78) – धनुषः धरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। धनुस् इत्यत्र **अर्तिपॄवपियजितनिधनितपिभ्यो नित्** (उणा. 2-117) इति सूत्रेण धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) उसि-प्रत्ययः। धर इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1688. धनुः (1-20) - **अर्तिपॄवपियजितनिधनितपिभ्यो नित्** (उणा. 2-117) इति धन्-धातोः (धन धान्ये, जुहोत्यादिः, सि.कौ. - धा.सं. 1104) उसि-प्रत्ययः अथवा **भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः** (उणा. 1-7) इति उ-प्रत्ययः, उ-प्रत्ययान्तत्वे तु उकारान्तत्वम् एव अस्य शब्दस्य। नपुं. द्वि.वि. ए.व.।

1689. धर्मकामार्थान् (18-34) – धर्मश्च कामश्च अर्थश्च तान्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

1690. धर्मक्षेत्रे (1-1) – धर्मस्य क्षेत्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। क्षेत्र इत्यत्र क्षिधातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि. ए.व.।

1691. धर्मसम्मूढचेताः (2-7) – धर्मेण सम्मूढः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। धर्मसम्मूढं चेतः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सम्मूढ इत्यत्र सम्पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **यस्य विभाषा** (पा.सू. 7-2-15) इति इटः अभावः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य वा घकारः, तदभावे **हो ढः** (पा.सू. 8-2-31) इति ढकारः, मुढ त, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1692. धर्मसंस्थापनार्थाय (4-8) – धर्मस्य संस्थापनम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। धर्मसंस्थापनमेव अर्थः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। संस्थापन इत्यत्र सम्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्, **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **मोऽनुस्वारः** (पा.सू. 8-3-23)

इति अनुस्वारः समो मस्य अनुस्वारः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्चायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तीरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। पुं. च.वि. ए.व.।

1693. धर्मस्य (2-40, 4-7, 9-3, 14-27) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

1694. धर्मम् (18-31,32) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1695. धर्मात्मा (9-31) – धर्मे आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1696. धर्माविरुद्धः (7-11) – धर्मस्य अविरुद्धः. **षष्ठी** (पा.सू. 2-2-8) इति समासः, न विरुद्धः, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। विरुद्ध इत्यत्र वि-पूर्वकात् रुध्-धातोः (रुधिर् आवरणे, रुधादिः, सि.कौ. - धा.सं. 1438) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति धकारस्य दकारः। पुं. प्र.वि. ए.व.।

1697. धर्मे (1-40) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. स.वि. ए.व.।

1698. धर्म्यम् (2-33, 9-2, 18-70) – **धर्मपथ्यर्थन्यायादनपेते** (पा.सू. 4-4-92) इति सूत्रेण धर्म-शब्दात् यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

1699. धर्म्यात् (2-31) – **धर्मपथ्यर्थन्यायादनपेते** (पा.सू. 4-4-92) इति सूत्रेण धर्म-शब्दात् यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. पं.वि. ए.व.।

1700. धर्म्यामृतम् (12-20) – धर्म्यम् अमृतम् इव, **उपमितं व्याघ्रादिभिः समान्याप्रयोगे** (पा.सू. 2-1-56) इति समासः। **धर्मपथ्यर्थन्यायादनपेते** (पा.सू. 4-4-92) इति सूत्रेण धर्म-शब्दात् यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अमृत इत्यत्र अविद्यमानं मृतं यस्मात् तत् इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति समासः, मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

1701. धाता (9-17, 10-33) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ए.व.।

1702. धातारम् (8-9) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। धातृ अम्। पुं. द्वि.वि. ए.व.।

1703. धाम (8-21, 10-12, 11-38, 15-6) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1704. धारयते (18-33,34) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** इति वृद्धिः, धारि लट्, लटः त। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एकारः। लट्. प्र.पु. ए.व.।

1705. धारयन् (5-9, 6-13) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, धारि लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

1706. धारयामि (15-13) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** इति वृद्धिः, धारि लट्,लटः मिप्, धारि मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

1707. धार्तराष्ट्रस्य (1-23) – धृतराष्ट्रस्य अपत्यस्य इति विग्रहे **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः। धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. ष.वि. ए.व.।

1708. धार्तराष्ट्राणाम् (1-19) – धृतराष्ट्रस्य अपत्यानाम् इति विग्रहे **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः। धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. ष.वि. ब.व.।

1709. धार्तराष्ट्रान् (1-20,36,37) – धृतराष्ट्रस्य अपत्यानि इति विग्रहे **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः। धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822)

**सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. द्वि.वि. ब.व.।

1710. धार्तराष्ट्राः (1-46, 2-6) – धृतराष्ट्रस्य अपत्यानि इति विग्रहे **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः। धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ब.व.।

1711. धार्यते (7-5) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, धारि इति णिजन्तात् कर्मणि लट्, लटः त, **सार्वधातुको यक्** (पा.सू. 3-1-67) इति यक्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि-लट्. प्र.पु. ए.व.।

1712. धीमता (1-3) – धी-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। धी इत्यत्र ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ध्यायतेः सम्प्रसारणं च** (वा. 2151) इति क्विप् सम्प्रसारणं च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **हलः** (पा.सू. 6-4-2) इति दीर्घः। पुं. तृ.वि. ए.व.।

1713. धीमताम् (642) – धी-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। धी इत्यत्र ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ध्यायतेः सम्प्रसारणं च** (वा. 2151) इति क्विप् सम्प्रसारणं च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **हलः** (पा.सू. 6-4-2) इति दीर्घः। पुं. ष.वि. ब.व.।

1714. धीरम् (2-15) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **सुसूधाञ्गृधिभ्यः क्रन्** (उणा. 2-25) इति क्रन्प्रत्ययः, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईत्वम्। पुं. द्वि.वि. ए.व.।

1715. धीरः (2-13, 14-24) – धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **सुसूधाञ्गृधिभ्यः क्रन्** (उणा. 2-25) इति क्रन्प्रत्ययः, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईत्वम्। पुं. प्र.वि. ए.व.।

1716. धूमः (8-25) – धू-धातोः (धूञ् कम्पने, क्र्यादिः, सि.कौ. - धा.सं. 1487) **इषियुधीन्धिदशिश्याधूसूभ्यो मक्** (उणा. 1-142) इति मक्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1717. धूमेन (3-38, 18-48) – धू-धातोः (धूञ् कम्पने, क्र्यादिः, सि.कौ. - धा.सं. 1487) **इषियुधीन्धिदशिश्याधूसूभ्यो मक्** (उणा. 1-142) इति मक्-प्रत्ययः। धूम टा। पुं. तृ.वि. ए.व.।

1718. धृतराष्ट्रस्य (11-26) – धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। धृतराष्ट्र ङस्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति स्यादेशः। पुं. ष.वि. ए.व.।

1719. धृतराष्ट्रः (1-1) – धृत इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं.900) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति।। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नामधेयम्। पुं. प्र.वि. ए.व.।

1720. धृतिगृहीतया (6-25) – धृत्या गृहीता तया, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। धृति इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। राष्ट्र इत्यत्र राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **वश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। गृहीता इत्यत्र ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः, **ग्रहोलिटि दीर्घः** (पा.सू. 2-2-37) इति इटः दीर्घः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

1721. धृतिम् (11-24) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। धृति अम्। स्त्री. द्वि.वि. ए.व.।

1722. धृतिः (10-34, 13-6, 16-3, 18-33,34,35,43) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। धृति सु। स्त्री. प्र.वि. ए.व.।

1723. धृतेः (18-29) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। धृति ङसि,ङस्। स्त्री. ष.वि. ए.व.।

1724. धृत्या (18-33,34,51) – धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। धृति टा। स्त्री. तृ.वि. ए.व.।

1725. धृत्युत्साहसमन्वितः (18-26) – धृतिश्च उत्साहश्च **चार्थे द्वन्द्वः** (पा.सू. 3-2-29) इति समासः। धृत्युत्साहाभ्यां समन्वितः **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। धृति इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। उत्साह इत्यत्र उद्-पूर्वकात् सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। समन्वित इत्यत्र सम्-अनुपूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तः-प्रत्ययः **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

1726. धृष्टकेतुः (1-5) – नामधेयम्। धृष्ट इत्यत्र धृष्-धातोः (ञिधृषा प्रागल्भ्ये, स्वादिः, सि.कौ. - धा.सं. 1239) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। केतुः इत्यत्र **चायः किः**

(उणा. 1-73) इति सूत्रेण चाय्-धातोः (चायृ पूजानिशामनयोः, भ्वादिः, सि.कौ. - धा.सं. 880) तु-प्रत्ययः धातोः कि इति आदेशः च, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1727. धृष्टद्युम्नः (1-17) – नामधेयम्। धृष्ट इत्यत्र धृष्-धातोः (ञिधृषा प्रागल्भ्ये, स्वादिः, सि.कौ. - धा.सं. 1239) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। द्युम्न इत्यत्र दिवं मनति इति विग्रहे दिव् इति उपपदे म्ना-धातोः (म्ना अभ्यासे, भ्वादिः, सि.कौ. - धा.सं. 928) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19 इति उपपदसमासः, **दिव उत्** (पा.सू. 6-1-131) इति वकारस्य उत्-आदेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। द्यु म्ना क, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. प्र.वि. ए.व.।

1728. धेनूनाम् (10-28) – धे-धातोः (धेट् पाने, भ्वादिः, सि.कौ. - धा.सं. 902) **धेट इच्च** (उणा. 3-34) इति नु-प्रत्ययः। स्त्री. ष.वि. ब.व.।

1729. ध्यानयोगपरः (18-52) – ध्यानं च योगश्च **चार्थे द्वन्द्वः** इति समासः, ध्यानयोगौ परौ यस्य सः **अनेकमन्यपदार्थे** इति समासः। ध्यान इत्यत्र ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **अकः सवर्णे दीर्घः** इति दीर्घः। योग इत्यत्र युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-2-52) इति कुत्वम्, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1730. ध्यानम् (12-12) – ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101)। नपुं. प्र.वि. ए.व.।

1731. ध्यानात् (12-12) – ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101)। नपुं. पं.वि. ए.व.।

1732. ध्यानेन (13-24) – ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101)। नपुं. तृ.वि. ए.व.।

1733. ध्यायतः (2-62) – ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आय्-आदेशः, ध्यायत्। पुं. ष.वि. ए.व.।

1734. ध्यायन्तः (12-6) – ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आय्-आदेशः, ध्यायत्। पुं. प्र.वि. ब.व.।

1735. ध्रुवम् (2-27, 12-3) – ध्रु-धातोः (ध्रु गतिस्थैर्ययोः, तुदादिः, सि.कौ. - धा.सं. 1400) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **गाङ्कुटादिभ्योऽञ्णित्** (पा.सू. 1-2-1) इति ङिद्वद्भावः, तेन गुणस्य निषेधः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः उकारस्य उवङ्-आदेशः। नपुं. प्र.वि. ए.व.।

1736. ध्रुवः (2-27) – ध्रु-धातोः (ध्रु गतिस्थैर्ययोः, तुदादिः, सि.कौ. - धा.सं.1400) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **गाङ्कुटादिभ्योऽञ्णित्** (पा.सू. 1-2-1) इति ङिद्वद्भावः, तेन गुणस्य निषेधः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः उकारस्य उवङ्-आदेशः। पुं. प्र.वि. ए.व.।

1737. ध्रुवा (18-78) – ध्रु-धातोः (ध्रु गतिस्थैर्ययोः, तुदादिः, सि.कौ. - धा.सं.1400) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **गाङ्कुटादिभ्योऽञ्णित्** (पा.सू. 1-2-1) इति ङिद्वद्भावः, तेन गुणस्य निषेधः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः उकारस्य उवङ्-आदेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1738. न (1-30,31,32,32,35,37,38,39, 2-3,6,6,8,9,11,12,12,12,12,12,12,13,15,16,16,17,19,19,19,20,20,20,20,23,23,23,23,25,26,27,29,30,31,31,33,38,40,40,42,44,57,57,66,66,66,70,72, 3-4,4,5,8,16,17,18,18,18,22,22,23,24,26,28,29,32,34, 4-5,9,14,14,14,20,21,22,31,35,38,40,40,40,41, 5-3,3,4,6,7,8,10,13,13,14,14,14,15,15,20,20,22, 6-1,1,2,4,4,5,11,11,16,16,16,16,19,21,22,25,30,30,33,38,39,40,40,40, 7-2,7,12,13,15,25,25,26, 8-5,15,16,20,21,27, 9-4,5,5,9,24,29,29,31, 10-2,7,14,14,18,19,39,40, 11-8,16,16,24,25,25,31,32,37,43,47,48,48,48,48,53,53,53,53, 12-7,8,9,15,15,17,17,17,17, 13-12,12,23,28,31,31,32,32, 14,2,2,19,22,22,23,23, 15-3,3,3,3,4,6,6,6,6,10,11, 16-3,7,7,7,7,7,23,23,23, 17-28, 18-3,5,7,8,10,11,11,12,16,17,17,17,17,35,40,47,48,54,54,58,59,60,67,67,67,67,69,69) – अव्ययम्।

1739. नकुलः (1-16) – नामधेयम् इदं 'न कुल' इति पदयोः समूहरूपम्। न कुल इति स्थिते **नलोपो नञः** (पा.सू. 6-3-73) इति प्राप्ते **नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या** (पा.सू. 6-3-75) इत्यनेन नञः प्रकृतिभावः निपात्यते। कुल इत्यत्र कुल्-धातोः (कुल संस्त्याने बन्धुषु च, भ्वादिः, सि.कौ. - धा.सं. 842) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

1740. नक्षत्राणाम् (10-21) – न क्षरते अथवा न क्षीयते अर्थे **नलोपो नञः** (पा.सू. 6-3-73) इति प्राप्ते **नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या** (पा.सू. 6-3-75) इत्यनेन नञः प्रकृतिभावः क्षियः क्षरतेर्वा क्षत्रम् इति निपात्यते। अथवा नक्ष्-धातोः (णक्ष गतौ, भ्वादिः, सि.कौ. - धा.सं. 662) **अमिनक्षियजिवधिपतिभ्योऽत्रन्** (उणा. 3-105) इति अत्रन्-प्रत्ययः। नपुं. ष.वि. ब.व.।

1741. नदीनाम् (11-28) – नद्-धातुः (णद अव्यक्ते शब्दे, भ्वादिः, सि.कौ. - धा.सं. 54), **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, पचादिषु नदट् इति टित्त्वनिपातनात् **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। स्त्री. ष.वि. ब.व.।

1742. नभः (1-19) – नह्-धातोः (णह बन्धने, दिवादिः, सि.कौ. - धा.सं. 1166) **नहेर्दिवि भश्च** (उणा. 4-210) इति असुन्-प्रत्ययः भश्चान्तादेशः। नपुं. द्वि.वि. ए.व.।

1743. नभःस्पृशम् (11-24) – नभः स्पृशति, नभस् इत्युपपदे स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **स्पृशोऽनुदके क्विन्** (पा.सू. 3-2-58) इति क्विन्-प्रत्ययः, क्विनः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति नकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति

समासः। नभस् इत्यत्र नह्-धातोः (णह बन्धने, दिवादिः, सि.कौ. - धा.सं. 1166) **नहेर्दिवि भश्च** (उणा. 4-210) इति असुन्-प्रत्ययः भश्चान्तादेशः। पुं. द्वि.वि. ए.व.।

1744. नमस्कुरु (9-34, 18-65) – नमस् इति शब्दस्य कृ-धातुना योगे **साक्षात्प्रभृतीनि च** (पा.सू. 1-4-74) इति गतिसंज्ञा भवति इत्यतः **ते प्राग्धातोः** (पा.सू. 1-4-80) इति नमस्-शब्दस्य धातोः प्राक् प्रयोगः। कुरु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) लोट्, लोटः सिप्, कृ सिप्, **तनादिकृञ्भ्य उः** (पा.सू. 3-2-79) इति उ-प्रत्ययः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अत उत् सार्वधातुके** (पा.सू. 6-4-110) इति उकारादेशः, **उतश्च प्रत्ययात् असंयोगपूर्वात्** (पा.सू. 6-4-106) इति हेः लुक्। नमस् इत्यत्र नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। लोट्. म.पु. ए.व.।

1745. नमस्यन्तः (9-24) – नमस्-शब्दात् **नमोवरिवश्चित्रङः क्यच्** (पा.सू. 3-1-19) इति क्यच्-प्रत्ययः, **सनाद्यन्ताः धातवः** (पा.सू. 3-1-32) इति धातुसंज्ञा, लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, नमस्यत् जस्। नमस् इत्यत्र नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ब.व.।

1746. नमस्यन्ति (11-36) – नमस्-शब्दात् **नमोवरिवश्चित्रङः क्यच्** (पा.सू. 3-1-19) इति क्यच्-प्रत्ययः, **सनाद्यन्ताः धातवः** (पा.सू. 3-1-32) इति धातुसंज्ञा, तस्मात् लट्, लटः झि। नमस्य झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। नमस् इत्यत्र नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। लट्. प्र.पु. ब.व.।

1747. नमः (11-31,35,39,39,39,39,40,40) – नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। अव्ययम्।

1748. नमेरन् (11-37) – नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) विधिलिङ्, प्रथमपुरुषबहुवचने नमेयुः इति स्यात्, आर्षत्वात् आत्मनेपदम् अत्र ग्राह्यम्। नम् झ, **कर्तरि शप्** (पा.सू. 3-1-68 इति शप्, **झस्य रन्** (पा.सू. 3-4-105) इति रन्, **लिङः सीयुट्** (पा.सू. 3-4-102) इति सीयुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। विधिलिङ्. प्र.पु. ब.व.।

1749. नयेत् (6-26) – नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) विध्यादौ लिङ्, लिङः तिप्। नी तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः। विधिलिङ्. प्र.पु. ए.व.।

1750. नरकस्य (16-21) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **कृञादिभ्यः संज्ञायां वुन्** (उणा. 5-35) इति वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

1751. नरकाय (1-42) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **कृञादिभ्यः संज्ञायां वुन्** (उणा. 5-35) इति वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः। पुं. च.वि. ए.व.।

1752. नरके (1-44, 16-16) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **कृञादिभ्यः संज्ञायां वुन्** (उणा. 5-35) इति वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः। पुं. स.वि. ए.व.।

1753. नरपुङ्गवः (1-5) – नराणां पुङ्गवः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुङ्गव इत्यत्र पुमांश्चासौ गौश्च **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, **गोरतद्धितलुकि** (पा.सू. 5-4-92) इति समासान्तः टच्-प्रत्ययः। पुमान् इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं.

1056) **पातेर्डुम्सुन्** (उणा. 4-177) इति डुम्सुन्-प्रत्ययः, पुंस् सु, **पुंसोऽसुङ्** (पा.सू. 7-1-89) इति असुङ्, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्। गो इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) इति डो-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेः लोपः। पुं. प्र.वि. ए.व.।

1754. नरलोकवीराः (11-28) – नराणां लोकः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नरलोकस्य वीराः **षष्ठी** (पा.सू. 2-2-8) इति समासः। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लोक इत्यत्र लोक्-धातोः (लोकृ दर्शने, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

1755. नरः (2-22, 5-23, 12-19) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1756. नराणाम् (10-27) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नर आम्। पुं. ष.वि. ब.व.।

1757. नराधमान् (16-19) – नराणाम् अधमान्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अधम इत्यत्र अव्-धातोः (अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अवद्यावमाधमार्वरेफाः** (उणा. 5-54) इति अम-प्रत्ययः, वस्य धः आदेशः च। पुं. द्वि.वि. ब.व.।

1758. नराधमाः (7-15) – नरेषु अधमाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अधम इत्यत्र अव्-धातोः (अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु, भ्वादिः, सि.कौ. - धा.सं. 600) **अवद्यावमाधमार्वरेफाः** (उणा. 5-54) इति अम-प्रत्ययः, वस्य धः आदेशः च। पुं. प्र.वि. ब.व.।

1759. नराधिपम् (10-27) – नराणाम् अधिपः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अधिप इत्यत्र अधि-पूर्वकात् पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ए.व.।

1760. नरैः (17-17) – नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नर भिस्। पुं. तृ.वि. ब.व.।

1761. नवद्वारे (5-13) – नव द्वाराणि यस्मिन्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नवन् इत्यत्र नु-धातोः (णु स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1035) बाहुलकात् अन-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। द्वार इत्यत्र द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. स.वि. ए.व.।

1762. नवानि (2-22,22) – नु-धातोः (णु स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1035) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. द्वि.वि.ब.व.।

1763. नश्यति (6-38) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, लटः तिप्, नश् तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। लट्. प्र.पु. ए.व.।

1764. नश्यत्सु (8-20) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। पुं. स.वि. ब.व.।

1765. नष्टः (4-2, 18-73) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

1766. नष्टात्मानः (16-9) – नष्टः आत्मा येषाम् ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नष्ट इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति उणादिसूत्रेण अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

1767. नष्टान् (3-32) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. द्वि.वि. ब.व.।

1768. नष्टे (1-40) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. स.वि. ए.व.।

1769. नः (1-32,33,36, 2-6,6) – युष्मद्-शब्दस्य षष्ठीबहुवचनान्तस्य अस्माकम् इति शब्दस्य स्थाने **बहुवचनस्य वस्नसौ** (पा.सू. 8-1-21) इति नः इति आदेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. ब.व.।

1770. नागानाम् (10-29) – नगे भवाः, नग-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः। नग इत्यत्र न गच्छति इति विग्रहे गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। पुं. ष.वि. ब.व.।

1771. नानाभावान् (18-21) – नाना भावाः तान्, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। नाना इत्यत्र **विनञ्भ्यां नानाञौ न सह** (पा.सू. 5-2-27) इति सूत्रेण नञः नाञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

1772. नानावर्णाकृतीनि (11-5) – वर्णाश्च आकृतयश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। नाना वर्णाकृतयः येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नाना इत्यत्र **विनञ्भ्यां नानाञौ न सह** (पा.सू. 5-2-27) इति सूत्रेण नञः नाञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, क्र्यादिः, सि.कौ. -

धा.सं. 1486) **कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। आकृति इत्यत्र आङ्पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ब.व.।

1773. नानाविधानि (11-5) – नाना विधाः येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नाना इत्यत्र **विनञ्भ्यां नानाञौ न सह** (पा.सू. 5-2-27) इति सूत्रेण नञः नाञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ब.व.।

1774. नानाशस्त्रप्रहरणाः (1-9) – नानाविधानि शस्त्राणि, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा.1310) इति समासः उत्तरपदलोपश्च। नानाशस्त्राणि प्रहरणानि येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नाना इत्यत्र **विनञ्भ्यां नानाञौ न सह** (पा.सू. 5-2-27) इति सूत्रेण नञः नाञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। शस्त्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहःकरणे** (पा.सू. 3-2-182) इति सूत्रेण शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) ष्ट्रन्-प्रत्ययः। प्रहरण इत्यत्र प्र-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ब.व.।

1775. नान्यगामिना (8-8) – अन्यं गामी, **गम्यादीनामुपसङ्ख्यानम्** (वा. 1247) इति समासः। न अन्यगामी, **सह सुपा** (पा.सू. 2-1-4) इति समासः। गामी इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) **आवश्यकाधमर्ण्ययोर्णिनिः** (पा.सू. 3-3-170) इति णिनि-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। अन्य इत्यत्र अन्-धातोः **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

1776. नामयज्ञैः (16-17) – नामसम्पादकाः यज्ञाः, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च। नामन् इति **नामन्सीमन्व्योमन्रोमन्लोमन्पाप्मन्ध्यामन्** (उणा. 4-150) इति म्नाधातोः (म्ना अभ्यासे, भ्वादिः, सि.कौ. - धा.सं. 928) मनिन्-प्रत्ययः निपातनात् सिद्धः धातोः मलोपः च अत्र निपात्यते। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. तृ.वि. ब.व.।

1777. नायकाः (1-7) – नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। पुं. प्र.वि. ब.व.।

1778. नारदः (10-13,26) – नारं ददाति इति नार उपपदे दा-धातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नार इत्यत्र नरस्य धर्म्यम् इत्यर्थे **नराच्चेति वक्तव्यम्** (वा. 2967) इति नर-शब्दात् अञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1779. नारीणाम् (10-34) – नरस्य धर्म्या, **नराच्चोति वक्तव्यम्** (वा. 2967) इति अञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. ष.वि. ब.व.।

1780. नावम् (2-67) – नौ अम्, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः। नौ इत्यत्र नुद्-धातोः (णुद प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1426) **ग्लानुदिभ्यां डौः** (उणा. 2-65) इति डौ-प्रत्ययः, डित्त्वसामर्थ्यात् अभयस्यापि टेर्लोपः। स्त्री. द्वि.वि. ब.व.।

1781. नाशनम् (16-21) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

1782. नाशयामि (10-11) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, ततः लट्, लटः मिप्, नाशि मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। लट्. उ.पु. ए.व.।

1783. नाशाय (11-29,29) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नाश ङे, **ङेर्यः** (पा.सू. 3-2-102) इति यादेशः। पुं. च.वि. ए.व.।

1784. नाशितम् (5-16) – नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इथि वृद्धिः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

1785. नासाभ्यन्तरचारिणौ (5-27) – नासायाः अभ्यन्तरम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नासाभ्यन्तरे चरतः तच्छीलौ इति विग्रहे नासाभ्यन्तर इत्युपपदे चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। नासा इत्यत्र नास्-धातोः (णासृ शब्दे, भ्वादिः, सि.कौ. - धा.सं. 625) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आभ्यन्तर इत्यत्र अभ्यन्तरशब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः। अभ्यन्तर इत्यत्र अन्तरमभिगतम् इति विग्रहे **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा. 1336) इति अभि अन्तर इत्यनयोः समासः। अन्तर इत्यत्र अन्त-उपपदे रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आ-लोपः। अन्त इत्यत्र अत्-धातोः, (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा अन्त, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। पुं. द्वि.वि. द्वि.व.।

1786. नासिकाग्रम् (6-13) – नासिकायाः अग्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नासिका इत्यत्र नस्-धातोः (णस कौटिल्ये, भ्वादिः, सि.कौ. - धा.सं. 627) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण ण्वुल्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः** (पा.सू. 7-3-44) इति इत्त्वम्। अग्र इति **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति सूत्रेण निपात्यते। पुं. द्वि.वि. ए.व.।

1787. निगच्छति (9-31, 18-36) – नि-पूर्वकात् गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति छादेशः। लट्. प्र.पु. ए.व.।

1788. निगृहीतानि (2-68) – नि-पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इति इट्, **ग्रहोऽलिटि दीर्घः** (पा.सू. 7-2-37) इति इटः दीर्घः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-3-16) इति सम्प्रसारणम्, **सम्प्रसारणाच्च** (पा.सू. 3-1-108) इति पूर्वरूपम्। नपुं. प्र.वि. ब.व.।

1789. निगृह्णामि (9-19) – नि-पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) लट्, लटः मिप्, ग्रह् मिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-3-16) इति सम्प्रसारणम्, **सम्प्रसारणाच्च** (पा.सू. 3-1-108) इति पूर्वरूपम्। लट्. उ.पु. ए.व.।

1790. निग्रहम् (6-34) – निपू-र्वकात्-ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1791. निग्रहः (3-33) – नि-पूर्वकात्-ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1792. नित्यजातम् (2-26) – नित्यं जातः तम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। जात इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्त-प्रत्ययः, **जनसनखनां सञ्झलोः** (पा.सू. 6-4-42) इति नस्य आकारः। पुं. द्वि.वि. ए.व.।

1793. नित्यतृप्तः (4-20) – नित्यं तृप्तः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। तृप्त इत्यत्र तृप्-धातोः (तृप तृप्तौ, तुदादिः, सि.कौ. - धा.सं. 1307) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः, **रधादिभ्यश्च** (पा.सू. 7-2-54) इति वा इट्। पुं. प्र.वि. ए.व.।

1794. नित्ययुक्तः (7-17) – नित्यं युक्तः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ए.व.।

1795. नित्ययुक्तस्य (8-14) – नित्यं युक्तः तस्य, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. ष.वि. ए.व.।

1796. नित्ययुक्ताः (9-14, 12-2) – नित्यं युक्ताः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ब.व.।

1797. नित्यवैरिणा (3-39) – नित्यं वैरी तेन, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। वैरिन् इत्यत्र वैर-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, वैर इत्यत्र वीर-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ए.व.।

1798. नित्यशः (8-14) – नित्य-शब्दात् **सङ्ख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति शस्-प्रत्ययः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। अव्ययम्।

1799. नित्यसत्त्वस्थः (2-45) – नित्यं सत्त्वस्थः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। सत्त्वस्थ इत्यत्र सत्त्वे तिष्ठति इति विग्रहे **सुपि स्थः** (पा.सू. 3-2-4) इति सत्त्व-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सत्त्व इत्यत्र सत् इत्यस्मात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ए.व.।

1800. नित्यसंन्यासी (5-3) – नित्यं सन्यासी, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। संन्यासिन् इत्यत्र संन्यास-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, संन्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातो (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः, **इको यणचि** (पा.सू. 6-1-77) इति नेः इकारस्य यकारः। पुं. प्र.वि. ए.व.।

1801. नित्यस्य (2-18) – **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। पुं. ष.वि. ए.व.।

1802. नित्यम् (2-21,26,30, 3-15,31, 9-6, 10-9, 11-52, 13-9, 18-52) – **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1803. नित्यः (2-20,24) – **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1804. नित्याभियुक्तानाम् (9-22) – नित्यम् अभियुक्ताः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। नित्य इत्यत्र **त्यब् नेर्ध्रुवे** (वा. 4-2-104) इति वार्तिकेन नि-शब्दात् त्यप्-प्रत्ययः। अभियुक्त इत्यत्र अभि-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. ष.वि. ब.व.।

1805. निद्रालस्यप्रमादोत्थम् (18-39) – निद्रा च आलस्यं च प्रमादश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। निद्रालस्यप्रमाप्रमादेभ्यः उत्तिष्ठति इत्यर्थे निद्रालस्यप्रमाद इत्युपपदे उत्-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **उदः स्थास्तम्भोः पूर्वस्य** (पा.सू. 8-4-61) इति पूर्वसवर्णः। निद्रा इत्यत्र नि-पूर्वकात् द्रै-धातोः (द्रै स्वप्ने, भ्वादिः, सि.कौ. - धा.सं. 906) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आलस्य इत्यत्र अलसस्य भावः, **चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्** (वा. 3091) इति वार्तिकेन ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः। अलस इत्यत्र न लसः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति न-लोपः। लस इत्यत्र लस्-धातोः (लस श्लेषणक्रीडनयोः, भ्वादिः, सि.कौ. - धा.सं. 714) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, प्रमाद इत्यत्र प्र-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। नपुं. प्र.वि. ए.व.।

1806. निधनम् (3-35) – नि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **कृपृवृजिमन्दिनिधाञः क्युः** (वा. 2-82) इति क्यु-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. प्र.वि. ए.व.।

1807. निधानम् (9-18, 11-18,38) – निपू-र्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. प्र.वि. ए.व.।

1808. निन्दन्तः (2-36) – निद्-धातुः (णिदि कुत्सायाम्, भ्वादिः, सि.कौ. - धा.सं. 66) इदित्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, निन्द् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ब.व.।

1809. निबद्धः (18-60) – नि-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति तस्य जश्त्वम्। पुं. प्र.वि. ए.व.।

1810. निबध्नन्ति (4-41, 9-9, 14-5) – नि-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) लट्, लटः झि, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधालोपः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आलोपः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्. प्र.पु. ब.व.।

1811. निबध्नाति (14-7,8) – नि-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) लट्, लटः तिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः। लट्. प्र.पु. ए.व.।

1812. निबन्धाय (16-5) – नि-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, निबन्ध ङे, **ङेर्यः** (पा.सू. 7-1-13) इति यादेशेः। पुं. च.वि. ए.व.।

1813. निबध्यते (4-22, 5-12, 18-27) – नि-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) कर्मणि लट्, लटः त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

1814. निबोध (1-7, 18-13,50) – नि-पूर्वकात् बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) कर्तरि लोट्, लोटः सिप्, बुध् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लोपः। लोट्. प्र.पु. ए.व.।

1815. निमित्तमात्रम् (11-33) – निमित्तमेव, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। निमित्त इत्यत्र नि-पूर्वकात् मिद्-धातोः (मिदृ मेधाहिंसनयोः, भ्वादिः, सि.कौ. - धा.सं. 868) **ञीतः क्तः** (पा.सू. 3-2-187) इति क्त-प्रत्ययः,**संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् दस्य निष्ठातस्य च **रदाभ्यां निष्ठातो पूर्वस्य च दः** (पा.सू. 8-2-42) इति नत्वं न भवति, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। मात्र इत्यत्र **हुमायाश्रुभसिभ्यस्त्रन्** (वा. 4-167) इति मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) त्रन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1816. निमित्तानि (1-31) – निमित्त इत्यत्र नि-पूर्वकात् मिद्-धातोः (मिदृ मेधाहिंसनयोः, भ्वादिः, सि.कौ. - धा.सं. 868) **ञीतः क्तः** (पा.सू. 3-2-187 इति क्त-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् दस्य निष्ठातस्य च **रदाभ्यां निष्ठातो पूर्वस्य च दः** (पा.सू. 8-2-42) इति नत्वं न भवति, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. द्वि.वि. ब.व.।

1817. निमिषन् (5-9) – नि-पूर्वकात् मिष्-धातोः (मिषु सेचने, भ्वादिः, सि.कौ. - धा.सं. 699) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **तुदादिभयः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः। निमिषत् सु। पुं. प्र.वि. ए.व.।

1818. नियतमानसः (6-15) – नियतं मानसं येन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, नियत इत्यत्र निपूर्वक-यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं.984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति** (पा.सू.6-4-37) इति मकारलोपः। मानस इत्यत्र मनस्-शब्दात्

**प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनस् इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं.1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1819. नियतस्य (18-7) – नि-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. ष.वि. ए.व.।

1820. नियतम् (1-44) – निपूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. प्र.वि. ए.व.।

1821. नियतात्मभिः (8-2) – नियतः आत्मा यैः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। नियत इत्यत्र नि-पूर्वक-यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आत्मन् इत्यत्र **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति अत्-इत्यस्मात् (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **निष्ठा** (पा.सू. 3-2-102) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. तृ.वि. ब.व.।

1822. नियताहाराः (4-30) – नियतः आहारः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, नियत इत्यत्र निपूर्वकयम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आहार इत्यत्र आङ्पूर्वकात् हृधातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ब.व.।

1823. नियताः (7-20) – निपूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

1824. नियमम् (7-20) – नि-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **यमः समुपनिविषु च** (पा.सू. 3-3-63) इति अप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1825. नियम्य (3-7,41, 6-26, 18-51) – नि-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

1826. नियोक्ष्यति (18-59) – नि-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) लृट्, लृटः तिप्, **स्यतासीलृलुटोः** (पा.सू. 3-1-33) इति स्य, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षकारः। लृट्. प्र.पु. ए.व.।

1827. नियोजयसि (3-1) – नि-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, नियोजि इति णिजन्तात् लट्, लटः सिप्, **कर्तरि शप्**

(पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) गुणः इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। लट्. म.पु. ए.व.।

1828. नियोजितः (3-36) – निपूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1829. निरग्निः (6-1) – निर्गताः अग्नयः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च। पुं. प्र.वि. ए.व.।

1830. निरहङ्कारः (2-71, 12-13) – निर्गतः अहङ्कारः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः** (वा. 1360) इति समासः। अहङ्कार इत्यत्र अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। पुं. प्र.वि. ए.व.।

1831. निराशीः (3-30, 4-21, 6-10) – निर्गता आशीः यस्मात् सः, **प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः** (वा. 1360) इति समासः, **र्वोरुपधाया दीर्घ इक** (पा.सू. 8-2-76) इति उपधादीर्घः। आशिस् इत्यत्र आङ्पूर्वकात् शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **आशासः क्वौ उपधाया इत्वम् वाच्यम्** (वा. 4070) इति वार्तिकेन शासः आकारस्य इकारः। पुं. प्र.वि. ए.व.।

1832. निराश्रयः (4-20) – निर्गतः आश्रयः यस्य, **प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः** (वा. 1360) इति समासः। आश्रय इत्यत्र आङ्पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

1833. निराहारस्य (2-59) – निर्गतः आहारः यस्य **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः। आहार इत्यत्र आङ्पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. ष.वि. ए.व.।

1834. निरीक्षे (1-22) – निर्-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) लट्, लटः इट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. उ.पु. ए.व.।

1835. निरुद्धम् (6-20) – निपूर्वकात् रुध्-धातोः (रुधिर् आवरणे, रुधादिः, सि.कौ. - धा.सं. 1438) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जशत्वम्। नपुं. प्र.वि. ए.व.।

1836. निरुध्य (8-12) – निपूर्वकात् रुध्-धातोः (रुधिर् आवरणे, रुधादिः, सि.कौ. - धा.सं. 1438) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्-आदेशः। अव्ययम्।

1837. निर्गुणत्वात् (13-31) – निर्गताः गुणाः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। गुणत्व इत्यत्र गुण-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्वप्रत्ययः। गुण इत्यत्र गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो**

**णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् इति प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। नपुं. पं.वि. ए.व.।

1838. निर्गुणम् (13-14) – निर्गताः गुणाः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः। गुण इत्यत्र गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। नपुं. प्र.वि. ए.व.।

1839. निर्देशः (17-23) – निर्-पूर्वकात् दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

1840. निर्दोषम् (5-19) – निर्गतः दोषः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघुपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

1841. निर्द्वन्द्वः (2-45, 5-3) – निर्गतं द्वन्द्वं यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। इत्यत्र द्वौ द्वौ इति विग्रहे **द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु** (पा.सू. 8-1-15) इत्यनेन द्विशब्दस्य द्विर्वचनं पूर्वपदस्य अम्भावोऽत्वं चोत्तरपदस्य नपुंसकत्वं च निपात्यते। द्वि इति द्रृ-धातोः (द्रृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) इ-प्रत्ययान्तः **द्व्येकयोर्द्विवचनैकवचने** (पा.सू. 1-4-22) इत्यत्र निपातनात् सिद्धः। पुं. प्र.वि. ए.व.।

1842. निर्ममः (2-71, 3-30, 12-13, 18-53) – निर्गतं मम यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। मम इति आत्मसम्बन्धार्थे अस्मद्-शब्दस्य षष्ठीविभक्तिप्रतिरूपकम् अव्ययम् भवति, माङ् (माङ् माने, दिवादिः, सि.कौ. - धा.सं. 1088) धातोः बाहुलकात् डम-प्रत्यये इदं सिद्ध्यति, डित्त्वसामर्थ्यात् टेः लोप। पुं. प्र.वि. ए.व.।

1843. निर्मलत्वात् (14-6) – निर्मलस्य भावः निर्मलत्वं तस्मात्, निर्मल इति शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। निर्मल इत्यत्र निर्गतः मलः यस्मात् इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। मल इत्यत्र मल्-धातोः (मल धारणे, भ्वादिः, सि.कौ. - धा.सं. 493) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. पं.वि. ए.व.।

1844. निर्मलम् (14-16) – निर्गतः मलः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। मल इत्यत्र मल्-धातोः (मल धारणे, भ्वादिः, सि.कौ. - धा.सं. 493) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1845. निर्मानमोहाः (15-5) – मानश्च मोहश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। निर्गतौ मानमोहौ येभ्यः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मान इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

1846. निर्योगक्षेमः (2-45) – योगश्च क्षेमं च अनयोः समाहारः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, निर्गतं योगक्षेमं यस्मात् सः, **प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-2-52) इति कुत्वम्। क्षेम इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1847. निर्वाणपरमाम् (6-15) – निर्वाणं परमं यस्याः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। निर्वाण इत्यत्र निर्पूर्वकात् वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **निर्वाणोऽवाते** (पा.सू. 8-2-50) इति तकारस्य नकारः। परम इत्यत्र पर-उपपदे मा-धातोः (माङ् माने, दिवादिः, सि.कौ. - धा.सं. 1088) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। स्त्री. द्वि.वि. ए.व.।

1848. निर्विकारः (18-26) – निर्गतः विकारः यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। विकार इत्यत्र वि-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1849. निर्वेदम् (2-52) – निर्पूर्वकात् विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

1850. निर्वैरः (11-55) – निर्गतं वैरं यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः उत्तरपदलोपश्च। वैर इत्यत्र वीर-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

1851. निवर्तते (2-59, 8-25) – नि-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

1852. निवर्तन्ति (15-4) – नि-पूर्वकात् वृत्-धातोः (वृतु भाषायाम्, चुरादिः, सि.कौ. - धा.सं. 1782) चुरादेः लट्, लटः झि, **आस्वदः सकर्मकात्** (ग.सू. 201) इति सकर्मकेभ्यः णिचः विधानात् अकर्मकेभ्यः णिचः अभावे वृत्-धातोः झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। लट्. प्र.पु. ब.व.।

1853. निवर्तन्ते (8-21, 9-3, 15-6) – नि-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः झ, वृत् झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। पुं. प्र.पु. ब.व.।

1854. निवर्तितुम् (1-39) – निपूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

1855. निवसिष्यसि (12-8) – नि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) लृट्, लृटः सिप्, नि वस् लृट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। अयं धातुः अनिट्, आर्षः इडागमः अस्य धातोः। लृट्. म.पु. ए.व.।

1856. निवातस्थः (6-19) – निवाते तिष्ठति, निवात इति उपपदात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। निवात इत्यत्र निवृत्तः वातः यस्मात् इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च।

वात इत्यत्र **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (उणा. 3-86) इति वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) तन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1857. निवासः (9-18) – नि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005 **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1858. निवृत्तानि (14-22) – निपूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. द्वि.वि. ब.व.।

1859. निवृत्तिम् (16-7, 18-30) – नि-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

1860. निवेशय (12-8) – नि-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **हेतुमति च** (पा.सू. 3-1-26) इति सूत्रेण णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, निवेशि इति णिजन्तात् ततः लोट्, लोटः सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

1861. निशा (2-69, 69) – नि-पूर्वकात् शो-धातोः (शो तनूकरणे, दिवादिः, सि.कौ. - धा.सं. 1145) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1862. निश्चयम् (18-4) – निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. द्वि.वि. ए.व.।

1863. निश्चयेन (6-23) – निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. तृ.वि. ए.व.।

1864. निश्चरति (6-23) – निस्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। लट्. प्र.पु. ए.व.।

1865. निश्चला (2-53) – निस्-पूर्वकात् चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1866. निश्चितम् (2-7, 18-6) – निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। नपुं. द्वि.वि. ए.व.।

1867. निश्चिताः (16-11) – निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

1868. निश्चित्य (3-2) – निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-3-71) इति तुक्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। अव्ययम्।

1869. निष्ठा (3-3, 17-1, 18-50) (पा.सू. 3-2-102) – नि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति षत्वम्। स्त्री. प्र.वि. ए.व.।

1870. निस्त्रैगुण्यः (2-45) – निर्गतं त्रैगुण्यं यस्मात्, **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। त्रैगुण्य इत्यत्र त्रिगुण-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। त्रिगुण इत्यत्र त्रयाणां गुणानां समाहारः इति विग्रहे **तद्धितार्थोत्तरपदसमाहारे च** (पा.सू. 2-1-51) इति समासः, त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, गुण इत्यत्र गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् इति प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. प्र.वि. ए.व.।

1871. निहताः (11-33) – नि-पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

1872. निहत्य (1-36) – निपूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। अव्ययम्।

1873. निःश्रेयसकरौ (5-2) – निःश्रेयस-उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञो हेतुताच्छील्यानुलोम्येषु** (पा.सू. 3-2-20) इति ट-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। निःश्रेयस इत्यत्र निश्चितं श्रेयः इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति समासः, उत्तरपदलोपश्च, ततः निःश्रेयस् इति शब्दात् समासान्तः अच्-प्रत्ययः **अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः** (पा.सू. 5-4-77) इति सूत्रेण निपात्यते। श्रेयस् इत्यत्र प्रशस्य-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यनेन श्रेयस्-स्थाने श्र-आदेशः, प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. प्र.वि. द्वि.व.।

1874. निःस्पृहः (2-71, 6-18) – निर्गता स्पृहा यस्मात्, **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। स्पृहा इत्यत्र स्पृह्-धातोः (स्पृह ईप्सायाम्, चुरादिः, सि.कौ. - धा.सं. 1872) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते लुप्तस्य अकारस्य **अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन गुणो न, **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1875. नीतिः (10-38, 18-78) – नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. प्र.वि. ए.व.।

1876. नु (1-35, 2-36) – नु-धातोः (णु स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1035) **मितद्र्वादिभ्य उपसंख्यानम्** (वा. 2152) इत्यनेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

1877. नृलोके (11-48) – नृणां लोकः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नृ इत्यत्र **नयतेर्डिच्च** (उणा. 2-100) इति सूत्रेण नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) ऋन् इति प्रत्ययः सः च डित्, डित्त्वसामर्थ्यात् टेः लोपः, बाहुलकात् **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः न भवति। लोक इत्यत्र लोक्-धातोः **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। पुं. स.वि. ए.व.।

1878. नृषु (7-8) – **नयतेर्डिच्च** (उणा. 2-100) इति सूत्रेण नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) ऋन् इति प्रत्ययः सः च डित्, डित्त्वसामर्थ्यात् टेः लोपः, बाहुलकात् **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः न भवति। पुं. स.वि. ब.व.।

1879. नैष्कर्म्यसिद्धिम् (18-49) – नैष्कर्म्यस्य सिद्धिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। नैष्कर्म्य इत्यत्र निष्कर्मणः भावः इति विग्रहे **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-4-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। निष्कर्मन् इत्यत्र निर्गतं कर्म यस्मात् इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सिद्धिः इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. द्वि.वि. ए.व.।

1880. नैष्कर्म्यम् (3-4) – निष्कर्मणः भावः, **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-4-124) इति ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। निष्कर्मन् इत्यत्र निर्गतं कर्म यस्मात् इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

1881. नैष्कृतिकः (18-28) – निष्कृत्या चरति, निष्कृति-शब्दात् **चरति** (पा.सू. 4-4-8) इति सूत्रेण ठञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः। निष्कृति इत्यत्र निस्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **इदुदुपधस्य चाप्रत्ययस्य** (पा.सू. 8-3-41) इति षत्वम्। पुं. प्र.वि. ए.व.।

1882. नैष्ठिकीम् (5-12) – निष्ठायां भवा ताम्, निष्ठा-शब्दात् **तत्र भवः** (पा.सू. 4-3-54) इति ठक्-प्रत्ययः, **किति च** (पा.सू. 7-2-118) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। निष्ठा इत्यत्र नि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति सूत्रेण आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति षत्वम्। स्त्री. द्वि.वि. ए.व.।

1883. नो (17-28) – नह्-धातोः (णह बन्धने, दिवादिः, सि.कौ. - धा.सं. 1166) बाहुलकात् डो-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

1884. न्याय्यम् (18-15) – न्याय-शब्दात् **धर्मपथ्यार्थन्यायादनपेते** (पा.सू. 4-4-92) इति सूत्रेण यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, न्याय इत्यत्र **परिण्योर्नीणोर्द्यूताभ्रेषयोः** (पा.सू. 3-3-37) इति सूत्रेण नि-पूर्वकात् इण्-धातोः

(इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। नपुं. पं.वि. ए.व.।

1885. न्यासम् (18-2) – नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधाया** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

1886. पक्षिणाम् (10-30) – पक्षाः एषां सन्ति तेषाम् इति विग्रहे पक्ष-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, पक्ष इत्यत्र पक्ष्-धातोः (पक्ष परिग्रहे, चुरादिः, सि.कौ. - धा.सं. 1550) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. ष.वि. ब.व.।

1887. पचन्ति (3-13) – पच्-धातोः (डुपचष् पाके, भ्वादिः, सि.कौ. - धा.सं. 996) लट्, लटः झिः, पच् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्. प्र.पु. ब.व.।

1888. पचामि (15-14) – पच्-धातोः (डुपचष् पाके, भ्वादिः, सि.कौ. - धा.सं. 996) लट्, लटः मिप्, पच् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति अदन्तस्य अङ्गस्य दीर्घः। लट्. उ.पु. ए.व.।

1889. पञ्च (13-5, 18-13,15) – पचि-धातोः (पचि व्यक्तीकरणे, भ्वादिः, सि.कौ. - धा.सं. 174) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः ञकारः, ततः पञ्च् इत्यस्मात् बाहुलकात् कनिन्-प्रत्ययः, पञ्चन् जस्,शस्, **ष्णान्ताः षट्** (पा.सू. 1-1-124) इति षट्-संज्ञा, **षड्भ्यो लुक्** (पा.सू. 7-1-22) इति जस्-शसोः लुक्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। पुं. प्र.वि. नित्य-ब.व.।

1890. पञ्चमम् (18-14) – **तस्य पूरणे डट्** (पा.सू. 5-2-48) इति पञ्चन्-शब्दात् डट्-प्रत्ययः, **नान्तादसङ्ख्यादेर्मट्** (पा.सू. 5-2-45) इति डटः मट्-आगमः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। पञ्चन् इत्यत्र पचि-धातोः (पचि व्यक्तीकरणे, भ्वादिः, सि.कौ. - धा.सं. 174) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः ञकारः, ततः पञ्च् इत्यस्मात् बाहुलकात् कनिन्-प्रत्ययः, पञ्चन् जस्,शस्, **ष्णान्ताः षट्** (पा.सू. 1-1-124) इति षट्-संज्ञा, **षड्भ्यो लुक्** (पा.सू. 7-1-22) इति जस्-शसोः लुक्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. प्र.वि. ए.व.।

1891. पणवानकगोमुखाः (1-13) – पणवाश्च आनकाश्च गोमुखाश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। पणव इत्यत्र पणम् अर्थात् स्तुतिं वाति इति विग्रहे पण-उपपदे वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, पण इत्यत्र पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) बाहुलकात् भावे अच्-प्रत्ययः। आनक इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। गोमुख इत्यत्र गोः मुखमिव मुखं यस्य सः इति विग्रहे **सप्तम्युपमानपूर्वपदस्य उत्तरपदलोपश्च वक्तव्यः** (वा. 1362) इति समासः उत्तरपदलोपश्च, गो इत्यत्र गम्-धातोः (गम्ऌ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गमेर्डोः** (उणा. 2-67) इति डो-प्रत्ययः, डित्वात् अभस्यापि टेः लोपः। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्वसामर्थ्यात् टेः लोपः, । पुं. प्र.वि. ब.व.।

1892. पण्डितम् (4-19) – **तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति सूत्रेण पण्डा-शब्दात् इतच्-प्रत्ययः। पण्डा इत्यत्र पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) **ञमन्ताड्डः** (उणा. 1-111) इति ड-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं.द्वि.वि. ए.व.।

1893. पण्डिताः (2-11, 5-4,18) – **तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति पण्डा-शब्दात् इतच्-प्रत्ययः। पण्डा इत्यत्र पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) **ञमन्ताड्डः** (उणा. 1-111) इति ड-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

1894. पतङ्गाः (11-29) – **पतेरङ्गच् पक्षिणि** (उणा. 1-116) इति सूत्रेण पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) अङ्गच्-प्रत्ययः। पुं. प्र.वि. ब.व.।

1895. पतन्ति (1-42, 16-16) – पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) लट्, लटः झिः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. प्र.पु. ब.व.।

1896. पत्रम् (9-26) – **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) ष्ट्रन्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1897. पथि (6-38) – पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) **पतः स्थ च** (उणा. 4-12) इति इनि-प्रत्ययः थकारान्तादेशः च। पथिन् ङि, **भस्य टेर्लोपः** (पा.सू. 7-1-88) इति टेः लोपः। पुं. स.वि. ए.व.।

1898. पदम् (2-51, 8-11, 15-4,5, 18-56) – पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

1899. पद्मपत्रम् (5-10) – पद्मस्य पत्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पद्म इत्यत्र **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) मन्-प्रत्ययः। पत्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) ष्ट्रन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1900. परतरम् (7-7) – पर इति शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1901. परतः (3-42) – पर-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

1902. परधर्मः (3-35) – परश्च असौ धर्मश्च, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1903. परधर्मात् (3-35, 18-47) – परश्च असौ धर्मश्च, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इत्यनेन मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. पं.वि. ए.व.।

1904. परमम् (8-3,8,21, 10-1,12, 11-1,9,18, 15-6, 18-64,68) – पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं.

1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1905. परमः (6-32) – पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1906. परमात्मा (6-7, 13-22,31, 15-17) – परमः आत्मा, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति कर्मधारयः। परम इत्यत्र पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

1907. परमाम् (8-13,15,21, 18-49) – पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. द्वि.वि. ए.व.।

1908. परमेश्वर (11-3) – परमश्च असौ ईश्वरश्च, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः। परम इत्यत्र पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

1909. परमेश्वरम् (13-27) – परमश्च असौ ईश्वरश्च, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः। परम इत्यत्र पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1910. परमेष्वासः (1-17) – परमः इष्वासः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। परम इत्यत्र पर इति उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। इष्वास इत्यत्र इषवः अस्यन्ते अनेन इति विग्रहे इषु इति उपपदे अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, इषु इत्यत्र ईष्-धातोः (ईष

गतीहिंसादर्शनेषु, भ्वादिः, सि.कौ. - धा.सं. 611) **ईषेः किच्च** (उणा. 1-13) इति सूत्रेण उ-प्रत्ययः ईकारस्य च इकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। पुं. प्र.वि. ए.व.।

1911. परया (1-28, 12-2, 17-17) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

1912. परस्तात् (8-9) – पर-शब्दात् **दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यः दिग्देशकालेष्वस्तातिः** (पा.सू. 5-3-27) इति अस्താति-प्रत्ययः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

1913. परस्परम् (3-11, 10-9) – **कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये**, **समासवच्च बहुलम्** (वा. 4700) इति वार्तिकेन परः इत्यस्य नित्यद्विर्वचनम्, **कस्कादिषु च** (पा.सू. 8-3-48) सकारादेशः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1914. परस्य (17-19) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

1915. परम् (2-12,69, 3-11,19,42,43, 4-4, 7-1,24, 8-10,28, 9-11, 10-12,12, 11-18,38,38,47, 13-12,17,34, 14-1,19, 18-75) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1916. परन्तप (2-3,9, 4-2,5,33, 7-27, 9-33, 10-40, 11-54, 18-41) – परान् तापयति इति विग्रहे पर-उपपदे तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, ततः तापि इति णिजन्तात् **द्विषत्परयोस्तापेः** (पा.सू. 3-2-39) इति खच्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अरुर्द्विषदजन्तस्य मुम्** (पा.सू. 6-3-67) इति मुमागमः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः, **खचि ह्रस्वः** (पा.सू. 6-4-94) इति ह्रस्वः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति मुमः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. सम्बो.वि. ए.व.।

1917. परम्पराप्राप्तम् (4-2) – परम्परया प्राप्तम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। परम्परा इत्यत्र परं पिपर्ति इति विग्रहे पर इति उपपदे पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) बाहुलकात् अच्-प्रत्ययः कृतो बहुलम् इति सिद्धान्तितत्वात्, **सुपो धातुप्रातिकपदिकयोः** (पा.सू. 2-4-71) इति अमः लुक् प्राप्तः परन्तु **तत्पुरुषे कृति बहुलम्** (पा.सू. 6-3-14) इति लुक् न भवति। प्राप्त इत्यत्र प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **निष्ठा** (पा.सू. 2-2-36) इति क्त-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1918. परः (4-40, 8-20,22, 13-22) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

1919. परा (3-42, 18-50) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1920. पराणि (3-42) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ॠदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

1921. पराम् (4-39, 6-45, 7-5, 9-32, 13-28, 14-1, 16-22,23, 18-52,62,68) – पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

1922. परिकीर्तितः (18-7,27) – परि-पूर्वकात् कॄत-धातोः (कॄत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **ॠत इद्धातोः** (पा.सू. 7-1-100) इति इः, **उरण् रपरः** (पा.सू. 1-1-51) इति रपरः, **र्वोरुपधायाः दीर्घ इकः** (पा.सू. 8-2-76) इति उपधादीर्घः, तस्मात् **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेर्लोपः। पुं. प्र.वि. ए.व.।

1923. परिक्लिष्टम् (17-21) – परि-पूर्वकात् क्लिश्-धातोः (क्लिशू विबाधने, क्र्यादिः, सि.कौ. - धा.सं. 1522) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **क्लिशः क्त्वानिष्ठयोः** (पा.सू. 7-2-50) इति वेट्। नपुं. प्र.वि. ए.व.।

1924. परिग्रहम् (18-53) – परि-पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1925. परिचक्षते (17-13,17) – परि-पूर्वकात् चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) लट्, लटः झ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) शपः लुक्, **आत्मनेपदेष्वनतः** (पा.सू 7-1-5) इति अत्-आदेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. प्र.पु. ब.व.।

1926. परिचर्यात्मकम् (18-44) – परिचर्या आत्मा यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। परिचर्या इत्यत्र परि-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानम्** (वा. 2215) इत्यनेन श-प्रत्ययः यगागमः च निपात्यते, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

1927. परिचिन्तयन् (10-17) – परि-पूर्वकः चित्-धातोः (चिति स्मृत्याम्, भ्वादिः, सि.कौ. - धा.सं. 1535) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

1928. परिज्ञाता (18-18) – परि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

1929. परिणामे (18-37,38) – परि-पूर्वकात् नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपसर्गादसमासेऽपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। पुं. स.वि. ए.व.।

1930. परित्यज्य (18-66) – परि-पूर्वकात् त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

1931. परित्यागः (18-7) – परि-पूर्वकात् त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

1932. परित्राणाय (4-8) – परि-पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. च.वि. ए.व.।

1933. परिदह्यते (1-30) – परि-पूर्वकात् दह्-धातोः (दह भस्मीकरणे, भ्वादिः, सि.कौ. - धा.सं. 989) कर्मणि लट्, **भावकर्मणोः** (पा.सू. 1-4-13) इति आत्मनेपदम्, लटः त, परि दह् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

1934. परिदेवना (2-28) – परि-पूर्वकात् दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

1935. परिपन्थिनौ (3-34) – परि-पूर्वकात् पथ्-धातोः (पथि गतौ, चुरादिः, सि.कौ. - धा.सं. 1575) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. द्वि.व.।

1936. परिप्रश्नेन (4-34) – परि-पूर्वकात् प्रच्छ्-धातोः (प्रच्छ ज्ञीप्सायाम्, तुदादिः, सि.कौ. - धा.सं. 1413) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **च्छ्वोः शूडनुनासिके च** (पा.सू. 6-4-19) इति छकारस्य शकारः, छकारस्य अपगमात् तुग्रूपस्य चकारस्य अपि निवृत्तिः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वं प्राप्तम् परन्तु **शात्** (पा.सू. 8-4-44) इति निषेधेन न भवति। पुं. तृ.वि. ए.व.।

1937. परिमार्गितव्यम् (15-4) – परि-पूर्वकात् मार्ग्-धातोः (मार्ग अन्वेषणे, चुरादिः, सि.कौ. - धा.सं. 1847) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्/तव्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इटागमः। नपुं. प्र.वि. ए.व.।

1938. परिशुष्यति (1-29) – परि-पूर्वकात् शुष्-धातोः (शुष शोषणे, दिवादिः, सि.कौ. - धा.सं. 1183) लट्, लटः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। लट्. प्र.पु. ए.व.।

1939. परिसमाप्यते (4-33) – परि-सम्-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) कर्मणि लट्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम् इत्यतः लटः त-आदेशः, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

1940. पर्जन्यः (3-14) – पृष्-धातोः (पृषु सेचनहिंसासंक्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 705) अन्य–प्रत्ययः धातोः जकारान्तादेशः च **पर्जन्यः** (उणा. 3-103) इति उणादिसूत्रेण निपात्यते। पुं. प्र.वि. ए.व.।

1941. पर्जन्यात् (3-14) – पृष्-धातोः (पृषु सेचनहिंसासंक्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 705) अन्य–प्रत्ययः धातोः जकारान्तादेशः च **पर्जन्यः** (उणा. 3-103) इति उणादिसूत्रेण निपात्यते। पुं. पं.वि. ए.व.।

1942. पर्णानि (15-1) – पर्ण-धातोः (पर्ण हरितभावे, चुरादिः, सि.कौ. - धा.सं. 1939) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 3-4-51) इति णेर्लोपः। नपुं. प्र.वि. ब.व.।

1943. पर्यवतिष्ठते (2-65) – परि-अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लट्, **समवप्रविभ्यः स्थः** (पा.सू. 1-3-32) इति आत्मनेपदम्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति धातोः तिष्ठादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. प्र.पु. ए.व.।

1944. पर्याप्तम् (1-10) – परि-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **नपुंसके भावे क्तः** (पा.सू. 3-3-14) इति क्त-प्रत्ययः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. प्र.वि. ए.व.।

1945. पर्युपासते (4-25, 9-22, 12-1,3,20) – परि-उप-पूर्वकात् आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लट्, लटः झ, आस् झ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **आत्मनेपदेष्वनतः** (पा.सू 7-1-5) इति अत्-आदेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. प्र.पु. ब.व.।

1946. पर्युषितम् (17-10) – परि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं.1005) **नपुंसके भावे क्तः** (पा.सू. 3-3-14) इति क्त-प्रत्ययः, **वसतिक्षुधोरिट्** (पा.सू. 7-2-52) इति इट्, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। नपुं. प्र.वि. ए.व.।

1947. पवताम् (10-31) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. ष.वि. ब.व.।

1948. पवनः (10-31) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **बहुलमन्यत्रापि** (उणा. 2-79) इति सूत्रेण युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. प्र.वि. ए.व.।

1949. पवित्रम् (4-38, 9-2,17, 10-12) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवः संज्ञायाम्** (पा.सू. 3-2-185) इति इत्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. प्र.वि. ए.व.।

1950. पश्य (1-3,25, 9-5, 11-5,6,6,7,8) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लोट्, लोटः सिप्, दृश् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः स्थाने हि। **अतो हेः** (पा.सू. 6-4-105) इति हेर्लुक्। लोट्. म.पु. ए.व.।

1951. पश्यतः (2-69) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः। पुं. ष.वि. ए.व.।

1952. पश्यति (2-29, 5-5,5, 6-30,30,32, 13-27,27,29,29, 18-16,16, ) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, लटः तिप्, दृश् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः। लट्. प्र.पु. ए.व.।

1953. पश्यन् (5-8, 6-20, 16-28) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्,

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः। पुं. प्र.वि. ए.व.।

1954. पश्यन्ति (1-38, 13-24, 15-10,11,11) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, लटः झि, दृश् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः। लट्. प्र.पु. ब.व.।

1955. पश्यामि (1-31, 6-33, 11-15,16,16,17,19,) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, लटः मिप्, दृश् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

1956. पश्येत् (4-18) – दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपेनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः। विधिलिङ्. प्र.पु. ए.व.।

1957. पाञ्चजन्यम् (1-15) – पञ्चजने दैत्यभेदे भवः तम् इति विग्रहे पञ्चजन-शब्दात् **पञ्चजनादुपसंख्यानम्** (वा. 2868) इति वार्तिकेन यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। पञ्चजन इत्यत्र पञ्चभिः भूतैः जन्यते असौ इत्यर्थे पञ्चन्-उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति कर्मणि घञ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः प्राप्ता परन्तु **जनिवध्योश्च** (पा.सू. 7-3-35) इति न वृद्धिः, पञ्चन् इत्यत्र पचि-धातोः (पचि व्यक्तीकरणे, भ्वादिः, सि.कौ. - धा.सं. 174) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः ञकारः, ततः पञ्च् इत्यस्मात् बाहुलकात् कनिन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1958. पाण्डव (4-35, 6-2, 11-55, 14-22, 16-5) – पाण्डु-शब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। पुं. सम्बो.वि. ए.व.।

1959. पाण्डवः (1-14,20, 11-13) – पाण्डु-शब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। पुं. प्र.वि. ए.व.।

1960. पाण्डवानाम् (10-37) – पाण्डु-शब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य

अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। पुं. ष.वि. ब.व.।

1961. पाण्डवानीकम् (1-2) – पाण्डवानाम् अनीकम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पाण्डव इत्यत्र पाण्डु-शब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। अनीक इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अनिहृषिभ्यां किच्च** (उणा. 4-17) इति ईकन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

1962. पाण्डवाः (1-1) – पाण्डु-शब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। पुं. प्र.वि. ब.व.।

1963. पाण्डुपुत्राणाम् (1-3) – पाण्डोः पुत्राः तेषाम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पाण्डु इत्यत्र पड्-धातोः (पडि गतौ, भ्वादिः, सि.कौ. - धा.सं. 281) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, ततः **मृगय्वादयश्च** (उणा. 1-37) इति कु-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति धातोः अकारस्य दीर्घः। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. ष.वि. ब.व.।

1964. पातकम् (1-38) – पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः। पुं. द्वि.वि. ए.व.।

1965. पात्रे (17-20) – पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः। नपुं. स.वि. ए.व.।

1966. पापकृत्तमः (4-36) – अतिशयेन पापकृत् इति विग्रहे **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति पापकृत्-शब्दात् तमप्-प्रत्ययः। पापकृत् इत्यत्र पापं करोति इति विग्रहे पाप-उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। पाप इत्यत्र **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। पुं. प्र.वि. ए.व.।

1967. पापयोनयः (9-32) – पापं योनिः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। पाप इत्यत्र **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। योनि इत्यत्र **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 5-51) इति सूत्रेण यु-धातोः (यु मिश्रणेमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

1968. पापम् (1-36,45, 2-33,38, 3-36, 5-15, 7-28) – **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1969. पापात् (1-39) –**पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। नपुं. पं.वि. ए.व.।

1970. पापाः (3-13) – **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। पुं. प्र.वि. ब.व.।

1971. पापेन (5-10) – **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। नपुं. तृ.वि. ए.व.।

1972. पापेभ्यः (4-36) – **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। पुं. पं.वि. ब.व.।

1973. पापेषु (6-9) – **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। पुं. स.वि. ब.व.।

1974. पाप्मानम् (3-41) – पाप्मन् इत्यत्र **नामन्-सीमन्-व्योमन्-रोमन्-लोमन्-पाप्मन्-ध्यामन्** (उणा. 4-150) इति सूत्रेण पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) मनिन्-प्रत्ययः धातोः च पुगागमः निपात्यते। पुं. द्वि.वि. ए.व.।

1975. पारुष्यम् (16-4) – परुष-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। परुष इत्यत्र पृ-धातोः (पृ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **पॄनहिकलिभ्य उषच्** (उणा. 4-75) इति उषच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

1976. पार्थ (1-25, 2-3,21,32,39,42,55,72, 3-16,22,23, 4-11,33, 6-40, 7-1,10, 8-8,14,19,22,27, 9-23,32, 10-24, 11-5, 12-7, 16-4,6, 17-26,28, 18-6,30,31,32,33,34,35,72) – पृथायाः अपत्य! इति विग्रहे **शिवादिभ्योऽण्** (पा.सू. 4-1-112) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। पृथा इत्यत्र पृथ्-धातोः (पृथ प्रक्षेपे, चुरादिः, सि.कौ. - धा.सं. 1554) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यच** (पा.सू. 3-3-134) इति अच्-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति गुणाभावः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. सम्बो.वि. ए.व.। पार्थः

1977. पार्थः (1-26, 18-78) – पृथायाः अपत्यम् इति विग्रहे **शिवादिभ्योऽण्** (पा.सू. 4-1-112) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। पृथा इत्यत्र पृथ्-धातोः (पृथ प्रक्षेपे, चुरादिः, सि.कौ. - धा.सं. 1554) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यच** (पा.सू. 3-3-134) इति अच्-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति गुणाभावः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

1978. पार्थस्य (18-74) – पृथायाः अपत्यस्य इति विग्रहे **शिवादिभ्योऽण्** (पा.सू. 4-1-112) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। पृथा इत्यत्र पृथ्-धातोः

(पृथ प्रक्षेपे, चुरादिः, सि.कौ. - धा.सं. 1554) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-3-134) इति अच्-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति गुणाभावः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ए.व.।

1979. पार्थाय (11-9) – पृथायाः अपत्याय इति विग्रहे **शिवादिभ्योऽण्** (पा.सू. 4-1-112) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। पृथा इत्यत्र पृथ्-धातोः (पृथ प्रक्षेपे, चुरादिः, सि.कौ. - धा.सं. 1554) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-3-134) इति अच्-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति गुणाभावः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. च.वि. ए.व.।

1980. पावकः (2-23, 10-23, 15-6) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः। पुं. प्र.वि. ए.व.।

1981. पावनानि (18-5) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णिलोपः। नपुं. प्र.वि. ब.व.।

1982. पितरः (1-34,42) – पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पितृ जस्, **ऋदुशनस्पुरुदंशोऽनहसां च** (पा.सू. 7-1-94) इति गुणः। पुं. प्र.वि. ब.व.।

1983. पिता (9-17, 11-43,44, 14-4) – पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पितृ सु, **ऋदुशनस्पुरुदंशोऽनहसां च** (पा.सू. 7-1-94) इति गुणः, **अप्तृन्तृच्स्वसृनप्तृनेष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम** (पा.सू. 6-4-11) इति उपधादीर्घः। पुं. प्र.वि. ए.व.।

1984. पितामहः (1-12, 9-27) – पितामह इति शब्दः **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धः। अत्र **मातृपितृभ्यां पितरि डामहच्** (वा. 2709) इति पितृ-शब्दात् डामहच् इति प्रत्ययः निपात्यते। पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पुं. प्र.वि. ए.व.।

1985. पितामहान् (1-26) – पितामह इति शब्दः **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धः। अत्र **मातृपितृभ्यां पितरि डामहच्** (वा. 2709) इति पितृ-शब्दात् डामहच् इति प्रत्ययः निपात्यते। पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पुं. द्वि.वि. ब.व.।

1986. पितामहाः (1-34) – पितामह इति शब्दः **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धः। अत्र **मातृपितृभ्यां पितरि डामहच्** (वा. 2709) इति पितृ-शब्दात् डामहच् इति प्रत्ययः निपात्यते। पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पुं. प्र.वि. ब.व.।

1987. पितृव्रताः (9-25) – पितृषु व्रतं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः

आकारस्य इकारादेशस्य निपातनात् सिद्धः। व्रत इत्यत्र वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **पृषिरञ्जिभ्यां कित्** (उणा. 3-111) इति बाहुलकात् अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

1988. पितृणाम् (10-29) – पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पितृ आम्, **ह्रस्वनद्यापो नुट्** (पा.सू. 6-1-77) इति नुट्, **नामि** (पा.सू. 6-4-3) इति दीर्घः, **रषाभ्यां णो नः समानपादे** (पा.सू. 8-4-1) इति णत्वम्। पुं. ष.वि. ब.व.।

1989. पितॄन् (1-26, 9-25) – पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पितृ शस्, **ऋदुशनस्पुरुदंशोऽनहसां च** (पा.सू. 7-1-94) इति गुणः, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति नकारः। पुं. द्वि.वि. ए.व.।

1990. पीडया (17-19) – पीड-धातोः (पीड अवगाहने, चुरादिः, सि.कौ. - धा.सं. 1544) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्-प्रत्ययः **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

1991. पुण्यकर्मणाम् (7-28, 18-71) – पुण्यं कर्म येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। पुण्य इत्यत्र **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ब.व.।

1992. पुण्यकृताम् (6-41) – पुण्यं कुर्वन्ति इति विग्रहे पुण्य इति उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। पुण्य इत्यत्र **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। पुं. ष.वि. ब.व.।

1993. पुण्यफलम् (8-28) – पुण्यस्य फलम्, षष्ठी (पा.सू. 2-2-8) इति समासः। पुण्य इत्यत्र **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

1994. पुण्यम् (9-20, 18-76) – **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। नपुं. द्वि.वि. ए.व.।

1995. पुण्यः (7-9) – पुण्यम् अस्य अस्ति इति विग्रहे पुण्य-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति सूत्रेण अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। पुण्य इत्यत्र **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। पुं. प्र.वि. ए.व.।

1996. पुण्याः (9-33) – पुण्यम् एषाम् अस्ति इति विग्रहे पुण्य-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति सूत्रेण अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। पुण्य इत्यत्र **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। पुं. प्र.वि. ब.व.।

1997. पुण्ये (9-21) – **पूञो यण् णुक् ह्रस्वश्च** (उणा. 5-15) इति सूत्रेण पू-धातोः (पूञ् पवने, क्र्यादिः, सि.कौ. - धा.सं. 1482) यत्-प्रत्ययः धातोः णुक् इति आगमः धातोः ह्रस्वः च। नपुं. स.वि. ए.व.।

1998. पुत्रदारगृहादिषु (13-9) – पुत्राश्च दाराश्च गृहाणि च पुत्रदारगृहाणि, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। पुत्रदारगृहाणि आदौ येषां ते पुत्रदारगृहादयः तेषु, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। दार इत्यत्र दारयन्ति इत्यर्थे दॄ-धातोः (दॄ विदारणे, क्र्यादिः, सि.कौ. - धा.सं. 1493) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **दारजारौ कर्तरि णिलुक् च** (वा. 2182) इति घञ्-प्रत्ययः णिलुक् च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नित्यबहुवचनान्तः एषः शब्दः पुंसि। गृह इत्यत्र ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **गेहे कः** (पा.सू. 3-1-144) इति क-प्रत्ययः। **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्। **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्। आदि इत्यत्र आङ्पूर्वकात् दाधातोः **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. स.वि. ब.व.।

1999. पुत्रस्य (11-44) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. ष.वि. ए.व.।

2000. पुत्रान् (1-26) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ब.व.।

2001. पुत्राः (1-34, 11-36) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ब.व.।

2002. पुनः (4-9,35, 5-1, 8-15,16,16,26, 9-7,8,8,33, 11-16,39,49,50, 16-13, 17-21, 18-24,40,77,77) – पन्-धातोः (पन व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 440) बाहुलकात् अर्-प्रत्ययः धातोः अकारस्य च उकारादेशः। रेफस्य **खरवसनायोर्विसर्जनीयः** (पा.सू. 8-3-15) इति विसर्गः।

2003. पुमान् (2-71) – पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डुम्सुन्** (उणा 4-177) इति डुम्सुन्-प्रत्ययः (उम्स्), डित्त्वसामर्थ्यात् आलोपः। पुंस् सु, **पुंसोऽसुङ्** (पा.सू. 8-1-89) इति असुङ्, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्। पुं. प्र.वि. ए.व.।

2004. पुरस्तात् (11-40) – पूर्व इति शब्दात् **दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** (पा.सू. 5-3-27) इति अस्ताति-प्रत्ययः, **अस्ताति च** (पा.सू. 5-3-40) इति पूर्व-शब्दस्य पुर्-आदेशः। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

2005. पुरा (3-3,10, 17-23) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) बाहुलकात् का-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

2006. पुराणम् (8-9) – पुरा भवम्, पुरा इति शब्दात् **सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति सूत्रेण ट्युः ट्युल् वा प्रत्ययः तुट्-आगमः च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति सूत्रे पुराण इति निर्देशात् तुडागमः न भवति। पुरा इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) बाहुलकात् काप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

2007. पुराणः (2-20, 11-38) – पुरा भवः, पुरा इति शब्दात् **सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति सूत्रेण ट्युः ट्युल् वा प्रत्ययः तुट्-आगमः च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति सूत्रे पुराण इति निर्देशात् तुडागमः न भवति। पुरा इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) बाहुलकात् काप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2008. पुराणी (15-4) – पुरा भवा,पुरा इति शब्दात् **सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति सूत्रेण ट्युः ट्युल् वा प्रत्ययः तुट्-आगमः च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति सूत्रे पुराण इति निर्देशात् तुडागमः न भवति, स्त्रियां **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। पुरा इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) बाहुलकात् का-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. प्र.वि. ए.व.।

2009. पुरातनः (4-3) – पुरा भवः, पुरा इति शब्दात् **सायञ्चिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति सूत्रेण ट्युः ट्युल् वा प्रत्ययः तुट्-आगमः च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुरा इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) बाहुलकात् काप्रत्ययः, प्रत्ययस्य कित्वात् **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2010. पुरुजित् (1-5) – कस्यचित् राज्ञः नामधेयम्। पुरु इति उपपदे जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 3-1-71) इति तुक्। पुरु इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **पॄभिदिव्यधिगृधिधृषिभ्यः** (उणा. 1-23) इति कु-प्रत्ययः, **उदोष्ठ्यपूर्वस्य** (पा.सू. 7-1-102) इति ऋवर्णस्य उदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरः। पुं. प्र.वि. ए.व.।

2011. पुरुषर्षभ (2-15) – पुरुषः ऋषभ इव, **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** (पा.सू. 2-1-56) इति समासः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ऋषभ इत्यत्र ऋष्-धातोः

(ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं. 1287) **ऋषिवृषिभ्यां कित्** (उणा. 3-123) इति अभच्-प्रत्ययः अयं च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. सम्बो.वि. ए.व.।

2012. पुरुषव्याघ्र (18-4) – पुरुषः व्याघ्रः इव, **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** (पा.सू. 2-1-56) इति समासः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। व्याघ्र इत्यत्र वि-आङ्पूर्वकात् घ्रा-धातोः (घ्रा गन्धोपादाने घ्राणे च, भ्वादिः, सि.कौ. - धा.सं. 926) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. सम्बो.वि. ए.व.।

2013. पुरुषस्य (2-60) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ए.व.।

2014. पुरुषम् (2-15, 8-8,10, 10-12, 13-19,23, 15-4) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

2015. पुरुषः (2-21, 3-4, 8-4,22, 11-18,38, 13-20,21,22, 15-17, 17-3) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2016. पुरुषाः (9-3) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2017. पुरुषोत्तम (8-1, 10-15, 11-3) – पुरुषाणाम् उत्तमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। उत्तम इत्यत्र उद् इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति इति तमप्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) उदः दकारस्य तकारः। पुं. सम्बो.वि. ए.व.।

2018. पुरुषोत्तमम् (15-19) – पुरुषाणाम् उत्तमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। उत्तम इत्यत्र उद् इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति इति तमप्। **खरि च** (पा.सू. 8-4-55) उदः दकारस्य तकारः। पुं. द्वि.वि. ए.व.।

2019. पुरुषोत्तमः (15-18) – पुरुषाणाम् उत्तमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। उत्तम इत्यत्र उद् इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति इति तमप्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) उदः दकारस्य तकारः। पुं. प्र.वि. ए.व.।

2020. पुरुषौ (15-16) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. द्वि.व.।

2021. पुरे (5-13) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। नपुं. स.वि. ए.व.।

2022. पुरोधसाम् (10-24) – पुरोऽग्रे धीयते इति विग्रहे **पुरसि च** (उणा. 4-230) इति सूत्रेण पुरस्-उपपदे धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) असि-प्रत्ययः स च डित्, डित्त्वसामर्थ्यात् टेः लोपः, पुरस् ध् अस् इति स्थिते पुरसः सकारस्य **ससजुषो रुः** (पा.सू. 8-2-66) इति रुत्वम्, **हशि च** (पा.सू. 6-1-114) इति रोः उत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. ष.वि. ब.व.।

2023. पुष्कलाभिः (11-21) – पुष्-धातोः (पुष पुष्टौ, भ्वादिः, सि.कौ. - धा.सं. 700) **कलश्च** (उणा. 4-5) इति कल-प्रत्ययः स च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

2024. पुष्णामि (15-23) – पुष्-धातोः (पुष पुष्टौ, क्र्यादिः, सि.कौ. - धा.सं. 1529) लट्, लटः मिप्, पुष् मिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) ब् इति श्ना, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। लट्. उ.पु. ए.व.।

2025. पुष्पम् (9-26) – पुष्प्-धातोः (पुष्प विकसने, दिवादिः, सि.कौ. - धा.सं. 1122) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2026. पुष्पिताम् (2-42) – पुष्प्-धातोः (पुष्प विकसने, दिवादिः, सि.कौ. - धा.सं. 1122) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। स्त्री. द्वि.वि. ए.व.।

2027. पुंसः (2-62) – पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डुम्सुन्** (उणा. 4-177) इति डुम्सुन्-प्रत्ययः डित्त्वसामार्थ्यात् टेः लोपः। पुं. ष.वि. ए.व.।

2028. पूजार्हौ (2-4) – पूजाम् अर्हतः, पूजा इति उपपदात् अर्ह्-धातोः (अर्ह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 740) **अर्हः** (पा.सू. 3-2-12) इति अच्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पूजा इत्यत्र पूज्-धातोः (पूज पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1643) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **चिन्तिपूजिकथिकुम्बिचर्चश्च** (पा.सू. 3-3-105) इति अङ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। पुं. प्र.वि. द्वि.व.।

2029. पूज्यः (11-43) – पूज्-धातोः (पूज पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1643) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। पुं. प्र.वि. ए.व.।

2030. पूतपापाः (9-20) – पूतं पापं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। पूत इत्यत्र पूधातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः निषेधः। पाप इत्यत्र **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। पुं. प्र.वि. ब.व.।

2031. पूताः (4-10) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः निषेधः। पुं. प्र.वि. ब.व.।

2032. पूति (17-10) – पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **तितुत्रतथसिसुरकसेषु च** (पा.सू. 8-2-9) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

2033. पूरुषः (3-19,36) – पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अन्येषामपि दृश्यते** (पा.सू. 6-3-137) इति उकारस्य दीर्घः। पुं. प्र.वि. ए.व.।

2034. पूर्वतरम् (4-15) – पूर्व-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2035. पूर्वम् (11-33) – पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2036. पूर्वाभ्यासेन (6-44) – पूर्वः अभ्यासः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अभ्यास इत्यत्र अभि-पूर्वकात् अस्-धातोः (अस गतिदीप्त्यादानेषु, भ्वादिः, सि.कौ. - धा.सं. 886) घञ्-प्रत्ययः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. तृ.वि. ए.व.।

2037. पूर्वे (10-6) – पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ब.व.।

2038. पूर्वैः (4-15,15) – पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. तृ.वि. ब.व.।

2039. पृच्छामि (2-7) – प्रच्छ्-धातोः (प्रच्छ ज्ञीप्सायाम्, तुदादिः, सि.कौ. - धा.सं. 1413) लटि उत्तमपुरुषैकवचने रूपम्, लटः मिप्, प्रच्छ् मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

2040. पृथक् (1-18,18, 5-4, 13-4, 18-1,14) – प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। अव्ययम्।

2041. पृथक्त्वेन (9-15, 18-21,29) – पृथक्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। पृथक् इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्, पृथक् इति अव्ययम्। नपुं. तृ.वि. ए.व.।

2042. पृथग्विधम् (18-14) – पृथक् विधा यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति विधा इत्यस्य आकारस्य ह्रस्वः। पृथक् इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्, पृथक् इति अव्ययम्। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. प्र.वि. ए.व.।

2043. पृथग्विधान् (18-21) – पृथक् विधाः येषां तान्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति विधा इत्यस्य आकारस्य ह्रस्वः। पृथक् इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्, पृथक् इति अव्ययम्। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे**

(पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. द्वि.वि. ब.व.।

2044. पृथग्विधाः (10-5) – पृथक् विधाः येषां, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति विधा इत्यस्य आकारस्य ह्रस्वः। पृथक् इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्, पृथक् इति अव्ययम्। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2045. पृथिवीपते (1-18) – पृथिव्याः पते, **षष्ठी** (पा.सू. 2-2-8) इति समासः। पृथिवी इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः षिवन् सम्प्रसारणं च** (उणा. 1-148) इति षिवन्-प्रत्ययः सम्प्रसारणं च, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डति** (उणा. 4-57) इति डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. सम्बो.वि. ए.व.।

2046. पृथिवीम् (1-19) – प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः षिवन् सम्प्रसारणं च** (उणा. 1-148) इति षिवन्-प्रत्ययः सम्प्रसारणं च, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। स्त्री. द्वि.वि. ए.व.।

2047. पृथिव्याम् (7-9, 18-40) – प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः षिवन् सम्प्रसारणं च** (उणा. 1-148) इति षिवन् सम्प्रसारणं च, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। स्त्री. स.वि. ए.व.।

2048. पृष्ठतः (11-40) – पृष्ठ-शब्दात् **आद्यादिभ्य उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। पृष्ठ इत्यत्र पृष्-धातोः (पृषु सेचनहिंसासङ्क्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 705) **तिथपृष्ठगूथयूथप्रोथाः** (उणा. 2-12) इति सूत्रेण थक्-प्रत्ययः निपात्यते, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वेन थकारस्य ठकारः। अव्ययम्।

2049. पौण्ड्रम् (1-15) – इयं शङ्खस्य संज्ञा। पुण्ड्-धातोः (मुडि खण्डने, भ्वादिः, सि.कौ. - धा.सं. 326, कौमुद्याम् अस्य धातोः पाठभेदेन पुडि इति पठितः) बाहुलकात् रक्-प्रत्ययः। ततः पुण्ड्र इति शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति स्वार्थे अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। पुं. द्वि.वि. ए.व.।

2050. पौत्रान् (1-26) – पुत्र-शब्दात् **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** (पा.सू. 4-1-104) इति अञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ब.व.।

2051. पौत्राः (1-34) – पुत्र-शब्दात् **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** (पा.सू. 4-1-104) इति अञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः,

पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ब.व.।

2052. पौरुषम् (7-8, 18-25) – पुरुषस्य भावः कर्म वा, पुरुष इति शब्दात् **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** (पा.सू. 5-1-129) इति अञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। पुरुष इत्यत्र पुर्-धातोः (पुर अग्रगमने, तुदादिः, सि.कौ. - धा.सं. 1346) **पुरः कुषन्** (उणा. 4-74) इति सूत्रेण कुषन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

2053. पौर्वदेहिकम् (6-43) – पूर्वदेह-शब्दात् पूर्वस्मिन् देहे भवम् इत्यर्थे ठञ् ठक् वा, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, यद्यपि अस्मात् शब्दात् ठञ् वा ठक् वा दुर्लभः तथापि पृषोदरादिगणे (पा.सू. 6-3-109) शब्दम् एनम् अन्तर्भाव्य कथञ्चित् उक्ता प्रक्रिया निर्वाह्या। पूर्वदेह इत्यत्र पूर्वं देहस्य इति विग्रहे **पूर्वपराधरोत्तरमेकदेशिनैकाधिकरणे** (पा.सू. 2-2-1) इति समासः। पूर्व इत्यत्र पूर्व्-धातोः (पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

2054. प्रकाशकम् (14-6) – प्र-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

2055. प्रकाशयति (5-16) – प्र-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** इति अयादेशः। लट्. प्र.पु. ए.व.।

2056. प्रकाशम् (14-22) – प्र-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2057. प्रकाशः (7-25, 14-11) – प्र-पूर्वकात् काश्-धातोः (काशृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 647) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2058. प्रकीर्त्या (11-36) – प्र-पूर्वकात् कृत्-धातोः (कृत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्-प्रत्ययः प्राप्तः परन्तु **ऊतियूतिजूतिसातिहेतिकीर्तयश्च** (पा.सू. 3-3-97) इति निपातनात् कीर्ति इति क्तिन्-प्रत्ययान्तं सिद्धम्। स्त्री. तृ.वि. ए.व.।

2059. प्रकृतिजान् (13-21) – प्रकृतेः जाताः तान्, प्रकृति इति उपपदे जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः, **उपपदमतिङ्** (पा.सू. 3-2-29) इति समासः। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ब.व.।

2060. प्रकृतिजैः (3-5, 18-40) – प्रकृतेः जाताः तैः, प्रकृति इति उपपदात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति डप्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः। **उपपदमतिङ्** (पा.सू. 3-2-29) इति समासः। प्रकृति इत्यत्र प्रपूर्वकात् कृधातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.। पुं. तृ.वि. ब.व.।

2061. प्रकृतिसम्भवान् (13-19) – प्रकृतेः सम्भवाः तान्, **पञ्चमी** इति योगविभागेन समासः। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। सम्भव इत्यत्र **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण सम्पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ब.व.।

2062. प्रकृतिस्थः (13-21) – प्रकृतौ तिष्ठति, **सुपि स्थः** (पा.सू. 3-2-4) इति प्रकृति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 1472) क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2063. प्रकृतिस्थानि (15-7) – प्रकृतौ तिष्ठन्ति, **सुपि स्थः** (पा.सू. 3-2-4) इति प्रकृति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 1472) क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ब.व.।

2064. प्रकृतिम् (3-33, 4-6, 7-5, 9-7,8,12,13, 11-51, 13-19,23) – प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. द्वि.वि. ए.व.।

2065. प्रकृतिः (7-4, 9-10, 13-20, 18-59) – प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. प्र.वि. ए.व.।

2066. प्रकृतेः (3-27,29,33, 9-8) – प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. ष.वि. ए.व.।

2067. प्रकृत्या (7-20, 13-29) – प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. तृ.वि. ए.व.।

2068. प्रजनः (10-28) – प्र-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धौ प्राप्तायां **जनिवध्योश्च** (पा.सू. 7-3-35) इति तस्य निषेधः। पुं. प्र.वि. ए.व.।

2069. प्रजहाति (2-55) – प्र-पूर्वकात् हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) लट्, लटः तिप्, हा तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति शपः श्लु, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वः, **कुहोश्चुः** (पा.सू. 7-4-62) इति चुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्। लट्. प्र.पु. ए.व.।

2070. प्रजहि (3-41) – प्र-पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लोट्, लोटः सिप्, हन् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68), **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **हन्तेर्जः** (पा.सू. 6-4-36) इति जादेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

2071. प्रजानाति (18-31) – प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, लटः तिप्। ज्ञा तिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः। लट्. प्र.पु. ए.व.।

2072. प्रजानामि (11-31) – प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, लटः मिप्, ज्ञा मिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः। लट्. उ.पु. ए.व.।

2073. प्रजापतिः (3-10, 11-39) – प्रजानां पतिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। प्रजा इत्यत्र प्र-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **उपसर्गे च संज्ञायाम्** (पा.सू. 3-2-99) इति सूत्रेण ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेर्लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डतिः** (उणा.सू. 4-57) डतिः, डित्त्वसामर्थ्यात् टेर्लोपः। पुं. प्र.वि. ए.व.।

2074. प्रज्ञाः (3-10,14, 10-6) – प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ब.व.।

2075. प्रज्ञा (2-57,58,61,68) – प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2076. प्रज्ञावादान् (2-11) – प्रज्ञाप्रेरिताः वादाः, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति उत्तरपदलोपः, समासश्च। प्रज्ञा इत्यत्र प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। वाद इत्यत्र वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ब.व.।

2077. प्रज्ञाम् (2-67) – प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

2078. प्रणम्य (11-14,35,44) – प्र-पूर्वकात् नम्-धातोः (णम प्रह्वत्वे शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 981) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **वा ल्यपि** (पा.सू. 6-4-38) इति अनुनासिकस्य विकल्पेन लोपः, लोपाभावे प्रणम्य इति, **उपसर्गादसमासेऽपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। अव्ययम्।

2079. प्रणयेन (11-41) – प्र-पूर्वकात् नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **उपसर्गादसमासे णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। पुं. तृ.वि. ए.व.।

2080. प्रणवः (7-8) – प्र-पूर्वकात् नु-धातोः (णु स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1035) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **उपसर्गादसमासेऽपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। पुं. प्र.वि. ए.व.।

2081. प्रणश्यति (2-63, 6-30, 9-31) – प्र-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, लटः तिप्। **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **उपसर्गादसमासेपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। लट्. प्र.पु. ए.व.।

2082. प्रणश्यन्ति (1-40) – प्र-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, लटः झि, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **उपसर्गादसमासेपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। लट्. प्र.पु. ब.व.।

2083. प्रणश्यामि (6-30) – प्र-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) लट्, लटः मिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः, **उपसर्गादसमासेपि णोपदेशस्य** (पा.सू. 8-4-14) इति णत्वम्। लट्. उ.पु. ए.व.।

2084. प्रणिधाय (11-44) – प्र-निपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च** (पा.सू. 8-4-17) इति णत्वम्। अव्ययम्।

2085. प्रणिपातेन (4-34) – प्र-निपूर्वकात् पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 845) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च** (पा.सू. 8-4-17) इति णत्वम्। पुं. तृ.वि. ए.व.।

2086. प्रतपन्ति (11-30) – प्र-पूर्वकात् तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) लट्, लटः झि, प्र तप् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। लट्. प्र.पु. ब.व.।

2087. प्रतापवान् (1-12) – प्रताप-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्चमतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। प्रताप इत्यत्र प्र-पूर्वकात् तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2088. प्रति (2-43) – प्रा-धातोः अथवा प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

2089. प्रतिजानीहि (9-31) – **सम्प्रतिभ्यामनाध्याने** (पा.सू. 1-3-46) इति अनाध्याने आत्मनेपदसंज्ञकाः स्युः परन्तु अत्र परस्मैपदसंज्ञकः आदेशः दृश्यते, इदं परस्मैपदम् आर्षम्। प्रति-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लोट्, लोटः सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **ई हल्यघोः** (पा.सू. 6-4-113) इति ईत्वम्। लोट्. म.पु. ए.व.।

2090. प्रतिजाने (18-65) – प्रति-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, लटः इट्,। **सम्प्रतिभ्यामनाध्याने** (पा.सू. 1-3-46) इति आत्मनेपदम्, प्रति ज्ञा इट्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्नाप्रत्ययः, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आलोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. उ.पु. ए.व.।

2091. प्रतिपद्यते (14-14) – प्रति-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) लट्, लटः त, पद् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2092. प्रतियोत्स्यामि (2-4) – प्रति-पूर्वकात् युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) लृट्, लृटः मिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति अदन्तस्य दीर्घः। लृट्. उ.पु. ए.व.।

2093. प्रतिष्ठा (14-27) – प्रति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति मूर्धन्यादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2094. प्रतिष्ठाप्य (6-11) – प्रति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्-आगमः, **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति मूर्धन्यादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

2095. प्रतिष्ठितम् (3-15) – प्रति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति इत्वम्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति मूर्धन्यादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

2096. प्रतिष्ठिता (2-57,58,61,68) – प्रति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति इत्वम्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति मूर्धन्यादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2097. प्रत्यक्षावगमम् (9-2) – प्रत्यक्षः अवगमः यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रत्यक्ष इत्यत्र प्रतिगतमक्षम् इति विग्रहे **अत्यादयः क्रान्ताद्यर्थे द्वितीयया** (वा. 1336) इति वार्तिकेन समासः। प्रत्यक्ष इत्यत्र अक्षिणी प्रति इति विग्रहे **लक्षणेनाभिप्रती आभिमुख्ये** (पा.सू. 2-1-14) इति समासः, **अव्ययीभावे शरत्प्रभृतिभ्यः** (पा.सू. 5-4-107) इति सूत्रेण समासान्तः टच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, अक्षि इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेर्नित्** (उणा. 3-156) इति क्सि-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **षढोः कः सि** (पा.सू. 8-2-41) इति षकारस्य ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। अवगम इत्यत्र अव-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2098. प्रत्यनीकेषु (11-32) – अनीकम् अनीकम् प्रति, **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति वीप्सायाम् अव्ययीभावसमासः, **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** (पा.सू. 3-4-83) इति सुपः अमादेशः प्राप्तः परन्तु **तृतीयासप्तम्योर्बहुलम्** (पा.सू. 2-4-84) इति बहुलग्रहणात् न भवति। अनीक इत्यत्र अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **अनिहृषिभ्यां किच्च** (उणा. 4-17) इति ईकन्-प्रत्ययः। पुं. स.वि. ब.व.।

2099. प्रत्यवायः (2-40) – प्रति-अव-पूर्वकात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, अथवा प्रति-अव-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1074) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

2100. प्रत्युपकारार्थम् (17-21) – प्रत्युपाकाराय इदम्, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति प्रत्युपकार अर्थ इत्यनयोः समासः। प्रत्युपकार इत्यत्र प्रतिरूपः उपकारः इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। उपकार इत्यत्र उप-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति

घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2101. प्रथितः – (15-18) प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। पुं. प्र.वि. ए.व.।

2102. प्रदध्मतुः (1-14) – प्र-पूर्वकात् ध्मा-धातोः (ध्मा शब्दाग्निसंयोगयोः, भ्वादिः, सि.कौ. - धा.सं. 927) लिट्, लिटः तस्, ध्मा तस्, **परस्मैपदानां णलतुसुस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति तसः अतुस्-आदेशः, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति अभ्यासस्य आदेः हलः शेषः, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः। लिट्. प्र.पु. द्वि.व.।

2103. प्रदिष्टम् (8-28) – प्र-पूर्वकात् दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

2104. प्रदीप्तम् (11-29) – प्र-पूर्वकात् दीप्-धातोः (दीपी दीप्तौ, दिवादिः, सि.कौ. - धा.सं. 1150) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। नपुं. द्वि.वि. ए.व.।

2105. प्रदुष्यन्ति (1-41) – प्र-पूर्वकात् दुष्-धातोः (दुष वैकृत्यो, दिवादिः, सि.कौ. - धा.सं. 1185) लट्, लटः झि, दुष् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्। लट्. प्र.पु. ब.व.।

2106. प्रद्विषन्तः (16-28) – प्र-पूर्वकात् द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। पुं. प्र.वि. ब.व.।

2107. प्रनष्टः (18-72) – प्रपूर्वकात नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1194) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

2108. प्रपद्यते (7-19) – प्र-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) लट्, लटः त, प्र पद् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2109. प्रपद्ये (15-4) – प्र-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) लट्, लटः इट्, प्र पद् इ, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. उ.पु. ए.व.।

2110. प्रपद्यन्ते (4-11, 7-14,15,20) – प्र-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) लट् लटः झ, प्र पद् झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.वि. ब.व.।

2111. प्रपन्नम् (2-7) – प्र-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) **गत्यर्थाकर्मकश्लिषशीङ्स्थसवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति तकारस्य धातोः दकारस्य च नत्वम्। पुं. द्वि.वि. ए.व.।

2112. प्रपश्य (11-49) – प्र-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लोट्, लोटः सिप्, प्र दृश् सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां**

**पिबजिघ्रमनतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

2113. प्रपश्यद्भिः (1-39) – प्रपूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रमनतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः। पुं. तृ.वि. ब.व.।

2114. प्रपश्यामि (2-8) – प्र-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट् लटः मिप्, प्र दृश् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रमनतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति पश्यादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

2115. प्रपितामहः (11-39) – प्रकर्षेण पितामहः, **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः। पितामह इति शब्दः **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धः। अत्र **मातृपितृभ्यां पितरि डामहच्** (वा. 2709) इति पितृ-शब्दात् डामहच् इति प्रत्ययः निपात्यते। पितृ-शब्दः पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति तृच्-प्रत्यये धातोः आकारस्य इकारादेशस्य निपातनात् सिद्धः। पुं. प्र.वि. ए.व.।

2116. प्रभवति (8-19) – प्र-पूर्वकात् भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लट्, लटः तिप्, प्र भू तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ए.व.।

2117. प्रभवन्ति (8-18, 16-9) – प्र-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लट्, लटः झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ब.व.।

2118. प्रभवम् (10-2) – प्र-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ए.व.।

2119. प्रभवः (7-6, 9-18, 10-8) – प्रपूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2120. प्रभविष्णु (13-16) – प्र-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **भुवश्च** (पा.सू. 3-2-138) इति इष्णुच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. प्र.वि. ए.व.।

2121. प्रभा (7-8) – प्र-पूर्वकात् भा-धातोः (भा दीप्तौ, अदादिः, सि.कौ. - धा.सं. 1051) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि** (पा.सू. 6-4-64) च इति आलोपः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2122. प्रभाषेत (2-54) – प्र-पूर्वकात् भाष्-धातोः (भाष व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 612) लिङ्, लिङः त, प्र भाष् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **लिङः सीयुट्** (पा.सू. 3-4-102) इति सीयुट् आगमः, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विधिलिङ्. प्र.पु. ए.व.।

2123. प्रभुः (5-14, 9-18,24) – प्र-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **विप्रसम्भ्यो ड्वसंज्ञायाम्** (पा.सू. 3-2-180) इति डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

2124. प्रभो (11-4, 14-21) – प्र-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **विप्रसम्भ्यो ड्वसंज्ञायाम्** (पा.सू. 3-2-180) इति डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. सम्बो.वि. ए.व.।

2125. प्रमाणम् (3-21, 16-24) – प्र-पूर्वकात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। नपुं. द्वि.वि. ए.व.।

2126. प्रमाथि (6-34) – प्र-पूर्वकात् मथ्-धातोः (मथे विलोडने, भ्वादिः, सि.कौ. - धा.सं. 848) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, प्रमाथिन् सु, **स्वमोर्नपुंसकात्** (पा.सू. 7-1-23) इति सुलोपः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. प्र.वि. ए.व.।

2127. प्रमाथीनि (2-60) – प्र-पूर्वकात् मथ्-धातोः (मथे विलोडने, भ्वादिः, सि.कौ. - धा.सं. 848) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, प्रमाथिन् जस्, शस्, **जश्शसोः शिः** इति शि-आदेशः, **इन्हन्पूषार्यम्णां शौ** (पा.सू. 6-4-12) इति उपधायाः दीर्घः। नपुं. द्वि.वि. ब.व.।

2128. प्रमादमोहौ (14-17) – प्रमादश्च मोहश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। प्रमाद इत्यत्र प्र-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। पुं. प्र.वि. द्वि.व.।

2129. प्रमादः (14-13) – प्र-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ए.व.।

2130. प्रमादात् (11-41) – प्र-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. पं.वि. ए.व.।

2131. प्रमादालस्यनिद्राभिः (14-8) – प्रमादश्च आलस्यं च निद्रा च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। प्रमाद इत्यत्र प्रपूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। आलस्य इत्यत्र अलसस्य भावः इति अर्थे अलस-शब्दात् **चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्** (वा. 3091) इति वार्तिकेन ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, अलस इत्यत्र न लसः अलसः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, लस इत्यत्र लस्-धातोः (लस श्लेषणक्रीडनयोः, भ्वादिः, सि.कौ. - धा.सं. 714) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति सूत्रेण अच्-प्रत्ययः। निद्रा इत्यत्र नि-पूर्वकात् द्रै-धातोः (द्रै स्वप्ने, भ्वादिः, सि.कौ. - धा.सं. 906) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ब.व.।

2132. प्रमादे (14-9) – प्र-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. स.वि. ए.व.।

2133. प्रमुखे (2-6) – प्रकृष्टम् मुखम् यस्य, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः च, डित्त्वसामर्थात् टेः लोपः। नपुं. स.वि. ए.व.।

2134. प्रमुच्यते (5-3, 10-3) – प्र-पूर्वकात् मुच्-धातोः (मुच्लृ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) कर्मणि लट्, लटः त, प्र मुच् त, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम्, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2135. प्रयच्छति (9-26) – प्र-पूर्वकात् दाण्-धातोः (दाण् दाने, भ्वादिः, सि.कौ. - धा.सं. 930) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति यच्छादेशः। लट्. प्र.पु. ए.व.।

2136. प्रयतात्मनः (9-26) – प्रयतः आत्मा यस्य तस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रयत इत्यत्र प्र-पूर्वकात् यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. ष.वि. ए.व.।

2137. प्रयत्नात् (6-45) – प्र-पूर्वकात् यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः। पुं. पं.वि. ए.व.।

2138. प्रयाणकाले (7-30, 8-2,10) – प्रयाणस्य कालः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। प्रयाण इत्यत्र प्र-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। काल इत्यत्र कल्-धातोः (कल शब्दसङ्ख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. स.वि. ए.व.।

2139. प्रयाताः (8-23,24) – प्र-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। पुं. प्र.वि. ब.व.।

2140. प्रयाति (8-5,13) – प्र-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्. प्र.पु. ए.व.।

2141. प्रयुक्तः (3-36) – प्र-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2142. प्रयुज्यते (17-26) – प्र-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) कर्मणि लट्, लटः त, प्र युज् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2143. प्रलपन् (5-9) – प्र-पूर्वकात् लप्-धातोः (लप व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 402) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

2144. प्रलयम् (14-14,15) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. द्वि.वि. ए.व.।

2145. प्रलयः (7-6, 9-18) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

2146. प्रलयान्ताम् (16-11) – प्रलयः अन्ते यस्याः ताम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रलय इत्यत्र प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः,

**सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

2147. प्रलये (14-2) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. स.वि. ए.व.।

2148. प्रलीनः (14-15) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **ओदितश्च** (पा.सू. 8-2-45) इति तस्य नकारः। पुं. प्र.वि. ए.व.।

2149. प्रलीयते (8-19) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) लट्, लटः त, प्र ली त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2150. प्रलीयन्ते (8-18) – प्र-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) लट्, लटः झ, प्र ली झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2151. प्रवक्ष्यामि (6-16, 9-1, 13-12, 14-1) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) लृट्, लृटः मिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

2152. प्रवक्ष्ये (8-11) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) लृट्, लृटः इट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। वस्तुतः अयं परस्मैपदी धातुः अतः अत्र आत्मनेपदं आर्षम्। लट्. उ.पु. ए.व.।

2153. प्रवदताम् (10-32) – प्र-पूर्वकात् वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. ष.वि. ब.व.।

2154. प्रवदन्ति (2-42, 5-4) – प्र-पूर्वकात् वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लट्, लटः झि, वद् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. प्र.पु. ब.व.।

2155. प्रवर्तते (5-14, 10-8) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त, वृत् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. प्र.पु. ए.व.।

2156. प्रवर्तन्ते (16-10, 17-24) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः झ, वृत् झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. प्र.पु. ब.व.।

2157. प्रवर्तितम् (3-16) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। नपुं. द्वि.वि. ए.व.।

2158. प्रविभक्तम् (11-13) – प्र-वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अथवा भञ्ज्-

धातोः (भञ्जो आमर्दने, रुधादिः, सि.कौ. - धा.सं. 1453) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. द्वि.वि. ए.व.।

2159. प्रविभक्तानि (18-41) – प्र-वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अथवा भञ्ज्-धातोः (भञ्जो आमर्दने, रुधादिः, सि.कौ. - धा.सं. 1453) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. प्र.वि. ब.व.।

2160. प्रविलीयते (4-23) – प्र-वि-पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1239) लट्, लटः त, प्र वि ली त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2161. प्रविशन्ति (2-70,70) – प्र-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1239) लट्, लटः झिः, प्र विश् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति शप्रत्ययः, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति प्रत्ययस्य ङिद्वद्भावात् **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। लट्. प्र.पु. ब.व.।

2162. प्रवृत्तः (11-32) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2163. प्रवृत्तिम् (11-31, 14-22, 16-7, 18-30) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. द्वि.वि. ए.व.।

2164. प्रवृत्तिः (14-12, 15-5, 18-46) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. प्र.वि. ए.व.।

2165. प्रवृत्ते (1-20) – प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. स.वि. ए.व.।

2166. प्रवृद्धः (11-32) – प्रपूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-

34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्। पुं. प्र.वि. ए.व.।

2167. प्रवृद्धे (14-14) – प्रपूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्। नपुं. स.वि. ए.व.।

2168. प्रवेष्टुम् (11-54) – प्र-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-34) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

2169. प्रव्यथितम् (11-20,45) – प्र-पूर्वकात् व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। नपुं. प्र.वि. ए.व.।

2170. प्रव्यथितान्तरात्मा (11-24) – प्रव्यथितः अन्तरात्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रव्यथित इत्यत्र प्र-पूर्वकात् व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। अन्तरात्मा इत्यत्र अन्तःस्थितः आत्मा इति विग्रहे **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च। अन्तर् इत्यत्र अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **अमेस्तुट् च** (उणा.सू.5.60) इत्यनेन अरन्-प्रत्ययः तुडागमश्च, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2171. प्रव्यथिताः (11-23) – प्र-पूर्वकात् व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। पुं. प्र.वि. ब.व.।

2172. प्रशस्ते (17-26) – प्र-पूर्वकात् शंस्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **उदितो वा** (पा.सू. 7-2-56) इति क्त्वा-प्रत्यये विकल्पेन इट् प्राप्नोति अतः **यस्य विभाषा** (पा.सू. 7-2-15) इति इटः निषेधः। नपुं. स.वि. ए.व.।

2173. प्रशान्तमनसम् (6-27) – प्रशान्तं मनः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रशान्त इत्यत्र प्र-पूर्वकात् शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति दीर्घः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। मनस् इत्यत्र मन्-धातोः **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2174. प्रशान्तस्य (6-7) – प्र-पूर्वकात् शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति दीर्घः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। पुं. ष.वि. ए.व.।

2175. प्रशान्तात्मा (6-14) –प्रशान्तः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रशान्त इत्यत्र प्रपूर्वकात् शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति दीर्घः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2176. प्रसक्ताः (16-16) – प्र-पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, प्रसक्त-शब्दात् **अर्शआदिभ्यो अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः।

2177. प्रसङ्गेन (18-34) – प्र-पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः ङकारः। पुं. प्र.वि. ब.व.।

2178. प्रसन्नचेतसः (2-65) – प्रसन्नं चेतः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, प्रसन्न इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति तकास्य नकारः धातोः दकारस्य चापि नकारः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपाधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ए.व.।

2179. प्रसन्नात्मा (18-54) – प्रसन्नः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रसन्नः इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति तकास्य नकारः धातोः दकारस्य चापि नकारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2180. प्रसन्नेन (11-47) – प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 3-2-102) इति तकास्य नकारः धातोः दकारस्य चापि नकारः। पुं. तृ.वि. ए.व.।

2181. प्रसभम् (2-60, 11-41) – प्रगता सभा यस्मात्, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति सभा इत्यस्य आकारस्य ह्रस्वः। सभा इत्यत्र सह भान्ति अस्याम् इति विग्रहे सह इति उपपदे भा-धातोः (भा दीप्तौ, अदादिः, सि.कौ. - धा.सं. 1051) **अन्येष्वपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः, **समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु** (पा.सू. 6-3-84) इति योगविभागात् **सभा राजामनुष्यपूर्वा** (पा.सू. 2-4-33) इति निर्देशात् वा सहस्य स्थाने स इति आदेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

2182. प्रसविष्यध्वम् (3-10) – प्रसविष्यध्वे इति भवेत्। सू-धातोः (षूङ् प्राणिगर्भविमोचने, अदादिः, सि.कौ. - धा.सं. 1031) लृट्, लृटः ध्वम्, **स्यतासीलृलुटोः** (पा.सू. 3-1-33) इति स्य, **स्वरतिसूतिसूयतेधूञूदितो वा** (पा.सू. 7-2-44) इति वा इट्, सू इध्वम्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः,

**आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। यद्यपि अत्र शाङ्करभाष्यादौ प्रसवं कुरुध्वम् इति लोट एव अर्थः अभिप्रेतः, तथा चेत् प्रसूध्वम् इति प्रयोगेण भाव्यम्, तथापि प्रकृते लृट्-लोटोः मिश्रितस्वरूपम् इदं रूपम् आर्षम् मन्तव्यम् अर्थस्तु लोट एव ग्राह्यः। लोट्. म.पु. ब.व.।

2183. प्रसादये (11-44) – प्र-पूर्वकात् सद्-धातोः (षद्लृ गत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, ततः लट्, लटः इट्, प्रसादि इ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. उ.पु. ए.व.।

2184. प्रसादम् (2-64) – प्र-पूर्वकात् सद्-धातोः (षद्लृ गत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

2185. प्रसादे (2-65) – प्र-पूर्वकात् सद्-धातोः (षद्लृ गत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. स.वि. ए.व.।

2186. प्रसिद्ध्येत् (3-8) – प्र-पूर्वकात् सिध्-धातोः (षिधु संराद्धौ, दिवादिः, सि.कौ. - धा.सं. 1192) लिङ्, लिङः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः **इतश्च** (पा.सू. 3-4-100) इति इलोपः। विधिलिङ्. प्र.पु. ए.व.।

2187. प्रसीद (11-25,31,45) – प्र-पूर्वकात् सद्-धातोः (षद्लृ गत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) लोट्, लोटः सिप्। सद् सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति हि-आदेशः। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौसीयसीदाः** (पा.सू. 7-3-78) इति सीदादेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

2188. प्रसृता (15-4) – प्र-पूर्वकात् सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2189. प्रसृताः (15-2) – प्र-पूर्वकात् सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

2190. प्रहसन् (2-10) – प्र-पूर्वकात् हस्-धातोः (हसे हसने, भ्वादिः, सि.कौ. - धा.सं. 721) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

2191. प्रहास्यसि (2-39) – प्र-पूर्वकात् हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) लृट्, लृटः सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। लृट्. म.पु. ए.व.।

2192. प्रहृष्यति (11-36) – प्र-पूर्वकात् हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) लट्, लटः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङित्वात् **पुगन्तलघूपधस्य च** (पा.सू. 7-4-86) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। लृट्. प्र.पु. ए.व.।

2193. प्रहृष्येत् (5-20) – प्र-पूर्वकात् हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) लिङ्, लिङः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङित्वात् **पुगन्तलघूपधस्य च**

(पा.सू. 7-4-86) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **इतश्च** (पा.सू. 3-4-100) इति इलोपः। विधिलिङ्. प्र.पु. ए.व.।

2194. प्रह्लादः (10-30) – प्र-पूर्वकात् ह्लाद्-धातोः (ह्लादी अव्यक्ते शब्दे सुखे च, भ्वादिः, सि.कौ. - धा.सं. 27) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** इति (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2195. प्राकृतः (18-28) – प्रकृतौ भवः इति विग्रहे **तत्र भवः** (पा.सू. 4-3-53) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-कारलोपः। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2196. प्राक् (5-23) – प्र-पूर्वकात् अञ्च्-धातोः (अञ्चु गतिपूजनयोः, भ्वादिः, सि.कौ. - धा.सं. 188) **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** (पा.सू. 3-2-59) इति क्विन्-प्रत्ययः, क्विनः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति नकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः, **दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः** (पा.सू. 5-3-27) इति अस्ताति-प्रत्ययः, **अञ्चेर्लुक्** (पा.सू. 5-3-30) इति इति प्रत्ययस्य लुक्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। अव्ययम्।

2197. प्राञ्जलयः (11-21) – प्रकृष्टः अञ्जलिः येषां ते, **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। अञ्जलि इत्यत्र **ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः** (उणा. 4-2) इति अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) अलि-प्रत्ययः। पुं. प्र.वि. ब.व.।

2198. प्राणकर्माणि (4-27) – प्राणानां कर्माणि, **षष्ठी** (पा.सू. 2-2-8) इति समासः। प्राण इत्यत्र प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

2199. प्राणम् (4-29, 8-10,12) – प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. द्वि.वि. ए.व.।

2200. प्राणान् (1-33, 4-30) – प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. द्वि.वि. ब.व.।

2201. प्राणापानगती (4-29) – प्राणश्च अपानश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, प्राणापानयोः गती **षष्ठी** (पा.सू. 2-2-8) इति समासः। प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। अपान इत्यत्र अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, णिचि अपानि इत्यस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा अपानिति अनेन इत्यर्थे अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, । गति इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिक लोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। स्त्री. द्वि.वि. द्वि.व.।

2202. प्राणापानसमायुक्तः (15-14) – प्राणश्च अपानश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः, प्राणापानाभ्यां समायुक्तः **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। अपान इत्यत्र अपपूर्वकात् अन्-धातोः णिचि अपानि, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा अपानिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। समायुक्त इत्यत्र सम्-आ-पूर्वकात् युज्-धातोः (युजिर् योगे, अदादिः, सि.कौ. - धा.सं. 1070) **निष्ठा** (पा.सू. 2-3-36) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2203. प्राणापानौ (5-27) – प्राणश्च अपानश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। अपान इत्यत्र अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, णिचि अपानि इत्यस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा अपानिति अनेन इत्यर्थे अप-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. द्वि.वि. द्वि.व.।

2204. प्राणायामपरायणाः (4-29) – प्राणायामः परायणं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्राणस्य आयामः प्राणायामः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। आयाम इत्यत्र आङ्पूर्वकात् यम्-धातोः **अकर्तरि च कारके**

**संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। परायण इत्यत्र परम् अयनम् इति विग्रहे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, तनादिः, सि.कौ. - धा.सं. 1463) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अयन इत्यत्र अय्-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, अथवा परायण इत्यत्र परा-उपसर्गात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति कर्मणि ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ब.व.।

2205. प्राणिनाम् (15-24) – प्राण इत्यस्मात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. ष.वि. ब.व.।

2206. प्राणे (4-29) – प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. स.वि. ए.व.।

2207. प्राणेषु (4-30) – प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. स.वि. ब.व.।

2208. प्राधान्यतः (10-19) – प्राधान्येन इत्यर्थे प्राधान्य इति शब्दात् **आद्यादिभ्य उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। प्राधान्य इत्यत्र प्रधान-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-4-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। प्रधान इत्यत्र प्र-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, अथवा धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **बहुलमन्यत्रापि** (उणा. 2-79) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। अव्ययम्।

2209. प्राप्तः (18-50) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। पुं. प्र.वि. ए.व.।

2210. प्राप्नुयात् (18-71) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लिङ्, लिङः तिप्, प्र आप् ति, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुप्रत्ययः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः। विधिलिङ्. प्र.पु. ए.व.।

2211. प्राप्नुवन्ति (12-4) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लट्, लटः झि, आप् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नुप्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-74) इति उवङादेशः। लट्. प्र.पु. ब.व.।

2212. प्राप्य (2-57,72, 5-20,20, 6-41, 8-21,25, 9-33) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

2213. प्राप्यते (5-5 – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) कर्मणि लट्, लटः त। **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2214. प्राप्स्यसि (2-37, 18-62) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लृट्, लृटः मिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। लृट्. उ.पु. ए.व.।

2215. प्राप्स्ये (16-13) – प्र-पूर्वकात् आप्-धातोः (आप्लृ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लृट्, लृटः इ, आप् इ, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति, स्यप्रत्ययः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। यद्यपि स्वादिस्थः अयं परस्मैपदी एव आप्-धातुः, तथापि आत्मनेपदम् अत्र आर्षम्। चुरादिस्थः आधृषीय आप्-धातुः तु न अत्र सम्भवति तस्य सेट्कत्वात्। कर्मणि लृट्. उ.पु. ए.व.।

2216. प्रारभते (18-15) – प्र-आङ्-पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) लट्, लटः त, रभ् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2217. प्रार्थयन्ते (9-2-) – प्र-पूर्वकात् अर्थ-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, अर्थि झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2218. प्राह (4-1) – प्र-पूर्वकात् ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुवः पञ्चानामादित आहो ब्रुवः** (पा.सू. 3-4-84) इति तिपः णल्-आदेशः, धातोः आह् इति च आदेशः। लट्. प्र.पु. ए.व.।

2219. प्राहुः (6-2, 13-1, 15-1, 18-2,3) – प्र-पूर्वकात् ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुवः पञ्चानामादित आहो ब्रुवः** (पा.सू. 3-4-84) इति झेः उस्-आदेशः, धातोः आह् इति च आदेशः। लट्. प्र.पु. ब.व.।

2220. प्रियचिकीर्षवः (1-23) – प्रियं चिकीर्षवः, **द्वितीया** (पा.सू. 2-1-23) इति योगविभागेन समासः। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। चिकीर्षु इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **अज्झनगमां सनि** (पा.सू. 6-4-16) इति दीर्घः, **ऋत इद्धातोः** (पा.सू. 7-1-100) इति इदादेशः, **उरण्रपरः** (पा.सू. 1-1-51) इति रपरत्वम्, **सन्यङोः** (पा.सू. 6-9-1) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति अभ्यासस्य आदिः हल् शिष्यते, **कुहोश्चुः** (पा.सू. 7-4-62) इति चर्त्वम्, **हलि च** (पा.सू. 8-2-77) इति दीर्घः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम् चिकीर्ष इति सम्पन्नम्, ततः **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः। पुं. प्र.वि. ब.व.।

2221. प्रियकृत्तमः (18-69) – प्रियकृत्-शब्दात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति तमप्-प्रत्ययः। प्रियकृत् इत्यत्र प्रियं करोति इति विग्रहे प्रिय-उपपदात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1012) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। पुं. प्र.वि. ए.व.।

2222. प्रियतरः (18-69) – प्रिय-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति तरप्-प्रत्ययः। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। पुं. प्र.वि. ए.व.।

2223. प्रियहितम् (17-15) – प्रियं च हितं च यत् वाक्यं तत् प्रियहितम् इति विग्रहे अत्र विशेषणद्वयस्य समासः **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति सूत्रेण वक्तव्यः। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। हित इत्यत्र धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 2-2-36) इति क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति धा-स्थाने हि-आदेशः, अथवा हि-धातोः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

2224. प्रियम् (5-20) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। नपुं. द्वि.वि. ए.व.।

2225. प्रियः (7-17,17, 9-19, 11-44, 22-14,15,16,17,19, 17-7, 18-65) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः। पुं. प्र.वि. ए.व.।

2226. प्रियाः (12-20) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2227. प्रियायाः (11-44) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. ष.वि. ए.व.।

2228. प्रीतमनाः (11-44) – प्रीतं मनः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। प्रीत इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-20) इति इटः निषेधः। मनस् इत्यत्र मन्-धातोः **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. प्र.वि. ए.व.।

2229. प्रीतिपूर्वकम् (10-10) – प्रीतिः यथा पूर्वा तथा, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्-प्रत्ययः। प्रीति इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-20) इति इटः निषेधः। पूर्व इत्यत्र पूर्व्-धातोः(पूर्व पूरणे, भ्वादिः, सि.कौ. - धा.सं. 576) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2230. प्रीतिः (1-36) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-20) इति इटः निषेधः। स्त्री. प्र.वि. ए.व.।

2231. प्रीयमाणाय (10-1) – प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शानच्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. च.वि. ए.व.।

2232. प्रेतान् (17-4) – प्र-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्यय, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-20) इति इटः निषेधः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. द्वि.वि. ब.व.।

2233. प्रेत्य (17-28, 18-12) – प्र-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। अव्ययम्.

2234. प्रोक्तवान् (4-1,4) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) **निष्ठा** (पा.सू. 3-2-102) इति क्तवतु-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. प्र.वि. ए.व.।

2235. प्रोक्तम् (8-1, 13-11, 17-18, 18-37) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. प्र.वि. ए.व.।

2236. प्रोक्तः (4-3, 6-33, 10-40, 16-6) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. प्र.वि. ए.व.।

2237. प्रोक्ता (3-3) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। स्त्री. प्र.वि. ए.व.।

2238. प्रोक्तानि (18-13) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. द्वि.वि. ब.व.।

2239. प्रोच्यते (18-19) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं.1063) कर्मणि लट्, लटः त। **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। कर्मणि लट्. प्र.पु. ए.व.।

2240. प्रोच्यमानम् (18-29) – प्र-पूर्वकात् वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) कर्मणि लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति

यक्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. प्र.वि. ए.व.।

2241. प्रोतम् (7-7) – प्रपूर्वकात् वेञ्-धातोः (वेञ् तन्तुसन्ताने, भ्वादिः, सि.कौ. - धा.सं. 1006) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च** (पा.सू. 6-1-16) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। नपुं. प्र.वि. ए.व.।

2242. फलहेतवः (2-49) – फलस्य हेतवः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 6-3-84) इति सूत्रेण गुणः। पुं. प्र.वि. ब.व.।

2243. फलम् (2-51, 5-4, 7-23, 9-36, 14-16,16,17,12,2125, 18-9,12) – फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

2244. फलाकाङ्क्षी (18-34) – फलम् आकाङ्क्षति इति विग्रहे फल इति उपपदे काङ्क्ष्-धातोः **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2245. फलानि (18-6) - फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

2246. फले (5-12) – फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. स.वि. ए.व.।

2247. फलेषु (2-47) – फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. स.वि. ब.व.।

2248. बत (1-45) – वन्-धातोः (वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 462) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः। **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। माधवाद्याचार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। अव्ययम्।

2249. बद्धाः (16-12) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वम्। पुं. प्र.वि. ब.व.।

2250. बध्नाति (14-6) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) लट्, लटः तिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति न-लोपः। लट्. प्र.पु. ए.व.।

2251. बध्यते (4-14) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) कर्मणि लट्, लटः त, बन्ध् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **आनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2252. बन्धम् (18-30) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2253. बन्धात् (5-3) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **हलश्च** (पा.सू. 3-3-121) इति घञ्प्रत्ययः। पुं. पं.वि. ए.व.।

2254. बन्धुः (6-5,6) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2255. बन्धून् (1-27) – बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. द्वि.वि. ब.व.।

2256. बभूव (2-9) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लिट् लिटः तिप्, भू तिप्, तिपः स्थाने अ-आदेशः भवति **परस्मैपदानां णलतुस्थलथुसणल्वमाः** (पा.सू. 3-4-82) इति सूत्रेण, **भुवो वुग्लुङ्लिटोः** (पा.सू. 6-4-88) इति वुगागमः, **लिटि धातोरनभ्यासस्य** (पा.सू. 6-1-8) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः, **भवतेरः** (पा.सू. 7-4-73) इति अकारादेशः, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति अभ्यासस्य जश्त्वम्। लिट्. प्र.पु. ए.व.।

2257. बलवताम् (7-11) – बल-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। पुं. ष.वि. ब.व.।

2258. बलवत् (6-34) – बल-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। नपुं. प्र.वि. ए.व.।

2259. बलवान् (16-14) – बल-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। पुं. प्र.वि. ए.व.।

2260. बलम् (1-10,10, 7-11, 16-18, 18-53) – बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, बल इति शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। नपुं. प्र.वि. ए.व.।

2261. बलात् (3-36) – बल-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। नपुं. पं.वि. ए.व.।

2262. बहवः (1-9, 4-10, 11-28) – बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। पुं. प्र.वि. ब.व.।

2263. बहिः (5-27, 13-15, ) – वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) बाहुलकात् इस्-प्रत्ययः। माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। अव्ययम्।

2264. बहुदंष्ट्राकरालम् (11-23) – बह्व्यः दंष्ट्राः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, बहुदंष्ट्राभिः करालम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः। बह्वी इत्यत्र बहु-शब्दात् **बह्वादिभ्यश्च** (पा.सू. 4-1-45) इति ङीष्, **इको यणचि** (पा.सू. 6-1-77) इति यण्, बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च**

(उणा. 1-29) इति उप्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। दंष्ट्रा इत्यत्र दंश्-धातोः (दंश दशने, भ्वादिः, सि.कौ. - धा.सं. 989) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतपददशनहः करणे** (पा.सू. 3-2-182) इति ष्ट्रन्-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। कराल इत्यत्र कर इत्युपपदे अल्-धातोः (अल भूषणपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, कर इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

2265. बहुधा (9-25, 13-4) – बहु इति शब्दात् **विभाषा बहोर्धाविप्रकृष्टकाले** (पा.सू. 5-4-20) इति धा-प्रत्ययः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। अव्ययम्।

2266. बहुना (10-42) – बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। पुं. तृ.वि. ए.व.।

2267. बहुबाहूरुपादम् (11-23) – बाहवश्च ऊरवश्च पादाश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (पा.सू. 2-4-2) इति एकवद्भावः, बहु बाहूरुपादं यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। बाहु इत्यत्र बाध्-धातोः (बाधृ लोडने, भ्वादिः, सि.कौ. - धा.सं. 5) **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति उ-प्रत्ययः, हश्चान्त्यादेशः। ऊरु इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **अर्तेरुरच्च** (उणा. 4-114) इति कु-प्रत्ययः ऊरादेशश्च। पाद इत्यत्र **पदरुजविशस्पृशो घञ्** (पा.सू. 3-3-16) इति पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. द्वि.वि. ए.व.।

2268. बहुमतः (2-35) – बहूनां मतः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। मत इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

2269. बहुलायासम् (18-24) – बहुलः आयासः यस्मिन् तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। बहुल इत्यत्र बहून् लाति इति विग्रहे बहु-उपपदे ला-धातोः (ला आदाने, रुधादिः, सि.कौ. - धा.सं. 1451) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। आयास इत्यत्र आङ्पूर्वकात् यस्-धातोः (यसु प्रयत्ने, दिवादिः, सि.कौ. - धा.सं. 1210) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

2270. बहुवक्त्रनेत्रम् (11-23) – वक्त्राणि च नेत्राणि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (पा.सू. 2-4-2) इति एकवद्भावः, बहु वक्त्रनेत्रं यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। वक्त्र इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा. 4-166) इति त्र-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। नेत्र इत्यत्र नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण ष्ट्रन् इति प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

2271. बहुविधाः (4-32) – बह्व्यः विधाः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः। बह्वी इत्यत्र बहु-शब्दात् **बह्वादिभ्यश्च** (पा.सू. 4-1-45) इति ङीष्, **इको यणचि** (पा.सू. 6-1-77) इति यण्, बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। विधा इत्यत्र विपूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2272. बहुशाखाः (2-41) – बह्व्यः शाखाः यासां ताः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति पुंवद्भावः। बह्वी इत्यत्र बहु-शब्दात् **बह्वादिभ्यश्च** (पा.सू. 4-1-45) इति ङीष्, **इको यणचि** (पा.सू. 6-1-77) इति यण्, बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। शाखा इत्यत्र शाख्-धातोः (शाखृ व्याप्तौ, भ्वादिः, सि.कौ. - धा.सं. 126) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

2273. बहूदरम् (11-23) – बहूनि उदराणि यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। उदर इत्यत्र उद्-पूर्वकात् ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

2274. बहूनाम् (7-19) – बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः, बहु आम्, **ह्रस्वनद्यापो नुट्** (पा.सू. 7-1-54) इति नुट्, **नामि** (पा.सू. 6-4-3) इति अजन्तस्य अङ्गस्य दीर्घः। नपुं. ष.वि. ब.व.।

2275. बहूनि (4-5, 11-6) – बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः, बहु जस्, शस्, **जश्शसोः शिः** (पा.सू. 7-1-20) इति शि-आदेशः, **इकोऽचि विभक्तौ** (पा.सू. 7-1-73) इति नुम्, **सर्वनामस्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधायाः दीर्घः। नपुं. प्र.वि. ब.व.।

2276. बहून् (2-36) – बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। पुं. द्वि.वि. ब.व.।

2277. बालाः (4-5) – बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **ज्वलतिकसन्तेभ्यो णः** (पा.सू. 3-1-140) इति ण-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ब.व.।

2278. बाह्यस्पर्शेषु (5-21) – बाह्याः स्पर्शाः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। बाह्य इत्यत्र बहिस्-शब्दात् **बहिषष्टिलोपः यञ् च** (वा. 2556) इति यञ्प्रत्ययः टिलोपश्च, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, बहिस् इत्यत्र वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) बाहुलकात् इस्-प्रत्ययः। माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः, अव्ययम् इदम्। स्पर्श इत्यत्र स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः अथवा **पदरुजविशस्पृशो घञ्** (पा.सू. 3-3-16) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ब.व.।

2279. बाह्यान् (5-27) – बहिस्-शब्दात् **बहिषष्टिलोपः यञ् च** (वा. 2556) इति यञ्प्रत्ययः टिलोपश्च, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, बहिस् इत्यत्र वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) बाहुलकात् इस्-प्रत्ययः। माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः, अव्ययम् इदम्। पुं. द्वि.वि. ब.व.।

2280. बिभर्ति (15-27) – भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लुः, **श्लौ** (पा.सू. 6-1-10) इति द्वित्वम्, **उरत्** (पा.सू. 7-4-66) इति अकारः, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिहल्शेषः, **भृञामित्** (पा.सू. 7-4-76) इति अभ्यासस्य इकारः, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति चर्त्वम्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ए.व.।

2281. बीजप्रदः (14-4) – बीजस्य प्रदः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बीज इत्यत्र विशेषेण ईजते इति विग्रहे (ईज गतिकुत्सनयोः, भ्वादिः, सि.कौ. - धा.सं. 182) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। प्रद इत्यत्र प्र-पूर्वकात् दा-धातोः (डुदाञ् दाने, अदादिः, सि.कौ. - धा.सं. 1059) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. प्र.वि. ए.व.।

2282. बीजम् (7-10, 9-18, 10-39) – विशेषेण ईजते इति विग्रहे (ईज गतिकुत्सनयोः, भ्वादिः, सि.कौ. - धा.सं. 182) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। नपुं. द्वि.वि. ए.व.।

2283. बुद्धयः (2-41) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. प्र.वि. ब.व.।

2284. बुद्धिग्राह्यम् (6-21) – बुद्ध्या ग्राह्यम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। ग्राह्य इत्यत्र ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अत उपधाया** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. द्वि.वि. ए.व.।

2285. बुद्धिनाशः (2-63) – बुद्धेः नाशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नाश इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2286. बुद्धिनाशात् (2-63) – बुद्धेः नाशः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्ध्या ग्राह्यम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नाश इत्यत्र नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

2287. बुद्धिभेदम् (3-26) – बुद्धेः भेदः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35)

इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। भेद इत्यत्र भिद्-धातोः (भिदिर् विदारणे, रुधादिः, सि.कौ. - धा.सं. 1439) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

2288. बुद्धिमताम् (7-10) – बुद्धि-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. ष.वि. ब.व.।

2289. बुद्धिमान् (4-18, 15-20) – बुद्धि-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ए.व.।

2290. बुद्धियुक्तः (2-50) – बुद्ध्या युक्तः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2291. बुद्धियुक्ताः (2-51) – बुद्ध्या युक्ताः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2292. बुद्धियोगम् (10-10, 18-57) – बुद्धेः योगः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

2293. बुद्धियोगात् (2-49) – बुद्धेः योगः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. पं.वि. ए.व.।

2294. बुद्धिसंयोगम् (6-43) – बुद्धेः संयोगः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। संयोग इत्यत्र सम्-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. द्वि.वि. ए.व.।

2295. बुद्धिम् (3-2, 12-8) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. द्वि.वि. ए.व.।

2296. बुद्धिः (2-39,41,44,52,53,65,66, 3-1,40,42, 7-4,10, 10-4, 13-5, 18-17,30,31,32) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। स्त्री. प्र.वि. ए.व.।

2297. बुद्धेः (3-42,43, 18-29) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। बुद्धि ङसि, ङस्। **ङिति ह्रस्वश्च** (पा.सू. 1-4-6) इति नदीसंज्ञा विकल्पेन, नदीसंज्ञायाः अभावे **शेषोघ्यसखि** (पा.सू. 1-4-7) इति घिसंज्ञा, **घेर्ङिति** (पा.सू. 7-3-111) इति गुणः, **ङसिङसोश्च** (पा.सू. 6-1-110) इति पूर्वरूपैकादेशः। स्त्री. पं.वि. ए.व.।

2298. बुद्धौ (3-49) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः, **ङिति ह्रस्वश्च** (पा.सू. 1-4-6) इति नदीसंज्ञा विकल्पेन, नदीसंज्ञायाः अभावे **शेषोघ्यसखि** (पा.सू. 1-4-7) इति घिसंज्ञा, **अच्च घेः** (पा.सू. 7-3-119) इति ङेः औ। स्त्री. स.वि. ए.व.।

2299. बुद्ध्या (2-39, 5-11, 6-25, 18-51) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश्**

**झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। बुद्धि टा, **इको यणचि** (पा.सू. 6-1-77) इति यण्। स्त्री. तृ.वि. ए.व.।

2300. बुद्ध्वा (3-43, 15-20) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। अव्ययम्।

2301. बुधः (5-22) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति कप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2302. बुधाः (4-11, 10-8) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2303. बृहत्साम (10-35) – बृहत् साम, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। बृहत् इति बृह्-धातोः (बृह वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 735) **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा. 2-84) इत्यनेन अति-प्रत्ययान्तः निपात्यते। सामन् इत्यत्र सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण मनिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. प्र.वि. ए.व.।

2304. बृहस्पतिम् (10-24) – बृहतां पतिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च** (वा. 3713) इति पतिशब्दस्य सुट्-आगमः बृहत्-शब्दस्य च तकारस्य लोपः। बृहत् इति बृह्-धातोः (बृह वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 735) **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा. 2-84) इत्यनेन अति-प्रत्ययान्तः निपात्यते। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डति** (उणा. 4-57) इति डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ए.व.।

2305. बोद्धव्यम् (4-17,17,17) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। नपुं. प्र.वि. ए.व.।

2306. बोधयन्तः (10-9) – बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, बोधि, तस्मात् लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ब.व.।

2307. ब्रवीमि (1-7) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुव ईट्** (पा.सू. 7-3-93) इति ईट्-आगमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। लट्. उ.पु. ए.व.।

2308. ब्रवीषि (10-13) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लट्, लटः सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **ब्रुव ईट्** (पा.सू. 7-3-93) इति ईट्-

आगमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। लट्. म.पु. ए.व.।

2309. ब्रह्म (3-15,15, 4-24,24,24,31, 5-6,19, 8-1,3,13,24, 10-12, 13-12,30, 14-3,4, 18-50) – बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. प्र.वि. ए.व.।

2310. ब्रह्मकर्म (18-42) – ब्रह्मणः कर्म, **षष्ठी** (पा.सू. 2-2-8) इति सूत्रेण समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

2311. ब्रह्मकर्मसमाधिना (4-24) – ब्रह्म एव कर्म ब्रह्मकर्म, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, ब्रह्मकर्मणि समाधिः यस्य सः ब्रह्मकर्मसमाधिः तेन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। समाधि इत्यत्र सम्-आ-र्वकात् धाधातोः **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. तृ.वि. ए.व.।

2312. ब्रह्मचर्यम् (8-11, 17-14) – ब्रह्मणे चर्यम्, **चतुर्थी** (पा.सू. 2-1-36) इति योगविभागेन समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। चर्य इत्यत्र चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **गदमदचरयमश्चानुपसर्गे** (पा.सू. 3-1-100) इति यत्-प्रत्यय। नपुं. द्वि.वि. ए.व.।

2313. ब्रह्मचारिव्रते (6-14) – ब्रह्मचारिणः व्रतम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। ब्रह्मचारिन् इत्यत्र ब्रह्म चरितुं शीलम् अस्य इति विग्रहे ब्रह्मन् इति उपपदात् चर्-धातोः **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। व्रत इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **पृषिरञ्जिभ्यां कित्** (उणा. 3-111) इति अतच्-प्रत्ययः अयं च कित् इति कृत्वा **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति प्राप्तः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. स.वि. ए.व.।

2314. ब्रह्मणः (4-32, 6-38, 8-17, 11-37, 14-27, 17-23) – बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. ष.वि. ए.व.।

2315. ब्रह्मणा (4-24) – बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. तृ.वि. ए.व.।

2316. ब्रह्मणि (5-10,19,20) – बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. स.वि. ए.व.।

2317. ब्रह्मनिर्वाणम् (2-72, 5-24,25,26) – ब्रह्मणि निर्वाणम्, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागात् समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। निर्वाण इत्यत्र निर्पूर्वकात् वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) **गत्यर्थाकर्मकश्लिषशीङ्स्थासजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **निर्वाणोऽवाते** (पा.सू. 8-2-50) इति तस्य नकारः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. द्वि.वि. ए.व.।

2318. ब्रह्मभूतम् (6-27) – ब्रह्म भूतः तम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

2319. ब्रह्मभूतः (5-24, 18-54) – ब्रह्म भूतः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2320. ब्रह्मभूयाय (14-26, 18-53) – ब्रह्मणः भावः ब्रह्मभूयं तस्मै, ब्रह्मन् इति उपपदे भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भुवो भावे** (पा.सू. 3-1-107) इति क्यप्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः परन्तु **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. च.वि. ए.व.।

2321. ब्रह्मयोगयुक्तात्मा (5-21) – ब्रह्मणि योगः ब्रह्मयोगः **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, तेन ब्रह्मयोगेन युक्तः ब्रह्मयोगयुक्तः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः, ब्रह्मयोगयुक्तः आत्मा यस्य सः ब्रह्मयोगयुक्तात्मा, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2322. ब्रह्मवादिनाम् (17-24) – ब्रह्म वदितुं शीलम् अस्य इति विग्रहे ब्रह्मन् इति उपपदे वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति

नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. ष.वि. ब.व.।

2323. ब्रह्मवित् (5-20) – ब्रह्म वेत्ति इति विग्रहे ब्रह्मन् इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

2324. ब्रह्मविदः (8-24) – ब्रह्म विदन्ति इति विग्रहे ब्रह्मन् इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

2325. ब्रह्मसंस्पर्शम् (6-28) – ब्रह्मणः संस्पर्शः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। संस्पर्श इत्यत्र सम्पूर्वकात् स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **पदरुजविशस्पृशो घञ्** (पा.सू. 3-3-16) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। नपुं. द्वि.वि. ए.व.।

2326. ब्रह्मसूत्रपदैः (13-4) – सूत्राणि च पदानि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। ब्रह्मणः सूत्रपदानि तैः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। सूत्र इत्यत्र सूत्र-धातोः (सूत्र वेष्टने विमोचने ग्रन्थने च, चुरादिः, सि.कौ. - धा.सं. 1908) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा सिव्-धातोः **सिविमुच्योष्टेरू च** (उणा. 4-162) इति ष्ट्रन्-प्रत्ययः टेः ऊ इति आदेशः च। पद इत्यत्र पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

2327. ब्रह्माग्नौ (4-24,25) – ब्रह्म एव अग्निः तस्मिन्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इति इदितः नुम् आगमः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति सूत्रेण, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः, नलोपश्च पुं. स.वि. ए.व.।

2328. ब्रह्माणम् (11-25) – ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. द्वि.वि. ए.व.।

2329. ब्रह्मोद्भवम् (3-15) – ब्रह्म अर्थात् वेदः उद्भवः यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। उद्भव इत्यत्र उद्-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। नपुं. द्वि.वि. ए.व.।

2330. ब्राह्मणक्षत्रियविशाम् (18-41) – ब्राह्मणाश्च क्षत्रियाश्च विशश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। ब्राह्मण इत्यत्र ब्रह्मन् इति शब्दात् अपत्यार्थे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, अथवा **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, अथवा **शेषे** (पा.सू. 4-2-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। क्षत्रिय इत्यत्र क्षत्र-शब्दात् **क्षत्राद्घः** (पा.सू. 4-1-138) इति घ-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, क्षत्र इत्यत्र क्षद्-धातोः (क्षद संवृत्तौ, इति कविकल्पद्रुमः) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा. 4-166) इति त्र-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति दकारस्य तकारः। विश् इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. ष.वि. ब.व.।

2331. ब्राह्मणस्य (2-46) – ब्रह्मन् इति शब्दात् अपत्यार्थे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, अथवा **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, अथवा **शेषे** (पा.सू. 4-2-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. ष.वि. ए.व.।

2332. ब्राह्मणाः (9-33, 17-23) – ब्रह्मन् इति शब्दात् अपत्यार्थे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, अथवा **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, अथवा **शेषे** (पा.सू. 4-2-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

2333. ब्राह्मणे (5-18) – ब्रह्मन् इति शब्दात् अपत्यार्थे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, अथवा **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, अथवा **शेषे** (पा.सू. 4-2-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. स.वि. ए.व.।

2334. ब्राह्मी (2-72) – ब्रह्मन् शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **ब्राह्मो जातौ** (पा.सू. 6-4-171) इति टिलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। स्त्री. प्र.वि. ए.व.।

2335. ब्रूहि (2-7, 5-1) – ब्रू-धातोः (ब्रूञ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1044) लोट्, लोटः सिप्, ब्रू सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः। लोट्. म.पु. ए.व.।

2336. भक्तः (4-3, 7-21, 9-31) – भक्तिरस्य अस्ति इत्यर्थे भक्ति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2337. भक्ताः (9-33, 12-1,20) – भक्तिः एषाम् अस्ति इत्यर्थे भक्ति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ब.व.।

2338. भक्तिमान् (12-17,19) – भक्तिरस्मिन् अस्ति, भक्ति-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2339. भक्तियोगेन (14-26) – भक्तेः योगः तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ए.व.।

2340. भक्तिम् (18-68) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। स्त्री. द्वि.वि. ए.व.।

2341. भक्तिः (13-10) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। स्त्री. प्र.वि. ए.व.।

2342. भक्त्या (8-10,22, 9-14,26,29, 11-54, 18-55) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। स्त्री. तृ.वि. ए.व.।

2343. भक्त्युपहृतम् (9-26) – भक्त्या उपहृतम्, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। उपहृत इत्यत्र उपपूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. द्वि.वि. ए.व.।

2344. भगवन् (10-14,17) – भग-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मकारस्य वादेशः। भग इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **पुंसि घः संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घ-प्रत्ययः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. सम्बो.वि. ए.व.।

2345. भजताम् (10-10) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. ष.वि. ब.व.।

2346. भजति (6-31, 15-19) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. प्र.पु. ए.व.।

2347. भजते (6-47, 9-30) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (पा.सू. 1-3-72) इति आत्मनेपदम्, अतः लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2348. भजन्ति (9-13,29) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, लटः झि, भज् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. प्र.पु. ब.व.।

2349. भजन्ते (7-16,28, 10-8) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (पा.सू. 1-3-72) इति आत्मनेपदम्, अतः लटः झ। **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2350. भजस्व (9-33) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लोट्, लोटः थास्, भज् थास्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **थासः से** (पा.सू. 3-4-80) थासः स्थाने इति से, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति वादेशः। लोट्. म.पु. ए.व.।

2351. भजामि (4-11) – भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) लट्, लटः मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

2352. भयम् (10-4, 18-35) – **भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति वार्तिकेन भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. प्र.वि. ए.व.।

2353. भयात् (2-35,40) – **भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति वार्तिकेन भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. पं.वि. ए.व.।

2354. भयानकानि (11-27) – **आनकः शीङ्भियः** (उणा. 3-82) इति भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) आनक-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. द्वि.वि. ब.व.।

2355. भयाभये (18-30) – भयञ्च अभयञ्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। न भयम् अभयम्, **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। भय इत्यत्र **भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति वार्तिकेन भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. द्वि.वि. द्वि.व.।

2356. भयावहः (3-35) – भयस्य आवहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भय इत्यत्र **भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति वार्तिकेन भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः**

(पा.सू. 6-1-78) इति अयादेशः। आवह इत्यत्र आङ्-पूर्वकात् वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2357. भयेन (11-45) – **भयादीनामुपसङ्ख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति वार्तिकेन भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. तृ.वि. ए.व.।

2358. भरतर्षभ (7-11,16, 8-23, 13-26, 14-12, 18-36) – भरतेषु ऋषभः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागात् समासः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। भरत इत्यत्र भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** (उणा. 3-110) इति अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। ऋषभ इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **ऋषिवृषिभ्यां कित्** (उणा. 3-123) इति अभच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. सम्बो.वि. ए.व.।

2359. भरतश्रेष्ठ (17-12) – भरतेषु श्रेष्ठः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागात् समासः। भरत इत्यत्र भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** (उणा. 3-110) इति अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। श्रेष्ठ इत्यत्र प्रशस्य इति शब्दात् **अजादी गुणवचनादेव** (पा.सू. 5-3-58) इति नियमेन **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति इष्ठन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) प्रशस्य-शब्दस्य स्थाने श्रादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. सम्बो.वि. ए.व.।

2360. भरतसत्तम (18-4) – भरतेषु सत्तमः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागात् समासः। भरत इत्यत्र भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** (उणा. 3-110) इति अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। सत्तम इत्यत्र सत् इत्यस्मात् **अतिशायने तमबिष्ठनौ** (पा.सू 5-3-55) इति तमप्-प्रत्ययः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः। पुं. सम्बो.वि. ए.व.।

2361. भर्ता (9-18, 13-22) – भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2362. भव (2-45, 6-46, 8-27, 9-34, 11-33,46, 12-10, 18-57,65) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लोट्, लोटः सिप्, भू सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

2363. भवतः (4-4, 14-17) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भातेर्डवतुः** (उणा. 1-63) इति डवतु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. ष.वि. ए.व.।

2364. भवति (1-44, 2-63, 3-14, 4-7,12, 6-2,17,42, 7-23, 9-31, 14-3,10,21, 17-2,3,7, 18-12) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लट्, लटः तिप्, भू तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ए.व.।

2365. भवन्तम् (11-31) –भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भातेर्डवतुः** (उणा. 1-63) इति डवतु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भवत् अम्, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्-आगमः। पुं. द्वि.वि. ए.व.।

2366. भवन्तः (1-11) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भातेर्डवतुः** (उणा. 1-63) इति डवतु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भवत् जस्, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्-आगमः। पुं. प्र.वि. ब.व.।

2367. भवन्ति (3-14, 10-5, 16-3) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लट्, लटः झिः, भू झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ब.व.।

2368. भवः (10-4) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2369. भवान् (1-8, 10-12, 11-3) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भातेर्डवतुः** (उणा. 1-63) इति डवतुप्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भवत् सु, **अत्वसन्तस्य चाधातोः** (पा.सू. 6-4-14) इति उपधायाः दीर्घः, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्-आगमः। **संयोगान्तस्य लोपः** (पा.सू. 8-2-23) इति तकार-लोपः, **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः। पुं. प्र.वि. ए.व.।

2370. भवाप्ययौ (11-2) – भवश्च अप्ययश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। भव इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। अप्यय इत्यत्र अपि-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. द्वि.व.।

2371. भवामि (12-7) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लट्, लटः मिप्, भू मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति अदन्तस्य अङ्गस्य दीर्घः। लट्. उ.पु. ए.व.।

2372. भविता (18-69) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लुट्, लुटः तिप्, भू तिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति तास्, **लुटः प्रथमस्य डारौरसः** (पा.सू. 2-4-85) इति डा-आदेशः, डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः इति टेः लोपः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लुट्. प्र.पु. ए.व.।

2373. भविष्यताम् (10-34) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लृट्, **लृटः सद्वा** (पा.सू. 3-3-14) इति लृटः शतृ-प्रत्ययः, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। पुं. ष.वि. ब.व.।

2374. भविष्यति (16-13) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लृट्, लृटः तिप्। भू तिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्. प्र.पु. ए.व.।

2375. भविष्यन्ति (11-32) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लृट्, लृटः झि, भू झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्,

**सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्. प्र.पु. ब.व.।

2376. भविष्याणि (7-26) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लृट्, **लृटः सद्वा** (पा.सू. 3-3-14) इति लृटः शतृ-प्रत्ययः, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति विकल्पेन तलोपः। नपुं. द्वि.वि. ब.व.।

2377. भविष्यामः (2-12) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) लृट्, लृटः मस्, भू मस्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्. उ.पु. ब.व.।

2378. भवेत् (1-46, 11-12) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) विध्यादौ लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विधिलिङ्. प्र.पु. ए.व.।

2379. भस्मसात् (4-37,37) – भस्मन्-शब्दात् **विभाषा साति कार्त्स्न्ये** (पा.सू. 5-4-52) इति साति-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। भस्मन् इत्यत्र भस्-धातोः (भस भर्त्सनदीप्त्योः, जुहोत्यादिः, सि.कौ. - धा.सं. 1100) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। अव्ययम्।

2380. भारत (1-24, 2-10,14,18,28,30, 3-25, 4-7,42, 7-27, 11-6, 13-2,33, 14-3,8,9,10, 15-19,20, 16-3, 17-3, 18-62) – भरत-शब्दात् **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। भरत इत्यत्र भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच्** (उणा. 3-110) इति अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. सम्बो.वि. ए.व.।

2381. भावना (2-66) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2382. भावयत (3-11) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) अथवा **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः लोट्, लोटः थ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **लोटो लङ्वत्** (पा.सू. 3-4-85) इति लङ्वद्भावः, **तस्थस्थमिपां तांतंतामः** (पा.सू. 3-4-101) इति तादेशः। लोट्. म.पु. ब.व.।

2383. भावयन्तः (3-11) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) अथवा **हेतुमति च** (पा.सू. 3-1-

26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, तस्मात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, भावयत्, तस्मात् जस्, **उगिदचां सर्वनामस्थानेऽधातोः** (पा.सू. 7-1-70) इति नुम्। पुं. प्र.वि. ब.व.।

2384. भावयन्तु (3-11) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) अथवा **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः लोट्, लोटः झि, भावि झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **एरुः** (पा.सू. 3-4-86) इति उकारादेशः। लोट्. प्र.पु. ब.व.।

2385. भावसमन्विताः (10-8) – भावेन समन्विताः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। समन्वित इत्यत्र सम्-अनुपूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

2386. भावसंशुद्धिः (17-16) – भावस्य संशुद्धिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। संशुद्धि इत्यत्र सम्-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। स्त्री. प्र.वि. ए.व.।

2387. भावम् (7-25,24, 8-6, 9-11, 18-20) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

2388. भावः (2-16, 8-4,20, 18-17) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

2389. भावाः (7-12, 10-5) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2390. भावेषु (10-17) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. ब.व.।

2391. भावैः (7-13) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ब.व.।

2392. भाषसे (2-11) – भाष्-धातोः (भाष व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 612) लट्, लटः थास्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **थासः से** (पा.सू. 3-4-80) इति थासः स्थाने से आदेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। लट्. म.पु. ए.व.।

2393. भाषा (2-54) – भाष्-धातोः (भाष व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 612) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2394. भासयते (15-6,12) – भास्-धातोः (भासृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 624) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, भासि लट्, **णिचश्च** (पा.सू. 1-3-74) इति आत्मनेपदम्, लटः त। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2395. भासः (11-12,30) – भास्-धातोः (भासृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 624) **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः इति क्विप्** (पा.सू. 3-2-177) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. ष.वि, ए.व.।

2396. भास्वता (10-11) – भास्-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मतुपः मस्य वकारादेशः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **ससजुषो रुः** (पा.सू. 8-2-66) इति भास्-शब्दस्य सकारस्य रुत्वं न भवति। भास् इत्यत्र भास्-धातोः (भासृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 624) **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः इति क्विप्** (पा.सू. 3-2-177) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. तृ.वि, ए.व.।

2397. भाः (11-12) – भास्-धातोः (भासृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 624) **भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः इति क्विप्** (पा.सू. 3-2-177) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्**

(पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि, ए.व.।

2398. भिन्ना (7-4) – भिद्-धातोः (भिदिर् विदारणे, रुधादिः, सि.कौ. - धा.सं. 1439) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति तकारस्य धातोः दकारस्य च नत्वम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। स्त्री. प्र.वि. ए.व.।

2399. भीतभीतः (11-35) – भीतसदृशः इत्यर्थे **प्रकारे गुणवचनस्य** (पा.सू. 8-1-12) इति सूत्रेण भीत-शब्दस्य द्वित्वं कर्मधारयवद्भावः च। भीत इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2400. भीतम् (11-50) – भीत इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

2401. भीतानि (11-36) – भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति। नपुं. प्र.वि. ब.व.।

2402. भीताः (11-21) – भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

2403. भीमकर्मा (1-15) – भीमं कर्म यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। भीम इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2404. भीमाभिरक्षितम् (1-10) – भीमेन अभिरक्षितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। भीम इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अभिरक्षित इत्यत्र अभिपूर्वकात् रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। नपुं. प्र.वि. ए.व.।

2405. भीमार्जुनसमाः (1-4) – भीमश्च अर्जुनश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, भीमार्जुनाभ्यां समाः, **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** (पा.सू. 2-1-31) इति समासः। भीम इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अर्जुन इत्यत्र अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **अर्जेर्णिलुक्** (उणा. सू. 3-58) च इति उनन्-प्रत्ययः णेः लुक् च। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ब.व.।

2406. भीष्मद्रोणप्रमुखतः (1-25) – भीष्मश्च दोषश्च, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, भीष्मद्रोणयोः प्रमुखम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भीष्मद्रोणप्रमुखे भीष्मद्रोणप्रमुखतः, भीष्मद्रोणप्रमुख इति शब्दात् **आद्यादिभ्य**

**उपसङ्ख्यानम्** (वा. 3339) इति तसिः। भीष्म इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः धातोः षुगागमश्च। द्रोण इत्यत्र द्रु-धातोः (द्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 945) **कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति सूत्रेण न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्, ततः द्रोणः अर्थात् कलशः उत्पत्तिस्थानत्वेन अस्य अस्ति इत्यर्थे द्रोणशब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-24-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः। प्रमुख इत्यत्र प्रकृष्टं मुखम् अस्य, **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. ) इति समासः उत्तरपदलोपश्च। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः। डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2407. भीष्मम् (1-11, 2-4, 11-34) – भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः धातोः षुगागमश्च। पुं. द्वि.वि. ए.व.।

2408. भीष्मः (1-8, 11-36) – भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक्-प्रत्ययः धातोः षुगागमश्च। पुं. प्र.वि. ए.व.। पुं. प्र.वि. ए.व.।

2409. भीष्माभिरक्षितम् (1-10) – भीष्मेण अभिरक्षितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। भीष्म इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **भियः षुक् वा** (उणा. 1-148) इति मक् धातोः षुगागमश्च। अभिरक्षित इत्यत्र अभि-पूर्वकात् रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्। नपुं. प्र.वि. ए.व.।

2410. भुक्त्वा (9-21) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अव्ययम्।

2411. भुङ्क्ते (3-12, 13-21) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) लट्, **भुजोऽनवने** (पा.सू. 1-3-66) इति आत्मनेपदम्, अतः लटः त, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2412. भुङ्क्ष्व (11-33) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) लोट्, **भुजोऽनवने** (पा.सू. 1-3-66) इति आत्मनेपदम् अतः लोटः थास्, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति वादेशः। लोट्. म.पु. ए.व.।

2413. भुञ्जते (3-13) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) लट्, **भुजोऽनवने** (पा.सू. 1-3-66) इति आत्मनेपदम् इत्यतः लटः झ, **आत्मनेपदेष्वनतः** (पा.सू 7-1-5) इति झस्य अत्-आदेशः, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। लट्. प्र.पु. ब.व.।

2414. भुञ्जानम् (15-10) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) लट्, **भुजोऽनवने** (पा.सू. 1-3-66) इति आत्मनेपदम् इत्यतः **तङानावात्मनेपदम्** (पा.सू. 1-4-100) इति शानचः आत्मनेपदत्वात् लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-4-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। पुं. द्वि.वि. ए.व.।

2415. भुञ्जीय (2-5) – भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) विधिलिङ्, **भुजोऽनवने** (पा.सू. 1-3-66) इति आत्मनेपदम् इत्यतः लिङः स्थाने इट्, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111), **लिङस्सीयुट्** (3-4-102) इति सीयुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **इटोऽत्** (पा.सू. 3-4-106) इति इटः अत्। विधिलिङ्. उ.पु. ए.व.।

2416. भुवि (18-69) – भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **अन्येभ्योऽपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः। क्विपः सर्वलोपः - **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य इत्संज्ञा, **हलन्त्यम्** (पा.सू. 1-3-3) इति पकारस्य इत्संज्ञा, तस्य लोपः (पा.सू. 1-3-9) इति तयोः लोपः, **वेरपृक्तस्य** (पा.सू. 3-1-68) इति वकारस्य लोपः। भू इत्यस्य ङौ **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति उवङादेशः। स्त्री. स.वि. ए.व.।

2417. भूतगणान् (17-4) – भूतानां गणाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। गण इत्यत्र अदन्तात् गण-धातोः (गण संख्याने, चुरादिः, सि.कौ. - धा.सं. 1854) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभियो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

2418. भूतग्रामम् (9-8, 17-6) – भूतानां ग्रामः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। ग्राम इत्यत्र ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **ग्रसेरा च** (उणा. 1-143) इति मन्-प्रत्ययः आत्वं च, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. द्वि.वि. ए.व.।

2419. भूतग्रामः (8-19) – भूतानां ग्रामः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। ग्राम इत्यत्र ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **ग्रसेरा च** (उणा. 1-143) इति मन्-प्रत्ययः आत्वं च, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

2420. भूतपृथग्भावम् (13-30) – पृथक् च एषः भावः च, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। भूतानां पृथग्भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पृथक् इत्यत्र प्रथ्-धातोः (प्रथ प्रख्याने, भ्वादिः, सि.कौ. - धा.सं. 765) **प्रथेः कित्संप्रसारणं च** (उणा. 1-134) इति अजि-प्रत्ययः धातोः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चो कुः** (पा.सू. 8-2-30) इति कुत्वम्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

2421. भूतप्रकृतिमोक्षम् (13-34) – भूतानां प्रकृतिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूतप्रकृतेः मोक्षः, **पञ्चमी** (पा.सू. 2-1-37) इति योगविभागात् समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः,

**यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। प्रकृति इत्यत्र प्र-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति सूत्रेण क्तिच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। मोक्ष इत्यत्र मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। पुं. द्वि.वि. ए.व.।

2422. भूतभर्तृ (13-16) – भूतानां भर्तृ, **याजकादिभिश्च** (पा.सू. 2-2-9) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। भर्तृ इत्यत्र भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

2423. भूतभावन (10-15) – भूतानां भावन!, **षष्ठी** (पा.सू. 2-2-8) इति समासः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। भावन इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. सम्बो.वि. ए.व.।

2424. भूतभावनः (9-5) – भूतानां भावनः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। भावन इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

2425. भूतभावोद्भवकरः (8-3) – भूतानां भावः भूतभावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूतभावस्य उद्भवः भूतभावोद्भवः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूतभावोद्भवकर इत्यत्र भूतभावोद्भवं करोति इति विग्रहे भूतभावोद्भव इति उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञो हेतुताच्छील्यानुलोम्येषु** (पा.सू. 3-2-20) इति ट-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। उद्भव इत्यत्र उद्-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2426. भूतभृत् (9-5) – भूतानि बिभर्ति इति विग्रहे भूत इति उपपदे भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति सूत्रेण क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य इत्संज्ञा, **हलन्त्यम्** (पा.सू. 1-3-3) इति पकारस्य इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति तयोः लोपः, **वेरपृक्तस्य** (पा.सू. 3-1-68) इति वकारस्य लोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2427. भूतमहेश्वरम् (9-11) – भूतानां महेश्वरः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। महेश्वर इत्यत्र महान् ईश्वरः इति विग्रहे **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीयदेशीयेषु** (पा.सू. 6-3-46) इति तकारस्य आकारः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, , महा ईश्वर महेश्वर इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते, ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2428. भूतविशेषसङ्घान् (11-15) - भूतानां विशेषाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूतविशेषाणां सङ्घाः तान्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। विशेष इत्यत्र विपूर्वकात् शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। सङ्घ इत्यत्र सम्पूर्वकात् हन्-धातोः (हन हिसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्घौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. द्वि.वि. ब.व.।

2429. भूतसर्गौ (16-6) - भूतानां सर्गौ, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। सर्ग इत्यत्र सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. द्वि.व.।

2430. भूतस्थः (9-5) - भूते तिष्ठति इति विग्रहे भूत इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2431. भूतम् (10-39) - भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

2432. भूतादिम् (9-13) - भूतानाम् आदिः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ए.व.।

2433. भूतानि (2-28,30,34,69, 3-14,33, 4-35, 7-6,26, 8-22, 9-5,6,25, 15-13,16) - भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ब.व.।

2434. भूतानाम् (4-6, 10-5,20,22, 11-2, 13-15, 18-46) - भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. ष.वि. ब.व.।

2435. भूतिः (18-78) - भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **तितुत्रतथसिसुरकसेषु च** (पा.सू. 8-2-9) इति इटः निषेधः। स्त्री. प्र.वि. ए.व.।

2436. भूतेज्याः (9-25) - भूतेषु इज्या येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति इज्या इत्यस्य आकारस्य ह्रस्वः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। इज्या यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **व्रजयजोर्भावे क्यप्** (पा.सू. 3-3-18) इति सूत्रेण क्यप्-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ब.व.।

2437. भूतेश (10-15) - भूतानाम् ईशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। ईश इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति कप्रत्ययः। पुं. सम्बो.वि. ए.व.।

2438. भूतेषु (7-11, 8-20, 13-16,27, 16-2, 18-21,54) - भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. स.वि. ब.व.।

2439. भूत्वा (2-20,35,48, 3-30, 8-19,19, 11-15, 15-13,14) - भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः निषेधः। अव्ययम्।

2440. भूमिः (7-4) - भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भुवः कित्** (उणा. 4-48) इति सूत्रेण मि-प्रत्ययः अयं च कित्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. प्र.वि. ए.व.।

2441. भूमौ (2-8) - भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **भुवः कित्** (उणा. 4-48) इति सूत्रेण मि-प्रत्ययः अयं च कित्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. स.वि. ए.व.।

2442. भूयः (2-20, 6-43, 7-2, 10-1,18, 11-35,39,50, 13-13, 14-1, 15-4, 18-34) - बहु-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्, **बहोर्लोपो भू च बहोः** (पा. सू. 6-4-158) इति ईयसुनः ईकारस्य लोपः, बहुशब्दस्य भू-आदेशः। बहु इत्यत्र बंह्-धातोः (बहि वृद्धौ, भ्वादिः इति शब्दकल्पद्रुमः) **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति उ-प्रत्ययः अनुस्वारस्थानिकस्य नकारस्य च लोपः। इति एकः प्रकारः। भुवे यस्यति इति विग्रहे भू-उपपदात् यस्-धातोः (यसु प्रयत्ने, दिवादिः, सि.कौ. - धा.सं. 1210) बाहुलकात् क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। इति द्वितीयः प्रकारः। अत्र प्रथमप्रकारानुसारं भूयस् इति शब्दः विशेष्यनिघ्नः त्रिलिङ्गः, द्वितीयप्रकारानुसारं तु अव्ययम्। अव्ययम्।

2443. भूः (2-47) - भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति सूत्रेण क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि. ए.व.।

2444. भृगुः (10-25) - नामधेयम्। भ्रस्ज्-धातोः (भ्रस्ज् पाके, तुदादिः, सि.कौ. - धा.सं. 1284) **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** (उणा. 1-28) इति सूत्रेण कु-प्रत्ययः धातोः सकारस्य लोपः सम्प्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2445. भेदम् (17-7, 18-29) - भिद्-धातोः (भिदिर् विदारणे, रुधादिः, सि.कौ. - धा.सं. 1439) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

2446. भेर्यः (1-13) - भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **षिद्गौरादिभ्यश्च** (पा.सू. 4-1-41) इति ङीष्। स्त्री. प्र.वि. ब.व.।

2447. भैक्ष्यम् (2-5) - भिक्षा-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति सूत्रेण ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आकारलोपः। भिक्षा इत्यत्र भिक्ष्-धातोः (भिक्ष भिक्षायामलाभे लाभे च, भ्वादिः, सि.कौ. - धा.सं. 606) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

2448. भोक्ता (9-24, 13-22) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2449. भोक्तारम् (5-29) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. द्वि.वि. ए.व.।

2450. भोक्तुम् (2-5) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अव्ययम्।

2451. भोक्तृत्वे (13-20) - भोक्तुः भावः तस्मिन्, **तस्यभावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। भोक्तृ इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति सूत्रेण तृच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. स.वि. ए.व.।

2452. भोक्ष्यसे (2-37) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) लृट्, लृटः थास्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **थासः से** (पा.सू. 3-4-80) इति से आदेशः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः कृतः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। लृट्. म.वि. ए.व.।

2453. भोगान् (2-5, 3-12) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ब.व.।

2454. भोगाः (1-33, 5-22) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

2455. भोगी (16-14) - भोग-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति सूत्रेण इनि-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

2456. भोगैश्वर्यगतिम् (2-43) - भोगञ्च ऐश्वर्यञ्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, भोगैश्वर्ययोः गतिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ऐश्वर्य इत्यत्र ईश्वरशब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

2457. भौगैश्वर्यप्रसक्तानाम् (2-44) - भोगश्च ऐश्वर्यञ्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, भोगैश्वर्ययोः प्रसक्ताः **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। भोग इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ऐश्वर्य इत्यत्र ईश्वरशब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। प्रसक्त इत्यत्र प्रसक्ति इति शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, प्रसक्ति इत्यत्र प्र-पूर्वकात् सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. ष.वि. ब.व.।

2458. भोगैः (1-32) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ए.व.।

2459. भोजनम् (17-10) - भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति युस्थाने अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

2460. भ्रमति (1-30) - भ्रम्-धातोः (भ्रमु चलने, भ्वादिः, सि.कौ. - धा.सं. 850) लट्, लटः तिप्, **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः** (पा.सू. 3-1-70) इति विकल्पेन श्यन्, श्यनः अभावे (पा.सू. 3-3-18) **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. प्र.पु. ए.व.।

2461. भ्रातॄन् (1-26) - भ्रातृ इति शब्दे भ्राज्-धातोः (भ्राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 181) **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति सूत्रेण तृन् अथवा तृच् इति प्रत्ययः जकारलोपः च निपात्यते। पुं. द्वि.वि. ब.व.।

2462. भ्रामयन् (18-61) - भ्रम्-धातोः (भ्रमु चलने, भ्वादिः, सि.कौ. - धा.सं. 850) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (ग.सू. 1188) अमन्तत्वात् मित्त्वं स्यात्, तदा **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वः स्यात्, परन्तु अत्र उपधायाः वृद्धिः श्रूयते, एषा वृद्धिः आर्षा मन्तव्या, ततः लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शत्रादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इथि शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2463. भ्रुवोः (5-27, 8-10) - भ्रू इत्यत्र भ्रम्-धातोः (भ्रमु चलने, भ्वादिः, सि.कौ. - धा.सं. 850) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्**

(पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ऊ च गमादीनामिति वक्तव्यं लोपश्च** (वा. 4073/74) इति वार्तिकेन मलोपः, अकारस्य ऊ इति आदेशः च। स्त्री. ष.वि. द्वि.व.।

2464. मकरः (10-31) - कृ-धातोः (कृ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, मनुष्याणां करः मकरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति साधुत्वम्, अर्थात् पृषोदरादिगणे शिष्टप्रयोगसामर्थ्यात् मनुष्य-शब्दस्य नुष्य इति भागस्य लोपः भवति म इत्येव गृह्यते। पुं. प्र.वि. ए.व.।

2465. मच्चित्तः (6-14, 18-57,58) - मयि चित्तं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति चित्त-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति इटः निषेधः। पुं. प्र.वि. ए.व.।

2466. मच्चित्ताः (10-9) - मयि चित्तं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति चित्त-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति इटः निषेधः। पुं. प्र.वि. ब.व.।

2467. मणिगणाः (7-7) - मणाीनां गणाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मणि इत्यत्र मण्-धातोः (मण् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 886) **सर्वधातुभ्य इन्** (उणा. 4-117) इति सूत्रेण इन्। गण इत्यत्र अदन्तात् गण-धातोः (गण संख्याने, चुरादिः, सि.कौ. - धा.सं. 1854) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभियो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2468. मतम् (3-31,32, 7-18, 13-2, 18-6) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. द्वि.वि. ए.व.।

2469. मतः (6-32,46,47, 11-18, 18-9) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

2470. मता (3-1, 16-5) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2471. मताः (12-2) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

2472. मतिः (6-36, 18-70,78) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। स्त्री. प्र.वि. ए.व.।

2473. मते (8-26) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, मता औ इत्यवस्थायाम् **औङ आपः** (पा.सू. 7-1-18) इति औ-स्थाने शी-आदेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। स्त्री. प्र.वि. द्वि.व.।

2474. मत्कर्मकृत् (11-55) - मम कर्म मत्कर्म, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति कर्मन्-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, ततः मत्कर्म करोति इति मत्कर्मकृत् इति विग्रहे मत्कर्मन् इति उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2475. मत्कर्मपरमः (12-10) - मम कर्माणि मत्कर्माणि, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति कर्मन्-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। ततः मत्कर्माणि एव परमाणि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, परम इत्यत्र पर-उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2476. मत्तः (7-7,12, 10-5,8, 15-15) - अस्मद्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति तसिल्-प्रत्यये परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अव्ययम्।

2477. मत्परमः (11-55) - अहमेव परमः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति परम-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। परम इत्यत्र पर-उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्**

(पा.सू. 2-2-19) इति समासः, पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2478. मत्परमाः (12-20) - अहमेव परमः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति परम-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। परम इत्यत्र पर-उपपदे मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

2479. मत्परः (2-61, 6-14, 18-57) - अहमेव परः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति पर-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2480. मत्परायणः (9-34) - अहमेव परायणं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति परायण-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। परायण इत्यत्र परम् अयनम् इति विग्रहे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, अयन इत्यत्र अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, अथवा परायण इत्यत्र परा-उपसर्गात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति कर्मणि ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ए.व.।

2481. मत्पराः (12-6) - अहमेव परः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति पर-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, क्र्यादिः, सि.कौ. - धा.सं. 1489) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

2482. मत्प्रसादात् (18-56,58) - मम प्रसादः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति प्रसाद-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। प्रसाद इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

2483. मत्वा (3-18, 10-8, 11-41) - मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वाप्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। अव्ययम्।

2484. मत्संस्थाम् (6-15) - मयि संस्था यस्याः ताम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति संस्था-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। संस्था इत्यत्र सम्पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। सं स्त्री. द्वि.वि. ए.व.।

2485. मत्स्थानि (9-4,5,6) - मयि तिष्ठन्ति तानि, अस्मद् इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति स्थ-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। नपुं. प्र.वि. ब.व.।

2486. मदनुग्रहाय (11-1) - मम अनुग्रहः तस्मै, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति अनुग्रह-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अनुग्रह इत्यत्र **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अनुपूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) अप्-प्रत्ययः। पुं. च.वि. ए.व.।

2487. मदर्थम् (12-10) - मह्यम् इदम्, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति सूत्रेण अस्मद् अर्थ इत्यनयोः समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति अर्थ-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञ्याम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2488. मदर्थे (1-9) - मह्यम् इदम् तस्मिन्, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति सूत्रेण अस्मद् अर्थ इत्यनयोः समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति अर्थ-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञ्याम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. स.वि. ए.व.।

2489. मदर्पणम् (9-27) - मयि अर्पणम्, **सप्तमी** इति योगविभागात् समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति अर्पण-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। अर्पण इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्-आगमः, **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति बहुलं ल्युट्, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. द्वि.वि. ए.व.।

2490. मदम् (18-35) - मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **मदोनुपसर्गे** (पा.सू. 3-3-67) इति सूत्रेण अप्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2491. मदाश्रयः (7-1) - अहम् आश्रयः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति आश्रय-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। आश्रय इत्यत्र आङ्-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

2492. मद्गतप्राणाः (10-9) - मां गताः मद्गताः, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति गत-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। ततः मद्गताः प्राणाः येषां ते इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। प्राण इत्यत्र प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। पुं. प्र.वि. ब.व.।

2493. मद्गतेन (6-47) - मां गतः तेन, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति गत-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. तृ.वि. ए.व.।

2494. मद्भक्तः (9-34, 11-55, 12-14,16, 13-18, 18-65) - मम भक्तः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भक्त-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भक्त इत्यत्र भक्तिरस्य अस्ति इति विग्रहे **अर्शआदिभ्य अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः, भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2495. मद्भक्ताः (7-23) - मम भक्ताः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भक्त-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भक्त इत्यत्र भक्तिरस्य अस्ति इति विग्रहे **अर्शआदिभ्य अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः, भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। पुं. प्र.वि. ब.व.।

2496. मद्भक्तिम् (18-54) - मयि भक्तिः ताम्, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भक्ति-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। स्त्री. द्वि.वि. ए.व.।

2497. मद्भक्तेषु (18-68) - मम भक्ताः तेषु, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भक्त-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भक्त इत्यत्र भक्तिरस्य अस्ति इति विग्रहे **अर्शआदिभ्य अच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः, भक्ति इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (8-4-55) इति चर्त्वम्। पुं. स.वि. ब.व.।

2498. मद्भावम् (4-10, 8-5, 14-19) - मम भावः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भाव-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

2499. मद्भावाय (13-18) - मम भावः तस्मै, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भाव-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. ए.व.।

2500. मद्भावाः (10-6) - मम भावाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति भाव-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2501. मद्याजिनः (9-25) - मां यष्टुं शीलमेषाम् इति विग्रहे अस्मद्-उपपदे यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति याजिन्-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. प्र.वि. ब.व.।

2502. मद्याजी (9-34, 18-65) - मां यष्टुं शीलमस्य इति विग्रहे अस्मद्-उपपदे यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति याजिन्-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2503. मद्योगम् (12-11) - मम योगः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति योग-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

2504. मद्व्यपाश्रयः (18-56) - अहं व्यपाश्रयः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति व्यपाश्रय-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। व्यपाश्रय इत्यत्र वि-अप-आ-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897 **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2505. मधुसूदन (1-35, 2-4, 6-33, 8-2) - मधुं सूदयति इति विग्रहे **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिजन्तात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः। युवोरनाकौ (पा.सू. 7-1-1) इति अनादेशः। पुं. सम्बोधन.वि. ए.व.।

2506. मधुसूदनः (2-1) - मधुं सूदयति इति विग्रहे मधु इति उपपदे सूद्-धातोः (षूद क्षरणे आस्रवणे आप्रवणे घाते च, भ्वादिः, सि.कौ. - धा.सं. 25) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः सूदि इति णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। नन्द्यादिगणे मधुसूदन इति प्रातिपदिकपाठादेव उपपदसंज्ञा, उपपदसमासश्च सिध्यति। मधु इत्यत्र **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** (उणा. 1-18) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः धातोः धकारान्तादेशः च। पुं. प्र.वि. ए.व.।

2507. मध्यम् (10-20,32, 11-16) - मध्य इत्यत्र मध्यशब्दात् **अ साम्प्रतिके** (पा.सू. 4-3-9) इति सूत्रेण अ-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मध्य इति मन् धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययान्तः नकारस्य धकारादेशत्वेन निपात्यते। नपुं. प्र.वि. ए.व.।

2508. मध्ये (1-22,24, 2-10, 8-10, 14-18) - मध्य इत्यत्र मध्यशब्दात् **अ साम्प्रतिके** (पा.सू. 4-3-9) इति सूत्रेण अ-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मध्य इति मन् धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययान्तः नकारस्य धकारादेशत्वेन निपात्यते। नपुं. स.वि. ए.व.।

2509. मनवः (10-6) - **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। पुं. प्र.वि. ब.व.।

2510. मनवे (4-1) - **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। पुं. च.वि. ए.व.।

2511. मनसा (3-6,7, 5-11,13, 6-24, 8-10) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

2512. मनसः (3-42) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। नपुं. पं.वि. ए.व.।

2513. मनः (1-30, 2-60,67, 3-40,42, 5-19, 6-12,14,25,26,34,35, 7-4, 8-12, 10-22, 11-45, 12-2,8, 15-9, 17-11) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2514. मनःप्रसादः (17-16) - मनसः प्रसादः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मनस् इतत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। प्रसाद इत्यत्र प्र-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2515. मनःप्राणेन्द्रियक्रियाः (18-33) - मनश्च प्राणाश्च इन्द्रियाणि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। मनःप्राणेन्द्रियाणां क्रियाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। प्राण इत्यत्र प्रपूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः प्राणि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अथवा प्राणिति अनेन इति **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण प्रपूर्वकात् प्र-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अनितेः** (पा.सू. 8-4-19) इति णत्वम्। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति शप्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ब.व.।

2516. मनःषष्ठानि (15-7) - मनः षष्ठं येषां तानि, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मनस् इत्यत्र मनस् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। षष्ठ इत्यत्र षष्-शब्दात् **तस्य पूरणे डट्** (पा.सू. 5-2-48) इति सूत्रेण डट्, **षट्कतिकतिपयचतुरां थुक्** (पा.सू. 5-2-51) इति सूत्रेण डटः थुक्-आगमः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। षष् इत्यस्य सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सुं. 1147) क्विप्-प्रत्यये **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति साधुत्वम्, अत्र क्विप्-षत्व-आत्व-षुगादयः पृषोदरादित्वादेव ऊह्याः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। नपुं. द्वि.वि. ब.व.।

2517. मनीषिणः (2-51, 18-3) - मनीषा-शब्दात् **व्रीह्यादिभ्यश्च** (पा.सू. 5-2-116) इति इनि-प्रत्ययः। मनीषा इत्यत्र मनसः ईषा इति विच्छेदे **शकन्ध्वादिषु पररूपं वाच्यम्** (वा. 3632) इति पररूपम्, मनस् इत्यत्र मनस् मन्-धातोः (मन ज्ञाने,

दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। ईषा इत्यत्र ईष्-धातोः (ईष उञ्छे, भ्वादिः, सि.कौ. - धा.सं.684) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2518. मनीषिणाम् (18-5) - मनीषा-शब्दात् **व्रीह्यादिभ्यश्च** (पा.सू. 5-2-116) इति इनि-प्रत्ययः। मनीषा इत्यत्र मनसः ईषा इति विच्छेदे **शकन्ध्वादिषु पररूपं वाच्यम्** (वा. 3632) इति पररूपम्, मनस् इत्यत्र मनस् मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। ईषा इत्यत्र ईष्-धातोः (ईष उञ्छे, भ्वादिः, सि.कौ. - धा.सं.684) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ब.व.।

2519. मनुष्यलोके (15-2) - मनुष्याणां लोकः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मनुष्य इत्यत्र मनु-शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति यत्-प्रत्ययः षुगागमश्च, मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) उ-प्रत्ययः, लोक इत्यत्र लोक्-धातोः (लोकृ दर्शने, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। पुं. स.वि. ए.व.।

2520. मनुष्याणाम् (1-44, 7-3) - मनु-शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति यत्-प्रत्ययः षुगागमश्च, मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) उ-प्रत्ययः। पुं. ष.वि. ब.व.।

2521. मनुष्याः (3-23, 4-11) - मनु-शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति यत्-प्रत्ययः षुगागमश्च, मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) उ-प्रत्ययः। पुं. प्र.वि. ब.व.।

2522. मनुष्येषु (4-18, 18-69) - मनु-शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति यत्-प्रत्ययः षुगागमश्च, मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) उ-प्रत्ययः। पुं. स.वि. ब.व.।

2523. मनुः (4-1) - **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं. 1471) उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2524. मनोगतान् (2-55) - मनः गतान्, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. द्वि.वि. ब.व.।

2525. मनोरथम् (16-13) - मनः एव रथः तम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति सूत्रेण असुन्-प्रत्ययः। रथ इत्यत्र **हनिकुषिनीरमिकाशिभ्यः क्थन्** (उणा. 2-2) इति (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 856) क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. द्वि.वि. ए.व.।

2526. मन्तव्यः (9-30) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। पुं. प्र.वि. ए.व.।

2527. मन्त्रहीनम् (17-13) - मन्त्रेन हीनः तम्, **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** (पा.सू. 2-1-31) इति समासः। मन्त्र इत्यत्र मत्र्-धातोः (मत्रि गुप्तपरिभाषणे, चुरादिः, सि.कौ. - धा.सं. 1680) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्-आगमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। हीन इत्यत्र हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईकारः, **ओदितश्च** (पा.सू. 8-2-45) इति तस्य नत्वम्। पुं. द्वि.वि. ए.व.।

2528. मन्त्रः (9-16) - मत्र्-धातोः (मत्रि गुप्तपरिभाषणे, चुरादिः, सि.कौ. - धा.सं. 1680) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्-आगमः, **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

2529. मन्दान् (3-29) - मद्-धातोः (मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु, भ्वादिः, सि.कौ. - धा.सं. 13) **इदितो नुम्धातोः** (पा.सू. 7-1-58) इति नुम्-आगमः, ततः **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

2530. मन्मनाः (9-34, 18-35) - मयि मनः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मनस्-शब्दे परे अस्मद् इत्यस्य मपर्यन्तस्य म इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **यरोऽनुनासिकेऽनुनासिको वा** (पा.सू. 8-4-45) इति दकारस्य नकारः, अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2531. मन्मयाः (4-10) - अस्मद्-शब्दात् **नित्यं वृद्धशरादिभ्यः** (पा.सू. 4-3-144) इति मयट्-प्रत्ययः, **प्रत्ययोत्तरपदयोश्च** (पा.सू. 7-2-98) इति मयट्-प्रत्यये परे अस्मद् इत्यस्य मपर्यन्तस्य मत् इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **यरोऽनुनासिकेऽनुनासिको वा** (पा.सू. 8-4-45) इति दकारस्य नकारः,अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. प्र.वि. ब.व.।

2532. मन्यते (2-19, 3-27, 6-22, 18-32) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लट्, लटः त, मन् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2533. मन्यन्ते (7-24) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लट्, लटः झ, मन् झ, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2534. मन्यसे (2-26, 11-4, 18-59) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लट्, लटः थास्, अथवा कर्मणि लटि मध्यमपुरुषैकवचने रूपम्। मन् थास्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, कर्मणि, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **थासः से** (पा.सू. 3-4-80) इति थासः से-आदेशः। लट्. म.पु. ए.व.।

2535. मन्ये (6-34, 10-14) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लट्, लटः इट्, मन् इट्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. उ.पु. ए.व.।

2536. मन्येत (5-8) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लिङ्, लिङः त, मन् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **लिङः सीयुट्** (पा.सू. 3-4-102) इति सीयुट्-आगमः, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्-आगमश्च, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विधि. प्र.पु. ए.व.।

2537. मम (1-7,29, 2-8, 3-23, 4-11, 7-14,17,24, 8-11, 9-5,11, 10-7,40,41, 11-1,7,49,52, 13-2, 14-2,3, 15-6,7, 18-78) - अस्मद् ङस्, **युष्मदस्मद्भ्यां ङसोश्** (पा.सू. 7-1-27) इति ङसः अश्-आदेशः, **तवममौ ङसि** (पा.सू. 7-2-96) इति ममादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. ए.व.।

2538. मया (1-22, 3-3, 4-3,13, 7-22, 9-4,10, 10-17,39,40, 11-2,4,33,34,41,47, 12-20, 16-13,14,15, 18-63) - अस्मद् टा, **त्वमावेकवचने** (पा.सू. 7-2-89) इति मपर्यन्तस्य मादेशः, **योऽचि** (पा.सू. ) इति दस्य यादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. तृ.वि. ए.व.।

2539. मयि (3-30, 4-35, 3-30,31, 7-1,2,12, 8-7, 9-29, 12-2,6,7,8,8,8,9,14, 13-10, 18-57,68) - अस्मद् ङि, **त्वमावेकवचने** (पा.सू. 7-2-89) इति मपर्यन्तस्य मादेशः, **योऽचि** (पा.सू. ) इति दस्य यादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. स.वि. ए.व.।

2540. मरणात् (2-34) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. पं.वि. ए.व.।

2541. मरीचिः (10-21) - नामधेयम्। मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **मृकणिभ्यामीचिः** (उणा. 4-70) इति सूत्रेण ईचि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2542. मरुतः (11-6,22) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **मृग्रोरुतिः** (पा.सू. 1-94) इति उत्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

2543. मरुताम् (10-21) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **मृग्रोरुतिः** (पा.सू. 1-94) इति उत्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ब.व.।

2544. मर्त्यलोकम् (9-21) - मर्त्यानां लोकः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मर्त्य इत्यत्र मर्ते भवः इति विग्रहे मर्त इति शब्दात् **दिगादिभ्यो यत्** (पा.सू. 4-3-54) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। मर्त इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (उणा. 3-86) इति तन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2545. मर्त्येषु (10-3) - मर्ते भवः इति विग्रहे मर्त इति शब्दात् **दिगादिभ्यो यत्** (पा.सू. 4-3-54) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। मर्त इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (उणा. 3-86) इति तन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. स.वि. ब.व.।

2546. मलेन (3-38) - मल्-धातोः (मल धारणे, भ्वादिः, सि.कौ. - धा.सं. 493) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. स.वि. ए.व.।

2547. महतः (2-40) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। नपुं. पं.वि. ए.व.।

2548. महता (4-2) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। पुं. तृ.वि. ए.व.।

2549. महति (1-14) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। पुं. स.वि. ए.व.।

2550. महतीम् (1-3) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते, **उगितश्च** (पा.सू. 4-1-6) इति ङीप्। स्त्री. द्वि.वि. ए.व.।

2551. महत् (1-45, 11-23, 14-3, 14-4) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। नपुं. द्वि.वि. ए.व.।

2552. महर्षयः (10-2,6) - महान्तः च एते ऋषयश्च, **सन्महत्परमोत्तमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2553. महर्षिसिद्धसंघाः (11-21) - महर्षयश्च सिद्धाश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, महर्षिसिद्धानां सङ्घाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। महर्षि इत्यत्र महान् च असौ ऋषिश्च, **सन्महत्परमोत्तमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। सिद्ध इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। सङ्घ इत्यत्र सम्पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्धौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. प्र.वि. ब.व.।

2554. महर्षीणाम् (10-2,25) - महान्तः च एते ऋषयश्च तेषाम्, **सन्महत्परमोत्तमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

2555. महात्मनः (11-12, 18-74) - महान् आत्मा यस्य तस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. ष.वि. ए.व.।

2556. महात्मन् (11-20,37) - महान् आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. सम्बो.वि. ए.व.।

2557. महात्मा (7-19, 11-50) - महान् आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2558. महात्मानः (8-15, 9-23) - महान् आत्मा येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

2559. महानुभावान् (2-5) - महान् अनुभावो यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। अनुभाव इत्यत्र अनु-पूर्वकात् भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

2560. महान् (9-6, 18-77) - महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। पुं. प्र.वि. ए.व.।

2561. महापाप्मा (2-37) - महत् पाप्म यस्मिन् सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। पाप्मन् इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **नामन्-सीमन्-व्योमन्-रोमन्-लोमन्-पाप्मन्-ध्यामन्** (उणा. 4-150) इति सूत्रेण मनिन्-प्रत्ययस्य धातोः पुगागमस्य च निपातनात् सिद्धम्। पुं. प्र.वि. ए.व.।

2562. महाबाहुः (1-18) - महान्तौ बाहू यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीयदे‌ेशीयेषु** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति

**वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। बाहु इत्यत्र बाध्-धातोः (बाधृ लोडने, भ्वादिः, सि.कौ. - धा.सं. 5) **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति कु-प्रत्ययः धातोः हकारान्तादेशः च। पुं. प्र.वि. ए.व.।

2563. महाबाहो (2-26,68, 3-28,43, 5-3,6, 6-35,38, 7-5, 10-1, 11-23, 14-5, 18-1,13) - महान्तौ बाहू यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीयदेशीयेषु** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। बाहु इत्यत्र बाध्-धातोः (बाधृ लोडने, भ्वादिः, सि.कौ. - धा.सं. 5) **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति कु-प्रत्ययः धातोः हकारान्तादेशः च। पुं. सम्बो.वि. ए.व.।

2564. महाभूतानि (13-5) - महान्ति भूतानि, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ब.व.।

2565. महायोगेश्वरः (11-9) - योगस्य ईश्वरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। महान् योगेश्वरः **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं.1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2566. महारथः (1-4,17) - महान् रथः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। रथ इत्यत्र **हनिकुषिनरिकाशिभ्यः क्थन्** (उणा. 2-2) इति (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 856) क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

2567. महारथाः (1-6, 2-35) - महान् रथः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। रथ इत्यत्र **हनिकुषिनरिकाशिभ्यः क्थन्** (उणा. 2-2) इति (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 856) क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

2568. महाशङ्खम् (1-15) - महान् शङ्खः तम्, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। शङ्ख इत्यत्र शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **शमेः खः** (उणा. 1-102) इति सूत्रेण ख-प्रत्ययः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। पुं. द्वि.वि. ए.व.।

2569. महाशनः (3-37) - महत् अशनं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। अशन इत्यत्र अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। पुं. प्र.वि. ए.व.।

2570. महिमानम् (11-41) - अत्र महिमन् इति मूल-शब्दः, महत्-शब्दात् **पृथ्वादिभ्यः इमनिज्वा** (पा.सू. 5-1-122) इति सूत्रेण इमनिच्-प्रत्ययः, **टेः** (पा.सू. 6-4-155) इति टेः लोपः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। पुं. द्वि.वि. ए.व.।

2571. महीकृते (1-35) - मह्याः कृते, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मही इत्यत्र मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **कृदिकारादक्तिनः** (ग.सू. 50) इति ङीष्। कृते इति कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) क्विप्-प्रत्ययान्तम् एदन्तम् अव्ययं चादिगणे अन्तर्भाव्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। अव्ययम्।

2572. महीक्षिताम् (1-25) - महीं क्षयति इति विग्रहे मही इति उपपदे क्षि-धातोः (क्षि क्षयैश्वर्ययोः, भ्वादिः इति कविकल्पद्रुमः) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। मही इत्यत्र मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **कृदिकारादक्तिनः** (ग.सू. 50) इति ङीष्। पुं. ष.वि. ब.व.।

2573. महीपते (1-21) - मह्याः पतिः **षष्ठी** (पा.सू. 2-2-8) इति समासः। मही इत्यत्र मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **कृदिकारादक्तिनः** (ग.सू. 50) इति ङीष्। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डति** (उणा. 4-57) इति डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. सम्बो.वि. ए.व.।

2574. महीम् (2-37) - मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **कृदिकारादक्तिनः** (ग.सू. 50) इति ङीष्। स्त्री. द्वि.वि. ए.व.।

2575. महेश्वरः (13-22) - महान् च असौ ईश्वरश्च, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. -

धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2576. महेष्वासाः (1-4) - महान् इष्वासः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। इष्वास इत्यत्र इषवः अस्यन्ते अनेन इति विग्रहे इषु इति उपपदे अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **हलश्च** (पा.सू. 3-3-121) इति सूत्रेण घञ्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, इषु इत्यत्र ईष्-धातोः (ईष गतीहिंसादर्शनेषु, भ्वादिः, सि.कौ. - धा.सं. 611) **ईषेः किच्च** (उणा. 1-13) इति सूत्रेण उ-प्रत्ययः ईकारस्य च इकारः। पुं. प्र.वि. ब.व.।

2577. मंस्यन्ते (2-35) - मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) कर्तरि लृट्, लृटः झ, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः क्रियते। लट्. प्र.पु. ब.व.।

2578. मा (2-3,47,47,47, 11-34,49,49, 16-5, 18-66) - मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **संपदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

2579. माता (9-17) - मातृ इति **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति निपातनात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) तृन्-प्रत्यये सिद्धम्। स्त्री. प्र.वि. ए.व.।

2580. मातुलान् (1-26) - **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धम्, अत्र मातृ-शब्दात् **मातुर्डुलच्** (वा. 2233) इति वार्तिकेन डुलच्-प्रत्ययः निपात्यते, **टेः** (पा.सू. 6-4-143) इति लोपः, मातृ इति **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति निपातनात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) तृन्-प्रत्यये सिद्धम्। पुं. द्वि.वि. ब.व.।

2581. मातुलाः (1-34) - **पितृव्यमातुलमातामहपितामहाः** (पा.सू. 4-2-36) इति निपातनात् सिद्धम्, अत्र मातृ-शब्दात् **मातुर्डुलच्** (वा. 2233) इति वार्तिकेन डुलच्-प्रत्ययः निपात्यते, **टेः** (पा.सू. 6-4-143) इति लोपः, मातृ इति **नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** (उणा. 2-95) इति निपातनात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) तृन्-प्रत्यये सिद्धम्। पुं. प्र.वि. ब.व.।

2582. मात्रास्पर्शाः (2-14) - मात्राणां स्पर्शाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मात्रा इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **हुयामाश्रुभसिभ्यस्त्रन्** (उणा. 4-167) इति त्रन्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्पर्श इत्यत्र स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

2583. माधव (1-37) - मायाः धव!, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मा इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। धव इत्यत्र धू-धातोः (धू विधूनने, तुदादिः, सि.कौ. - धा.सं. 1398) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः**

(पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, अथवा मधोः अपत्यम् इति विग्रहे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, मधु इत्यत्र **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** (उणा. 1-18) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः धातोः धकारान्तादेशः च। पुं. सम्बो.वि. ए.व.।

2584. माधवः (1-14) - मायाः धवः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मा इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। धव इत्यत्र धू-धातोः (धू विधूनने, तुदादिः, सि.कौ. - धा.सं. 1398) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, अथवा मधोः अपत्यम् इति विग्रहे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, मधु इत्यत्र **फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च** (उणा. 1-18) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः धातोः धकारान्तादेशः च। पुं. प्र.वि. ए.व.।

2585. मानवः (6-17, 18-46) - मनोः अपत्यम् इति विग्रहे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2586. मानवाः (3-31) - मनोः अपत्यानि, **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। पुं. प्र.वि. ब.व.।

2587. मानसम् (17-16) - मनस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। नपुं. प्र.वि. ए.व.।

2588. मानसाः (10-6) - मनस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। पुं. प्र.वि. ब.व.।

2589. मानापमानयोः (12-18, 14-25) - मानश्च अपमानञ्च तयोः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। मान इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। अपमान इत्यत्र अप-पूर्वकात् मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. स.वि. द्वि.व.।

2590. मानुषम् (11-51) - मनु इति शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति अञ्-प्रत्ययः, षुगागमश्च, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

2591. मानुषीम् (9-11) - मनु इति शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति अञ्-प्रत्ययः, षुगागमश्च, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **जातेरस्त्रीविषयादयोपधात्** (पा.सू. 4-1-63) इति ङीष्। मनु इत्यत्र

**शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

2592. मानुषे (4-12) - मनु इति शब्दात् **मनोर्जातावञ्यतौ षुक् च** (पा.सू. 4-1-161) इति अञ्-प्रत्ययः, षुगागमश्च, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनु इत्यत्र **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति सूत्रेण मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) उ-प्रत्ययः। पुं. स.वि. ए.व.।

2593. मामकम् (15-12) - अस्मद् इति शब्दात् **युष्मदस्मदोरन्यतरस्यां खञ् च** (पा.सू. 4-3-1) इति अण्-प्रत्ययः, **तवकममकावेकवचने** (पा.सू. 4-3-3) इति अस्मद्-शब्दस्य ममकादेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। नपुं. द्वि.वि. ए.व.।

2594. मामकाः (1-1) - अस्मद् इति शब्दात् **युष्मदस्मदोरन्यतरस्यां खञ् च** (पा.सू. 4-3-1) इति अण्-प्रत्ययः, **तवकममकावेकवचने** (पा.सू. 4-3-3) इति अस्मद्-शब्दस्य ममकादेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। पुं. प्र.वि. ब.व.।

2595. मामिकाम् (9-7) - अस्मद् इति शब्दात् **युष्मदस्मदोरन्यतरस्यां खञ् च** (पा.सू. 4-3-1) इति अण्-प्रत्ययः, **तवकममकावेकवचने** (पा.सू. 4-3-3) इति ममकादेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **मामकनरकयोरुपसङ्ख्यानम्** (वा. 4524) इति ककारात् पूर्वम् अकारस्य इकारादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। स्त्री. द्वि.वि. ए.व.।

2596. मायया (7-25, 18-61)- मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **माछाससिभ्यो यः** (उणा. 4-109) इति यप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

2597. माया (7-14) - मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **माछाससिभ्यो यः** (उणा. 4-109) इति यप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2598. मायाम् (7-14) - मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **माछाससिभ्यो यः** (उणा. 4-109) इति यप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

2599. मारुतः (2-23) - मरुत् शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मरुत् इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **मृग्रोरुतिः** (पा.सू. 1-94) इति उत्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2600. मार्गशीर्षः (10-35) - मृगशिरसा युक्ता पौर्णमासी मार्गशीर्षी, मृगशिरस् इति शब्दात् **नक्षत्रेण युक्तः कालः** (पा.सू. 4-2-3) इति अण्-प्रत्ययः, **अचि शीर्षः** (पा.सू. 6-1-62) इति शिरसः शीर्षादेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, मार्गशीर्षी पौर्णमासी यस्मिन् मासे सः मार्गशीर्ष इति विग्रहे मार्गशीर्षी इति शब्दात् **सास्मिन् पौर्णमासी** (पा.सू. 4-2-21) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति पर्जन्यवल्लक्षणप्रवृत्त्या आदिवृद्धिः। मृगशिरस् इत्यत्र इत्यत्र मृगस्य शिरः **षष्ठी** (पा.सू. 2-2-8) इति समासः, ततः मृगशिर इव शिरः यस्य इति विग्रहे **सप्तम्युपमानपूर्वपदस्य उत्तरपदलोपश्च वक्तव्यः** (वा. 1362) इति समासः, उत्तरपदलोपश्च। मृग इत्यत्र मृग-धातोः (मृग अन्वेषणे, चुरादिः, सि.कौ. - धा.सं. 1900) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, धातोः अदन्तत्वात् तस्य अकारस्य **अतो लोपः** (पा.सू. 6-4-48) इति लोपे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते लुप्तस्य अकारस्य

**अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन गुणो न, ततः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। शिरस् इत्यत्र श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **श्रयतेः स्वाङ्गे शिरः किच्च** (उणा. 4-193) इति असुन्-प्रत्ययः धातोः च शिरादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2601. मार्दवम् (16-2) - मृदु-शब्दात् **पृथ्वादिभ्यः इमनिज्वा** (5-1-122) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। मृदु इत्यत्र म्रद्-धातोः (म्रद् मर्दने, भ्वादिः, सि.कौ. - धा.सं. 767) **प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** (उणा. 1-28) इति कु-प्रत्ययः संप्रसारणं च, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

2602. मासाः (8-24,25) - मस्-धातोः (मसी परिणामे, दिवादिः, सि.कौ. - धा.सं. 1221) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. प्र.वि. ब.व.।

2603. मासानाम् (10-35) - मस्-धातोः (मसी परिणामे, दिवादिः, सि.कौ. - धा.सं. 1221) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. ष.वि. ब.व.।

2604. माहात्म्यम् (11-2) - महात्मनः भावः, महात्मन् इति शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। महात्मन् इत्यत्र महान् आत्मा यस्य सः इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **आन्महतः समानाधिकरणजातीययोः** (पा.सू. 6-3-46) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

2605. माम् (1-46, 2-7, 3-1, 4-9,10,11,13,14,14, 5-29, 6-30,31,47, 7-1,3,10,13,14,15,16,18,19,23,24,25,26,28,29,30,30, 8-5,7,7,13,14,15,16, 9-3,9,11,13,14,14,15,20,22,23,24,25,28,29,30,32,34,34, 10-3,8,9,10,14,24,27, 11-8,53,55, 12-2,4,6,9, 13-2, 14-26, 15-19,19, 16-18,20, 17-6, 18-55,55,65,65,66,68) - अस्मद् अम्, **त्वमावेकवचने** (पा.सू. 7-2-89) इति मपर्यन्तस्य म-आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **द्वितीयायां च** (पा.सू. 7-2-87) इति आकारादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2606. मित्रद्रोहे (1-38) - मित्रस्य द्रोहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मित्र इत्यत्र मिद्-धातोः (ञिमिदा स्नेहने, भ्वादिः, सि.कौ. - धा.सं. 743) **अमिचिमिदिशसिभ्यः क्त्रः** (उणा. 4-164) इति क्त्र-प्रत्ययः, **खरि च** (8-4-55) इति दकारस्य तकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। द्रोह इत्यत्र द्रुह्-धातोः (द्रुह जिघांसायाम्, दिवादिः, सि.कौ. - धा.सं. 1197) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ए.व.।

2607. मित्रारिपक्षयोः (14-25) - मित्रं च अरिश्च मित्रारी, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, मित्रार्योः पक्षौ तयोः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मित्र इत्यत्र मिद्-धातोः (ञिमिदा स्नेहने, भ्वादिः, सि.कौ. - धा.सं. 743) **अमिचिमिदिशसिभ्यः क्त्रः** (उणा. 4-164) इति क्त्र-प्रत्ययः, **खरि च** (8-4-55) इति दकारस्य तकारः, **पुगन्तलघूपधस्य च**

(पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः अरि इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पक्ष इत्यत्र पक्ष्-धातोः (पक्ष परिग्रहे, चुरादिः, सि.कौ. - धा.सं. 1550) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. द्वि.व.।

2608. मित्रे (12-18) - मिद्-धातोः (ञिमिदा स्नेहने, भ्वादिः, सि.कौ. - धा.सं. 743) **अमिचिमिदिशसिभ्यः क्रः** (उणा. 4-164) इति क्र-प्रत्ययः, **खरि च** (8-4-55) इति दकारस्य तकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. स.वि. ए.व.।

2609. मिथ्या (18-59) - मिथ्या इति मथ्-धातोः (मथे विलोडने, भ्वादिः, सि.कौ. - धा.सं. 848) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण यत्-प्रत्ययान्तम् आकारान्तत्वेन निपात्यते। अव्ययम्।

2610. मिथ्याचारः (3-6) - मिथ्या आचारः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मिथ्या इति मथ्-धातोः (मथे विलोडने, भ्वादिः, सि.कौ. - धा.सं. 848) **अघ्न्यादयश्च** (उणा. 4-111) इति सूत्रेण यत्-प्रत्ययान्तम् आकारान्तत्वेन निपात्यते। आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. प्र.वि. ए.व.।

2611. मिश्रम् (18-12) - मिश्र-धातोः (मिश्र सम्पर्के, चुरादिः, सि.कौ. - धा.सं. 1921) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभियो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

2612. मुक्तसङ्गः (3-9, 18-23) - मुक्तः सङ्गः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मुक्त इत्यत्र मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. प्र.वि. ए.व.।

2613. मुक्तस्य (4-23) - मुक्त इत्यत्र मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ए.व.।

2614. मुक्तम् (18-40) - मुक्त इत्यत्र मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

2615. मुक्तः (5-28, 12-15, 18-71) - मुक्त इत्यत्र मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2616. मुक्त्वा (8-5) - मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

2617. मुखम् (1-29) - खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. प्र.वि. ए.व.।

2618. मुखानि (11-25) - खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. द्वि.वि. ब.व.।

2619. मुखे (4-32) - खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः नपुं. स.वि. ए.व.।

2620. मुख्यम् (10-24) - मुखम् इव इति विग्रहे मुख इति शब्दात् **शाखादिभ्यो यत्** (पा.सू. 5-3-103) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ए.व.।

2621. मुच्यन्ते (3-13,31) - मुच्-धातोः (मुच्लृ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) कर्मणि लट्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम् इत्यतः लटः झ, मुच् झ, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ब.व.।

2622. मुनयः (14-1) - **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

2623. मुनिः (2-56, 5-6,28, 10-26) - **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2624. मुनीनाम् (10-37) - **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. ष.वि. ब.व.।

2625. मुनेः (2-69, 6-3) - **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. ष.वि. ए.व.।

2626. मुमुक्षुभिः (4-15) - मोक्तुमिच्छति, मुच्-धातोः (मुच्लृ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-9-1) इति धातोः द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति अभ्यासस्य आदेः हलः शेषः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उप्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः। पुं. तृ.वि. ब.व.।

2627. मुहुः (18-76,76) - अव्ययम्, मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) बाहुलकाद् उस्-प्रत्ययः। अव्ययम्।

2628. मुह्यति (2-13, 8-27) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) लट्, लटः तिप्। **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङित्वात् **पुगन्तलघूपधस्य च** (पा.सू. 7-4-86) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। लट्. प्र.पु. ए.व.।

2629. मुह्यन्ति (5-15) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) लट्, लटः झि, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङित्वात् **पुगन्तलघूपधस्य च** (पा.सू. 7-4-86) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्. प्र.पु. ब.व.।

2630. मूढग्राहेण (17-19) - मूढः ग्राहः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। मूढ इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **यस्य विभाषा** (पा.सू. 7-2-15) इति प्राप्तस्य इटः अभावः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य वा घकारः, तदभावे **हो ढः** (पा.सू. 8-2-31) इति ढकारः, मुढ् त, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। ग्राह इत्यत्र ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **विभाषा ग्रहः** (पा.सू. 3-1-143) इति सूत्रेण ण-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। पुं. तृ.वि. ए.व.।

2631. मूढयोनिषु (14-15) - मूढाः च इमाः योनयः च, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। मूढ इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **यस्य विभाषा** (पा.सू. 7-2-15) इति प्राप्तस्य इटः अभावः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य वा घकारः, तदभावे **हो ढः** (पा.सू. 8-2-31) इति ढकारः, मुढ् त, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। योनि इत्यत्र **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 5-51) इति सूत्रेण यु-धातोः (यु मिश्रणेमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। इ स्त्री. स.वि. ब.व.।

2632. मूढः (7-25) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **यस्य विभाषा** (पा.सू. 7-2-15) इति प्राप्तस्य इटः अभावः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य वा घकारः, तदभावे **हो ढः** (पा.सू. 8-2-31) इति ढकारः, मुढ् त, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। पुं. प्र.वि. ए.व.।

2633. मूढः (7-25, 9-11, 16-20) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **यस्य विभाषा** (पा.सू. 7-2-15) इति प्राप्तस्य इटः अभावः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य वा घकारः, तदभावे **हो ढः** (पा.सू. 8-2-31) इति ढकारः, मुढ् त, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। पुं. प्र.वि. ब.व.।

2634. मूर्तयः (14-4) - मूर्छ्-धातोः (मूर्छा मोहसमुच्छ्राययोः, भ्वादिः, सि.कौ. - धा.सं. 212) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **राल्लोपः** (पा.सू. 6-4-21) इति छस्य लोपः। स्त्री. प्र.वि. ब.व.।

2635. मूर्ध्नि (8-12) - **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्जन्मातरिश्वन्मघवन्निति** (उणा. 1-157) इति सूत्रे प्रकारवाचकस्य इति-पदस्य ग्रहणसामर्थ्यात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) मूर्धन् इति

शब्दः अपि निपातनात् सिद्धः भवति, अत्र धातोः कनिन्-प्रत्ययः, उकारस्य दीर्घः, धातोः रुक् धकारान्तादेशः च निपात्यते। पुं. स.वि. ए.व.।

2636. मूलानि (15-2) - मूल्-धातोः (मूल प्रतिष्ठायाम्, भ्वादिः, सि.कौ. - धा.सं.529) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। नपुं. प्र.वि. ब.व.।

2637. मृगाणाम् (10-30) - मृग-धातोः (मृग अन्वेषणे, चुरादिः, सि.कौ. - धा.सं. 1900) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, धातोः अदन्तत्वात् तस्य अकारस्य **अतो लोपः** (पा.सू. 6-4-48) इति लोपे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते लुप्तस्य अकारस्य **अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन गुणो न, ततः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. ष.वि. ब.व.।

2638. मृगेन्द्रः (10-30) - मृगाणाम् इन्द्रः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। मृग इत्यत्र मृग-धातोः (मृग अन्वेषणे, चुरादिः, सि.कौ. - धा.सं. 1900) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, धातोः अदन्तत्वात् तस्य अकारस्य **अतो लोपः** (पा.सू. 6-4-48) इति लोपे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते लुप्तस्य अकारस्य **अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन गुणो न, ततः **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2639. मृतस्य (2-27) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. ष.वि. ए.व.।

2640. मृतम् (2-26) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

2641. मृत्युसंसारवर्त्मनि (9-3) - मृत्युश्च संसारश्च मृत्युसंसारौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, मृत्युसंसारयोः वर्त्म **षष्ठी** (पा.सू. 2-2-8) इति समासः। मृत्यु इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। संसार इत्यत्र सम्-पूर्वकात् सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। वर्त्मन् इत्यत्र वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **सर्वधातुभ्यो मनिन्** (उणा. 1-144) इति सूत्रेण मनिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. स.वि. ए.व.।

2642. मृत्युसंसारसागरात् (12-7) - संसार एव सागरः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। मृत्युयुक्तः संसारसागरः, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः। मृत्यु इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। संसार इत्यत्र सम्-पूर्वकात् सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-

प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। सागर इत्यत्र सगर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः। सगर इत्यत्र गरेण सह इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अव्ययम् इदम्, गर इत्यत्र गॄ-धातोः (गॄ निगरणे तुदादिः, सि.कौ. - धा.सं. 1410) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. पं.वि. ए.व.।

2643. मृत्युम् (13-25) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

2644. मृत्युः (2-27, 9-19, 10-34) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **भुजिमृङ्भ्यां युक्त्युकौ** (उणा. 3-21) इति त्युक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2645. मे (1-21,29,30,43, 2-7, 3-,2,22,31,32, 4-3,5,9,14, 5-1, 6-30,36,39,47, 7-4,5,18, 9-5,26,29,31, 10-1,2,13,18,19, 11-4,5,8,18,31,45,45,47,49, 12-2,14,15,16,17,19,20, 13-3,16,6,13, 18-4,6,13,36,50,64,64,65,69,69,70,77) - पदात् परस्य मम इति षष्ठ्यन्तस्य पदस्य स्थाने **तेमयावेकवचनस्य** (पा.सू. 8-1-22) इति सूत्रेण मे-आदेशः। मम इत्यत्र अस्मद्-शब्दात् ङस्, **युष्मदस्मद्भ्यां ङसोऽश्** (पा.सू. 7-1-27) इति ङसः अश्-आदेशः, **तवममौ ङसि** (पा.सू. 7-2-96) इति ममादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. ए.व.।

2646. मेधा (10-34) - मेध्-धातोः (मेधृ मेधाहिंसनयोः सङ्गमे च, भ्वादिः, सि.कौ. - धा.सं. 870) **गुरोश्च हलः** (पा.सू. 3-3-103) इति सूत्रेण अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। स्त्री. प्र.वि. ए.व.।

2647. मेधावी (18-10) - मेधा-शब्दात् **अस्मायामेधास्रजो विनिः** (पा.सू. 5-2-121) इति सूत्रेण विनि-प्रत्ययः। मेधा इत्यत्र मेध्-धातोः (मेधृ मेधाहिंसनयोः सङ्गमे च, भ्वादिः, सि.कौ. - धा.सं. 870) **गुरोश्च हलः** (पा.सू. 3-3-103) इति सूत्रेण अप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

2648. मेरुः (10-23) - मि-धाातोः (डुमिञ् प्रक्षेपणे, स्वादिः, सि.कौ. - धा.सं. 1250) **मिपीभ्यां रुः** इति (उणा. 4-101) इति रुप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2649. मैत्रः (12-13) - मित्रस्य भाव इत्यर्थे मित्र-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति मित्रशब्दस्य अकारस्य लोपः, मित्र इत्यत्र मिद्-धातोः (ञिमिदा स्नेहने, भ्वादिः, सि.कौ. - धा.सं. 743) **अमिचिमिदिशसिभ्यः क्रः** (उणा. 4-164) इति क्र-प्रत्ययः, **खरि च** (8-4-55) इति दकारस्य तकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2650. मोक्षाकाङ्क्षिभिः (17-25) - मोक्षम् आकाङ्क्षन्ति, मोक्ष इत्युपपदे आङ्पूर्वकात् काङ्क्ष्-धातोः (काक्षि काङ्क्षायाम्, भ्वादिः, सि.कौ. - धा.सं. 667) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। मोक्ष इत्यत्र मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ब.व.।

2651. मोक्षपरायणः (5-28) - मोक्षः परायणं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मोक्ष इत्यत्र मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। परायण इत्यत्र परम् अयनम् इति विग्रहे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, तनादिः, सि.कौ. - धा.सं. 1463) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अयन इत्यत्र अय्-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, अथवा परायण इत्यत्र परा-उपसर्गात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति कर्मणि ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ए.व.।

2652. मोक्षयिष्यामि (18-66) - मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, तस्मात् णिजन्तात् लृट्, लृटः मिप्। **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, मोक्षि इ स्य मि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लृट्. उ.पु. ए.व.।

2653. मोक्षम् (18-30) - मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

2654. मोक्ष्यसे (4-16, 9-1,28) - मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) लृट्, लृटः थास्, मुच् थास्, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, **स्यतासीलृलुटोः** (पा.सू. 3-1-33) इति स्य, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः क्रियते, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। लृट्. म.पु. ए.व.।

2655. मोघकर्माणः (9-12) - मोघानि कर्माणि येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मोघ इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

2656. मोघज्ञानाः (9-12) - मोघं ज्ञानं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मोघ इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। ज्ञान इत्यत्र ज्ञा-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ब.व.।

2657. मोघम् (3-16) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

2658. मोघाशाः (9-12) - मोघाः आशाः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। मोघा इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आशा इत्यत्र

आङ्पूर्वकात् अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2659. मोदिष्ये (16-15) - मुद्-धातोः (मुद हर्षे, भ्वादिः, सि.कौ. - धा.सं. 16) कर्तरि लृट्, लृटः इट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. उ.पु. ए.व.।

2660. मोहकलिलम् (2-52) - मोहः एव कलिलम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। कलिल इत्यत्र कल्-धातोः (कल शब्दसङ्ख्यानयोः, भ्वादिः, सि.कौ. - धा.सं. 497) **सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्** (उणा. 1-58) इति सूत्रेण इलच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2661. मोहजालसमावृताः (16-16) - मोह एव जालम् **मयूरव्यंसादयश्च** (पा.सू. 2-1-72) इति समासः, मोहजालेन समावृताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। जाल इत्यत्र जल्-धातोः (जल अपवारणे, चुरादिः, सि.कौ. - धा.सं. 1543) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। समावृत इत्यत्र सम्-आङ् इत्युपसर्गद्वयपूर्वकात् वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-4-86) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

2662. मोहनम् (14-8, 18-39) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. द्वि.वि. ए.व.।

2663. मोहयसि (3-2) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, मोहि इति अस्मात् लट्, लटः सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, मोहि शप् सि, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, मोहे अ सि, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। लट्. म.पु. ए.व.।

2664. मोहम् (4-35, 14-22) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

2665. मोहः (11-1, 14-13, 18-73) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

2666. मोहात् (16-10, 18-7,25,60) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. पं.वि. ए.व.।

2667. मोहितम् (7-13) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति गुणः, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

2668. मोहिताः (4-16) - मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति गुणः, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2669. मोहिनीम् (9-12) - मोहः अस्याः अस्ति ताम् इति विग्रहे मोह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मोह इत्यत्र मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। स्त्री. द्वि.वि. ए.व.।

2670. मौनम् (10-38, 17-16) - मुनि-शब्दात् **इगन्ताच्च लघुपूर्वात्** (पा.सू. 5-1-131) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः। मुनि इत्यत्र **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

2671. मौनी (12-19) - मौनम् अस्य अस्तीति **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। मौन इत्यत्र मुनि-शब्दात् **इगन्ताच्च लघुपूर्वात्** (पा.सू. 5-1-131) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः। मुनि इत्यत्र **मनेरुच्च** (उणा. 4-123) इति मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) इन्-प्रत्ययः कित् धातोः च अकारस्य उकारादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2672. म्रियते (2-20) - मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) कर्तरि लट्, **म्रियतेर्लुङ्लिङोश्च** (पा.सू. 1-3-61) इति सूत्रेण आत्मनेपदम् इत्यतः लटः त, मृ त, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति शप्रत्ययः, , **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2673. यक्षरक्षसाम् (10-23) - यक्षाश्च रक्षांसि च तेषाम्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यक्ष इत्यत्र यक्ष्-धातोः (यक्ष पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1693) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अकर्तरि चकारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। रक्षस् इत्यत्र रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **सर्वधातुभ्योसुन्** (उणा. 4-189) इति सूत्रेण असुन्-प्रत्ययः। नपुं. ष.वि. ब.व.।

2674. यक्षरक्षांसि (17-4) - यक्षाश्च रक्षांसि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यक्ष इत्यत्र यक्ष्-धातोः (यक्ष पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1693) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अकर्तरि चकारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। रक्षस् इत्यत्र रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **सर्वधातुभ्योसुन्** (उणा. 4-189) इति सूत्रेण असुन्-प्रत्ययः। नपुं. द्वि.वि. ब.व.।

2675. यक्ष्ये (16-15) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) लृट्, लृटः इट्, यज् इट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** इति इटः निषेधः, **चोः कुः** इति कुत्वम्, **खरि च** इति चर्त्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति

सस्य षत्वम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लृट्. उ.पु. ए.व.।

2676. यच्छ्रद्धः (17-3) - या श्रद्धा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति या इत्यस्य पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति श्रद्धा इत्यस्य आकारस्य ह्रस्वः। या इत्यत्र यद्-शब्दात् सु-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः, यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104 इति सूत्रेण अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। पुं. प्र.वि. ए.व.।

2677. यजन्तः (9-15) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ब.व.।

2678. यजन्ति (9-23) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) लट्, लटः झि, यज् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। लट्. प्र.पु. ब.व.।

2679. यजन्ते (4-12, 9-23, 16-17, 17-1,1,4) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) लट्, लटः झ।, यज् झ, कर्तरि शप् (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2680. यजुः (9-17) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **अर्तिपॄवपियजितनिधनितपिभ्यो नित्** (उणा. 2-117) इति उसि-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2681. यज्ञक्षपितकल्मषाः (4-30) - यज्ञेन क्षपितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। यज्ञक्षपितं कल्मषं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। क्षपित इत्यत्र क्षप्-धातोः (क्षप शक्तौ, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। कल्मष इत्यत्र कर्म स्यति इति विग्रहे कर्मन् इति उपपदे सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सुं. 1147) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति सूत्रेण साधुत्वम्, तस्मादेव रेफस्य लत्वम्, षत्वञ्च, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

2682. यज्ञतपसाम् (5-29) - यज्ञाः च तपांसि च तेषाम्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति

नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-118) इति असुन्-प्रत्ययः। नपुं. ष.वि. ब.व.।

2683. यज्ञतपःक्रियाः (17-25) - यज्ञाः च तपांसि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यज्ञतपांसि इति क्रियाः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-118) इति असुन्-प्रत्ययः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति श-प्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

2684. यज्ञदानतपःकर्म (18-3,5) - यज्ञश्च दानं च तपश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यज्ञदानतपांसि इति कर्म, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। दान इत्यत्र दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-118) इति असुन्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

2685. यज्ञदानतपःक्रियाः (17-24) - यज्ञश्च दानञ्च तपश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यज्ञदानतपांसि इति क्रियाः **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। दान इत्यत्र दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। तपस् इत्यत्र तप्-धातोः (तप सन्तापे, भ्वादिः, सि.कौ. - धा.सं. 985) **सर्वधातुभ्योऽसुन्** (उणा. 4-118) इति असुन्-प्रत्ययः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति श-प्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

2686. यज्ञभाविताः (3-12) - यज्ञेन भाविताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। भावित इत्यत्र भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2687. यज्ञविदः (4-30) - यज्ञं विदन्ति, यज्ञ इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। यज्ञ इत्यत्र यज्-

धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

2688. यज्ञशिष्टामृतभुजः (4-31) - यज्ञस्य शिष्टं यज्ञशिष्टम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, यज्ञशिष्टम् एव अमृतं यज्ञशिष्टामृतम्, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, यज्ञशिष्टामृतं भुञ्जते इति यज्ञशिष्टामृत इति उपपदे भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। शिष्ट इत्यत्र शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अमृत इत्यत्र नास्ति मृतं यस्मात् तत् इति विग्रहे **नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोपः** (वा.1361) इति समासः उत्तरपदलोपश्च, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। मृत इत्यत्र मृ-धातोः (मृङ् प्राणत्यागे, तुदादिः, सि.कौ. - धा.सं. 1403) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ब.व.।

2689. यज्ञशिष्टाशिनः (3-13) - यज्ञस्य शिष्टम् **षष्ठी** (पा.सू. 2-2-8) इति समासः, यज्ञशिष्टम् अशितुं शीलं येषां ते इति विग्रहे यज्ञशिष्ट इति उपपदे अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। शिष्ट इत्यत्र शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ब.व.।

2690. यज्ञम् (5-25,25, 17-12,13) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. द्वि.वि. ए.व.।

2691. यज्ञः (3-16, 9-16, 16-1, 17-7,11, 18-5,5) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ए.व.।

2692. यज्ञात् (3-14, 4-33) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. पं.वि. ए.व.।

2693. यज्ञानाम् (10-25) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. ष.वि. ब.व.।

2694. यज्ञाय (4-23) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. च.वि. ए.व.।

2695. यज्ञार्थात् (3-9) - यज्ञाय इदम्, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति सूत्रेण यज्ञ अर्थ इत्यनयोः समासः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. पं.वि. ए.व.।

2696. यज्ञाः (4-32, 17-23) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

2697. यज्ञे (3-15, 17-27) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. स.वि. ए.व.।

2698. यज्ञेन (4-25) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. तृ.वि. ए.व.।

2699. यज्ञेषु (8-28) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. स.वि. ब.व.।

2700. यज्ञैः (9-20) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. तृ.वि. ब.व.।

2701. यतचित्तस्य (6-19) - यतं चित्तं येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इत्यनेन निषेधः। पुं. ष.वि. ए.व.।

2702. यतचित्तात्मा (4-21, 6-10) - चित्तं च आत्मा च चित्तात्मानौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यतौ चित्तात्मानौ येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इत्यनेन निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2703. यतचित्तेन्द्रियक्रियः (6-12) - चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। चित्तेन्द्रियाणां क्रियाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। यताः चित्तेन्द्रियक्रियाः येन सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24)

इति समासः। यता इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति प्राप्तस्य इटः **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इत्यनेन निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति श-प्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

2704. यतचेतसाम् (5-26) - यतं चेतः यैः तेषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

2705. यततः (2-60) - यत्-धातुः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) आत्मनेपदी अतः तस्मात् परस्य लटः **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच् स्यात्, अत्र शतृ-आदेशः दृश्यते, अयमार्षः स्यात्। यतमानस्य इति स्यात्। पुं. ष.वि. ए.व.।

2706. यतता (6-36) - यत्-धातुः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) आत्मनेपदी अतः तस्मात् परस्य लटः **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच् स्यात्, अत्र शतृ-आदेशः दृश्यते, अयमार्षः स्यात्। यतमानेन इति स्यात्। पुं. तृ.वि. ए.व.।

2707. यतताम् (7-3) - यत्-धातुः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) आत्मनेपदी अतः तस्मात् परस्य लटः **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच् स्यात्, अत्र शतृ-आदेशः दृश्यते, अयमार्षः स्यात्। यतमानानाम् इति स्यात्। पुं. ष.वि. ब.व.।

2708. यतति (7-3) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) लट्, लटः तिप्, यत् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। अयं धातुः आत्मनेपदी अतः यतते इति स्यात्। यतति इति आर्षः। लट्. प्र.पु. ए.व.।

2709. यतते (6-43) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) लट्, लटः त, यत् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2710. यतवाक्कायमानसः (18-52) - वाक् च कायश्च मानसं च वाक्कायमानसानि, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यतानि वाक्कायमानसानि येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। वाच् इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं** (उणा. 2-58) इति क्विप्-प्रत्ययः, धातोः दीर्घः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इत्यनेन प्राप्तं सम्प्रसारणं च निषिध्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू.

1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। काय इत्यत्र चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं.1251) **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (पा.सू. 3-3-41) इति घञ्, चकारस्य कादेशश्च, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः। मानस इत्यत्र मनस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। मनस् इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं.1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2711. यतन्तः (9-14, 15-11,11) - यत्-धातुः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) आत्मनेपदी अतः तस्मात् परस्य लटः **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच् स्यात्, अत्र शतृ-आदेशः दृश्यते, अयमार्षः स्यात्। यतमानाः इति स्यात्। पुं. प्र.वि. ब.व.।

2712. यतन्ति (7-29) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) लट्, लटः झि, यज् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः। अयं धातुः आत्मनेपदी अतः यतन्ते इति स्यात्। अयमार्षः प्रयोगः। लट्. प्र.पु. ब.व.।

2713. यतमानः (6-45) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्। पुं. प्र.वि. ए.व.।

2714. यतयः (4-28, 8-11) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **सर्वधातुभ्य इन्** (उणा. 4-117) इति इन्-प्रत्ययः, अथवा यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

2715. यतः (6-26,26, 13-3, 5-14, 18-46) - यद्-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्, यद् तस्, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2716. यतात्मवान् (12-11) - यतश्च अयम् आत्मा च यतात्मा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, यतात्मा अस्य अस्ति इत्यर्थे यतात्मन् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारादेशः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2717. यतात्मा (12-14) - यतः आत्मा येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2718. यतात्मानः (5-25) - यतः आत्मा यैः ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यत इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

2719. यतीनाम् (5-26) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **सर्वधातुभ्य इन्** (उणा. 4-117) इति इन्-प्रत्ययः, अथवा यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. ष.वि. ब.व.।

2720. यतेन्द्रियमनोबुद्धिः (5-28) - इन्द्रियाणि च मनश्च बुद्धिश्च इन्द्रियमनोबुद्धयः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। यताः इन्द्रियमनोबुद्धयः येन सः इन्द्रियमनोबुद्धिः, **नेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यता इत्यत्र यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। मनस् इत्यत्र मन्-धातोः (मनु अवबोधने, तनादिः, सि.कौ. - धा.सं.1471) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ए.व.।

2721. यत् (1-45, 2-6,7,8,67, 3-21,21,21, 4-16,35, 5-1,5,21, 6-21,42, 7-2, 8-11,11,11,17,28, 9-1,27,27,27,27, 10-1,14,39,39,41,41, 11-1,7,37,41,42,47,52, 13-2,3,3,11,12,12, 14-1, 15-6,8,8,12,12,12, 17-10,12,15,18,19,20,20,22,28, 18-8,9,15,21,22,23,24,25,37,38,39,40,59,60,) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। नपुं. प्र.वि. ए.व.। यत् इति अव्ययम् अपि।

2722. यत्प्रभावः (13-3) - यः प्रभावः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वेन दकारस्य तकारः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। प्रभाव इत्यत्र प्र-पूर्वकात् भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

2723. यत्र (6-20,20,21, 8-23, 18-36,78,78) - यद्-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः

(यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2724. यथा (2-13,22, 3-25,38,38, 4-11,37, 6-19, 7-1, 9-6, 11-3,28,29,53, 12-20, 13-32,33, 18-45,50,63) - यद्-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2725. यथाभागम् (1-11) - भागमनतिक्रम्य, **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति सूत्रेण यथा भाग इत्यनयोः समासः। यथा इत्यत्र यद्-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। भाग इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। अव्ययम्।

2726. यथावत् (18-19) - यथा इत्यत्र यद्-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-1-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। वत् इत्यत्र वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। यथा इति अव्ययम्। वत् इति अपि अव्ययम्। यथावत् इति निपातसमुदायात्मकम् अव्ययम्।

2727. यदा (2-52,53,55,58, 4-7,7, 6-4,18, 13-30, 14-11,14,19) - यद्-शब्दात् **सर्वैकान्यकिंयत्तदः काले दा** (पा.सू. 5-3-15) इति दा-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपैकादेशः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2728. यदि (1-38,43, 2-6, 3-23, 6-32, 11-4,12) - यत्-धातोः (यती प्रयत्ने, भ्वादिः, सि.कौ. - धा.सं. 30) **सर्वधातुभ्य इन्** (उणा. 4-117) इति इन्-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति तकरस्य दकारः। अव्ययम्।

2729. यदृच्छया (2-32) - या ऋच्छा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति सूत्रेण समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। या इत्यत्र यद्-शब्दात् सु-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः, यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। ऋच्छा इत्यत्र ऋच्छ्-धातोः (ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु, तुदादिः, सि.कौ. - धा.सं. 1296) **गुरोश्च हलः** (पा.सू. 3-3-104) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

2730. यदृच्छालाभसन्तुष्टः (4-32) - या ऋच्छा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति सूत्रेण समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। यदृच्छया लाभः,

**कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, यदृच्छालाभेन सन्तुष्टः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। या इत्यत्र यद्-शब्दात् सु-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, **हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सलोपः, यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। ऋच्छा इत्यत्र ऋच्छ्-धातोः (ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु, तुदादिः, सि.कौ. - धा.सं. 1296) **गुरोश्च हलः** (पा.सू. 3-3-103) (पा.सू. 3-3-104) इति अप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। लाभ इत्यत्र लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **अकर्तरि च कराके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः। सन्तुष्ट इत्यत्र सम्-पूर्वकात् तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2731. यद्वत् (2-70) - यद् इति शब्दात् **तेन तुल्यं क्रिया चेद्वतिः** (पा.सू. 5-1-125) इति वति-प्रत्ययः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। अव्ययम्।

2732. यद्विकारि (13-3) - यैः विकारि, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति वा समासः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। विकारिन् इत्यत्र विकारशब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, विकार इत्यत्र वि-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

2733. यन्त्रारूढानि (18-61) - यन्त्रम् आरूढानि, **द्वितीया** (पा.सू. 2-1-24) इति योगविभागेन समासः। यन्त्र इत्यत्र **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा. 4-166) इति यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) त्र-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णः नकारः। आरूढ इत्यत्र आङ्पूर्वकात् रुह्-धातोः (रुह बीजजन्मनि प्रादुर्भावे च, भ्वादिः, सि.कौ. - धा.सं. 859) कर्तरि **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **हो ढः** (पा.सू. 8-2-31) इति हस्य ढः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। नपुं. द्वि.वि. ब.व.।

2734. यमः (10-39, 11-39) - यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2735. यया (2-39, 7-5, 18-31,33,34,45) - यद्-शब्दात् टा-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **आङि चापः** (पा.सू. 7-3-105) इति एकारः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. तृ.वि. ए.व.।

2736. यशः (10-5, 11-33) - अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेर्देवने युट् च** (उणा. 4-191) इति असुन्-प्रत्ययः धातोः युट्-आगमश्च। नपुं. प्र.वि. ए.व.।

2737. यष्टव्यम् (17-11) - यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

2738. यस्मात् (12-15, 15-18) - यद्-शब्दात् ङसि-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मात्-आदेशः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. पं.वि. ए.व.।

2739. यस्मिन् (6-22, 15-4) - यद्-शब्दात् ङि-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति अप्रत्ययः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **ङसिङ्योः स्मात्स्मिनौ** (पा.सू. 7-1-15) इति स्मिन्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. स.वि. ए.व.।

2740. यस्य (2-61,68, 4-19, 8-22, 15-1, 18-17,17) - यद्-शब्दात् ङस्-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति स्यादेशः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. ष.वि. ए.व.।

2741. यस्याम् (2-69) - यद्-शब्दात् ङि-प्रत्ययः, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **ङेराम्नद्याम्नीभ्यः** (पा.सू. 7-3-116) इति आम्-आदेशः, **सर्वनाम्नः स्याड्ढ्रस्वश्च** (पा.सू. 7-3-114) इति स्याट्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. स.वि. ए.व.।

2742. यम् (2-15,70, 6-2,22, 8-3,6,21) - यद् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. द्वि.वि. ए.व.।

2743. यः (2-19,19,21,57,71, 3-6,7,12,16,17,42, 4-9,14,18,18, 5-,3,5,10,23,24,24,28, 6-,1,30,31,32,33,47, 7-21,21, 8-5,9,13,14,20, 9-26, 10-3,7, 11-15, 12-14,15,15,16,17,17, 13-1,2,23,27,29, 14-23,23,26, 15-1,17,19, 16-23, 17-3,11, 18-11,16,55,67,68,70,71) - यद् सु, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। सस्य रुत्वं विसर्गः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः।पुं. प्र.वि. ए.व.।

2744. या (2-69, 18-30,32,50) - यद् सु, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्** (पा.सू. 6-1-68) इति हलः लोपः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. प्र.वि. ए.व.।

2745. यातयामम् (17-10) - यातः यामः यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। यात इत्यत्र या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। याम इत्यत्र या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-140) इति मन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2746. याति (6-45, 8-5,8,13,26, 13-28, 14-14, 16-22) - या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्. प्र.पु. ए.व.।

2747. यादव (11-41) - यदोः अपत्य! इति विग्रहे **तस्यापत्यम्** (पा.सू. 4-1-92) इति अण्-प्रत्ययः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। यदु इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) बाहुलकात् उ-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टमिति** (पा.सू. 6-4-109) इत्यनेन साधुः, अर्थात् गणे पाठकल्पनात् एव जकारस्य दकारः। पुं. सम्बो.वि. ए.व.।

2748. यादसाम् (10-29) - या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **सर्वधातुभ्योऽसुन्** (उणा. 4-189) इति असुन्-प्रत्ययः, बाहुलकात् दुक्-आगमः। नपुं. ष.वि. ब.व.।

2749. यादृक् (13-3) - यद्-उपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं.988) **त्यदादिषु दृशोनालोचने कञ्च** (पा.सू. 3-2-60) इति क्विन्-प्रत्ययः, क्विनः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति नकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आ सर्वनाम्नः** (पा.सू. 6-3-91) इति दकारस्य आत्वम्, **क्विन्प्रत्ययस्य कुः** (पा.सू. 8-2-62) इति कुत्वम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। नपुं. प्र.वि. ए.व.।

2750. यान् (2-6) - यद्-शब्दात् शस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः, **तस्माच्छसो नः पुंसि** (पा.सू. 6-1-103) इति सस्य नत्वम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. द्वि.वि. ब.व.।

2751. यान्ति (3-33, 4-31, 7-23,23,27, 8-23, 9-7,25,25,25,25,32, 13-34, 16-20) - या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) लट्, लटः झि, या झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्. प्र.पु. ब.व.।

2752. याभिः (10-16) - यद् भिस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. तृ.वि. ब.व.।

2753. यावत् (1-22, 13-26) - यद्-शब्दात् **यत्तदेतेभ्यः वतुप्** (पा.सू. 5-2-39) इति वतुप्-प्रत्ययः, **आ सर्वनाम्नः** (पा.सू. 6-3-91) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। यावत् इति अव्ययम् अपि।

2754. यावान् (2-46, 18-15) - यद्-शब्दात् **यत्तदेतेभ्यः वतुप्** (पा.सू. 5-2-39) इति वतुप्-प्रत्ययः, **आ सर्वनाम्नः** (पा.सू. 6-3-91) इति आत्वम्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ए.व.।

2755. यास्यसि (2-35, 4-35) - या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) लृट्, लृटः सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्यप्रत्ययः। लृट्. म.पु. ए.व.।

2756. याम् (2-42, 7-21,21) - यद् अम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, **अमि पूर्वः** (पा.सू. 6-1-107) इति पूर्वरूपैकादेशः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. द्वि.वि. ए.व.।

2757. याः (14-4) - यद् जस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, जसि **प्रथमयोः पूर्वसवर्णः** (पा.सू. 6-1-102) इति पूर्वसवर्णदीर्घः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। स्त्री. प्र.वि. ब.व.।

2758. युक्तचेतसः (7-30) - युक्तं चेतः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

2759. युक्तचेष्टस्य (6-17) - युक्ता चेष्टा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति बहुव्रीहिः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति चेष्टा इत्यस्य आकारस्य ह्रस्वः। युक्ता इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। चेष्टा इत्यत्र चेष्ट्-धातोः (चेष्ट चेष्टायाम्, भ्वादिः, सि.कौ. - धा.सं. 256) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ए.व.।

2760. युक्ततमः (6-47) - युक्त-शब्दात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति तमप्-प्रत्ययः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2761. युक्ततमाः (12-2) - युक्त-शब्दात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति तमप्-प्रत्ययः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2762. युक्तस्वप्नावबोधस्य (6-17) - स्वप्नश्च अवबोधश्च स्वप्नावबोधौ, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। युक्तौ स्वप्नावबोधौ यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्वप्न इत्यत्र **स्वपो नन्** (पा.सू. 3-3-91) इति स्वप्-धातोः (ञिष्वप शये, अदादिः, सि.कौ. - धा.सं. 1068) नन्-प्रत्ययः। अवबोध इत्यत्र अव-पूर्वकात् बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ए.व.।

2763. युक्तः (2-39,61, 3-26, 4-18, 5-8,12,23, 6-8,14,18, 7-22, 8-10, 18-51) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2764. युक्तात्मा (7-18) - युक्तः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2765. युक्ताहारविहारस्य (6-17) - आहारश्च विहारश्च आहारविहारौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। युक्तौ आहारविहारौ यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आहार इत्यत्र आङ्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। विहार इत्यत्र वि-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. ष.वि. ए.व.।

2766. युक्ते (1-14) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. स.वि. ए.व.।

2767. युक्तैः (17-17) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. तृ.वि. ब.व.।

2768. युक्त्वा (9-34) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **आर्धधातुकस्येड्वलादेः** इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

2769. युगपत् (11-12) - यु-धातोः (यु मिश्रणेमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) बाहुलकात् गपद् इति प्रत्ययः। अव्ययम्।

2770. युगसहस्रान्ताम् (8-17) - युगानां सहस्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। युगसहस्रम् अन्तः यस्याः ताम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। युग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **तद्वहति रथयुगप्रासङ्गम्** (पा.सू. 4-4-76) इति गुणाभावनिर्देशात् गुणो न। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। अन्त इत्यत्र अत्-धातोः, (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा अन्त, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्यये अपि अन्त इत्येव। स्त्री. द्वि.वि. ए.व.।

2771. युगे (4-8,8) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **तद्वहति रथयुगप्रासङ्गम्** (पा.सू. 4-4-76) इति गुणाभावनिर्देशात् गुणो न। नपुं. स.वि. ए.व.।

2772. युज्यते (10-7, 17-26) - युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) लट्, लटः त, युज् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2773. युज्यस्व (2-38,50) - युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) लोट्, लोटः थास्। **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **थासः से** (पा.सू. 3-4-80) इति थासः स्थाने से-आदेशः, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति ऐस्थाने वादेशः। लोट्. म.पु. ए.व.।

2774. युञ्जतः (6-19) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। पुं. ष.वि. ए.व.।

2775. युञ्जन् (6-15,28, 7-1) - युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति परसवर्णादेशः। पुं. प्र.वि. ए.व.।

2776. युञ्जीत (6-10) - युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) विधिलिङ्, लिङः त, **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **लिङः सीयुट्** (पा.सू. 3-4-102 इति सीयुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः। विधिलिङ्. प्र.पु. ए.व.।

2777. युञ्ज्यात् (6-12) - युज्-धातोः (युज समाधौ, दिवादिः, सि.कौ. - धा.सं.1177) विधिलिङ्, लिङः त,स् **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अलोपः। विधिलिङ्. प्र.पु. ए.व.।

2778. युद्धविशारदाः (1-9) - युद्धे विशारदाः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। युद्ध इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च**

(पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। विशारद इत्यत्र विशिष्टः शारदः इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, शारद इत्यत्र शरद्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, शरद् इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **शॄदृभसोऽदिः** (उणा. 1-127) इति सूत्रेण अदि-प्रत्ययः। पुं. प्र.वि. ब.व.।

2779. युद्धम् (2-32) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नपुंसके भावे क्तः**(पा.सू. 3-3-114) इति क्तप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नपुं. द्वि.वि. ए.व.।

2780. युद्धात् (2-31) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नपुंसके भावे क्तः**(पा.सू. 3-3-114) इति क्तप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नपुं. पं.वि. ए.व.।

2781. युद्धाय (2-37,38) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नपुंसके भावे क्तः**(पा.सू. 3-3-114) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नपुं. च.वि. ए.व.।

2782. युद्धे (1-23,33, 18-43) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नपुंसके भावे क्तः**(पा.सू. 3-3-114) इति क्तप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। नपुं. स.वि. ए.व.।

2783. युधामन्युः (1-6) - संज्ञा एषा। **युधा** युद्धेन **मन्युः** शोकः कोपः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-4-109) इति पृषोदरादिगणे अस्य शब्दस्य शिष्टप्रयोगानुरोधेन अन्तर्भावात् तृतीयायाः **सुपो धातुप्रातिपदिकयोः** (पा.सू. 2-4-71) इति प्राप्तः लुक् न भवति। युध् इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। मन्यु इत्यत्र **यजिमनिशुन्धिदसिजनिभ्यो युच्** (उणा. 3-20) मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) युच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2784. युधि (1-4) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य**

(पा.सू. 6-1-67) इति वलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. स.वि. ए.व.।

2785. युधिष्ठिरः (1-16) - युधि स्थिरः, **संज्ञायाम्** (पा.सू. 2-1-44) इति समासः, **हलदन्तात् सप्तम्याः संज्ञायाम्** (पा.सू. 6-3-9) इति सप्तम्याः अलुक्, **गवियुधिभ्यां स्थिरः** (पा.सू. 8-3-95) इति षत्वम्। युध् इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्थिर इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ए.व.।

2786. युध्य (8-7) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) लोट्, लोटः सिप्। युध् सिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। परन्तु एषा प्रक्रिया तदा सिद्ध्येत् यदि अयं धातुः पस्मैपदी स्यात्, अयं तु धातुः दिवादिगणीयः आत्मनेपदी च अस्ति, तत्र तु युध्यस्व इति रूपं भवति, प्रकृतश्लोके युध्य इत्यस्य साधनाय युध्-धातोः परस्मैपदम् आर्षत्वात् निर्वाह्यम्। लोट्. म.पु. ए.व.।

2787. युध्यस्व (2-18) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) लोट्, लोटः थास्, युध् थास्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति वादेशः। लोट्. म.पु. ए.व.।

2788. युयुधानः (1-4) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **मुचियुधिभ्यां सन्वच्च** (उणा. 2-91) इति आनच्-प्रत्ययः स च कित्, सन्वद्भावः, तेन अङ्गस्य **सन्यङोः** (पा.सू. 6-9-1) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिर्हल् शिष्यते, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2789. युयुत्सवः (1-1) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-9-1) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिर्हल् शिष्यते, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः। पुं. प्र.वि. ब.व.।

2790. युयुत्सुम् (1-28) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **धातोः कर्मणः समानकर्तृकादिच्छायां वा** (पा.सू. 3-1-7) इति सन्, **सन्यङोः** (पा.सू. 6-9-1) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदिर्हल् शिष्यते, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, **सनाशंसभिक्ष उः** (पा.सू. 3-2-168) इति उ-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः। पुं. द्वि.वि. ए.व.।

2791. ये (1-7,23, 3-13,31,32, 4-11, 5-22, 7-12,12,14,29,30, 9-22,23,29,32, 19-22,32, 12-1,1,2,3,6,20, 13-34, 17-1,5) - यद् जस्, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **जसः शी** (पा.सू. 7-1-17) इति शी, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। यद् इत्यत्र यज्-धातोः

(यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ब.व.।

2792. येन (2-17, 3-2, 4-35, 6-6, 8-22, 10-10, 12-19, 18-20,46) - यद् टा, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति इनादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदि-प्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. तृ.वि. ए.व.।

2793. येषाम् (1-33, 2-35, 5-16,19, 7-28, 10-6) - यद् आम्, **त्यदादीनामः** (पा.सू. 7-2-102) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **आमि सर्वनाम्नः सुट्** (पा.सू. 7-1-52) इति सुट्, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एत्वम्। यद् इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः डित्, डित्त्वसामर्थात् टेः लोपः। पुं. ष.वि. ब.व.।

2794. योक्तव्यः (6-23) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

2795. योगक्षेमम् (9-22) - योगश्च क्षेमं च अनयोः समाहारः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। क्षेम इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

2796. योगधारणाम् (8-12) - योगस्य धारणा ताम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। धारणा इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, ततः धारि इति णिजन्तात् धातोः **ण्यासश्रन्थो युच्** (पा.सू. 3-3-107) इति युच्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति सवर्णदीर्घः। स्त्री. द्वि.वि. ए.व.।

2797. योगबलेन (8-10) - योगस्य बलम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। नपुं. तृ.वि. ए.व.।

2798. योगभ्रष्टः (6-41) - योगात् भ्रष्टः, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। भ्रष्ट इत्यत्र भ्रंश्-धातोः (भ्रंशु अधःपतने, दिवादिः, सि.कौ. - धा.सं.1225) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **उदितो वा** (पा.सू. 7-

2-56) इति विकल्पेन इट्त्वात् क्त-प्रत्ययस्य इडागमः प्राप्तः परन्तु **यस्य विभाषा** (पा.सू. 7-2-15) इति निषेधात् न भवति, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नस्य लोपः। पुं. प्र.वि. ए.व.।

2799. योगमायासमावृतः (7-25) - योगाधीना माया योगमाया, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च, योगमायया समावृतः योगमायासमावृतः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। माया इत्यत्र मा-धातोः (मा माने, अदादिः, सि.कौ. - धा.सं. 1062) **माच्छाससिसूभ्यो यः** (उणा. 4-109) इति यप्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। समावृत इत्यत्र सम्-आङ् इत्युपसर्गद्वयपूर्वकात् वृ-धातोः (वृञ् आवरणे, चुरादिः (वा णिच्), सि.कौ. - धा.सं. 1814) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

2800. योगयज्ञाः (4-28) - योगः एव यज्ञः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

2801. योगयुक्तः (5-6,7, 8-47) - योगेन युक्तः, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

2802. योगयुक्तात्मा (6-19) - योगेन युक्तः योगयुक्तः, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। योगयुक्तः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2803. योगवित्तमाः (12-1) - योगविद्-शब्दात् **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति तमप्-प्रत्ययः, **खरि च** (पा.सू. 8-4-55) इति दकारस्य तकारः। योगविद् इत्यत्र योगं विदन्ति इति विग्रहे योग इति उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

2804. योगसंज्ञितम् (6-23) - योगः संज्ञा योगसंज्ञा, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, योगसंज्ञा इति शब्दात् **तदस्य सञ्जातं तारकादिभ्य इतच्** (पा.सू. 5-2-36) इति इतच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. द्वि.वि. ए.व.।

2805. योगसंन्यस्तकर्माणम् (4-41) - योगेन संन्यस्तानि योगसंन्यस्तानि, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। योगसंन्यस्तानि कर्माणि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। संन्यस्त इत्यत्र सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

2806. योगसंसिद्धः (4-38) - योगेन संसिद्धः, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। संसिद्ध इत्यत्र सम्पूर्वकात् सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ए.व.।

2807. योगसंसिद्धिम् (6-37) - योगस्य संसिद्धिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। संसिद्धि इत्यत्र सम्पूर्वकात् सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। स्त्री. द्वि.वि. ए.व.।

2808. योगसेवया (6-10) - योगस्य सेवा, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। सेवा इत्यत्र सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं.501) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

2809. योगस्थः (2-48) - योगे तिष्ठति इति योगस्थः, योग इत्युपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

2810. योगस्य (6-88) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. ष.वि. ए.व.।

2811. योगम् (2-53, 4-1,42, 5-1,5, 6-2,3,12,19, 7-1, 9-5, 10-7,18, 11-8, 18-7) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

2812. योगः (2-48,50, 4-2,3, 6-16,17,23,33,36) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

2813. योगात् (6-37) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. पं.वि. ए.व.।

2814. योगारूढस्य (6-3) - योगम् आरूढः तस्य, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। आरूढ इत्यत्र आङ्पूर्वकात् रुह्-धातोः (रुह बीजजन्मनि प्रादुर्भावे च, भ्वादिः, सि.कौ. - धा.सं. 859) कर्तरि **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **हो ढः** (पा.सू. 8-2-31) इति हस्य ढः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। पुं. ष.वि. ए.व.।

2815. योगारूढः (6-4) - योगम् आरूढः, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। आरूढ इत्यत्र आङ्पूर्वकात् रुह्-धातोः (रुह बीजजन्मनि प्रादुर्भावे च, भ्वादिः, सि.कौ. - धा.सं. 859) कर्तरि **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **हो ढः** (पा.सू. 8-2-31) इति हस्य ढः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धकारः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति दीर्घः। पुं. प्र.वि. ए.व.।

2816. योगिनम् (6-27) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण घिनुण्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

2817. योगिनः (4-25, 5-11, 6-19, 8-14,23, 15-11) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण घिनुण्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

2818. योगिनाम् (3-3, 6-42,47) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण घिनुण्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. ष.वि. ब.व.।

2819. योगिन् (10-17) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजा**

**तिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण घिनुण्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. सम्बो.वि. ए.व.।

2820. योगी (5-24, 6-1,2,8,10,15,28,31,32,45,46,46,46, 8-25,27,28, 12-14) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण घिनुण्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

2821. योगे (2-39) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. स.वि. ए.व.।

2822. योगेन (10-7, 12-6, 13-24, 18-33) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ए.व.।

2823. योगेश्वर (11-4) - योगानाम् ईश्वरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

2824. योगेश्वरः (18-78) - योगानाम् ईश्वरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2825. योगेश्वरात् (18-75) - योगानाम् ईश्वरः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः पुं. पं.वि. ए.व.।

2826. योगैः (5-5) - युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ब.व.।

2827. योत्स्यमानान् (1-23) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) लृट्, **लृटः सद्वा** (पा.सू. 3-3-14) इति लृटः शानच्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **खरि च** (पा.सू. 8-4-55) इति धस्य चर्त्वेन तकारः, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः। पुं. द्वि.वि. ब.व.।

2828. योत्स्ये (2-9, 18-59) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) लृट्, लृटः इट्। युध् इट्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **खरि च** (पा.सू. 8-4-55) इति धस्य चर्त्वेन तकारः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लृट्. उ.पु. ए.व.।

2829. योद्धव्यम् (1-22) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। नपुं. प्र.वि. ए.व.।

2830. योद्धुकामान् (1-22) - योद्धुं कामः येषां तान्, **सम्तुमुनोः कामे** (वा. 6253) इति काम-शब्दे परे तुमुन्नन्तस्य योद्धुम् इत्यस्य मकारस्य लोपः। योद्धुम् इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **समानकर्तृकेषु तुमुन्** (पा.सू. 3-3-158) इति तुमुन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **अकर्तीरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ब.व.।

2831. योधमुख्यैः (11-26) - योधेषु मुख्याः तैः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। योध इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। मुख्य इत्यत्र मुखम् इव इति विग्रहे मुख इति शब्दात् **शाखादिभ्यो यत्** (पा.सू. 5-3-103) इति यत्प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्-प्रत्ययः, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थात् टेः लोपः। इ पुं. तृ.वि. ब.व.।

2832. योधवीरान् (11-34) - योधे वीराः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। योध इत्यत्र युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

2833. योधाः (11-32) - युध्-धातोः (युध सम्प्रहारे, दिवादिः, सि.कौ. - धा.सं. 1173) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः। पुं. प्र.वि. ब.व.।

2834. योनिम् (16-20) - यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. द्वि.वि. ए.व.।

2835. योनिषु (16-19) - यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. स.वि. ब.व.।

2836. योनिः (14-3) - यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। स्त्री. प्र.वि. ए.व.।

2837. यौवनम् (2-13) - युवन्-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टिलोपे प्राप्ते; तथा च **अल्लोपोऽनः** (पा.सू. 6-4-134) इति उपधा-अकारस्य लोपे प्राप्ते **अन्** (पा.सू. 6-4-167) इति प्रकृतिभावः। युवन् इत्यत्र यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) **युवृषितक्षिराजिधन्विद्युप्रतिदिवः** इति सूत्रेण कनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति प्राप्यमाणः गुणः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

2838. रक्षांसि (11-36) - रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **सर्वधातुभ्योऽसुन्** (उणा. 4-144) इति असुन्-प्रत्ययः । नपुं. प्र.वि. ब.व.।

2839. रजसः (14-16,17) - रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। नपुं. ष.वि. ए.व.।

2840. रजसि (14-12,15) - रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। नपुं. स.वि. ए.व.।

2841. रजः (14-5,7,9,10,10,10, 17-1) - रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। नपुं. प्र.वि. ए.व.।

2842. रजोगुणसमुद्भवः (3-37) - रजोगुणात् समुद्भवः। **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। गुण इत्यत्र गुण (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, तदन्तात्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। समुद्भव इत्यत्र सम्-पूर्वकात् उत्पूर्वकात् च भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2843. रणसमुद्यमे (1-22) - रणस्य समुद्यमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रण इत्यत्र रण्-धातोः (रण शब्दे, भ्वादिः, सि.कौ. - धा.सं. 445) **वशिरण्योरुपसंख्यानम्** (वा. 2203) इति अप्-प्रत्ययः। समुद्यम इत्यत्र सम्-उद्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। पुं. स.वि. ए.व.।

2844. रणात् (2-25) - रण्-धातोः (रण शब्दे, भ्वादिः, सि.कौ. - धा.सं. 445) **वशिरण्योरुपसंख्यानम्** (वा. 2203) इति अप्-प्रत्ययः। नपुं. पं.वि. ए.व.।

2845. रणे (1-43, 11-34) - रण्-धातोः (रण शब्दे, भ्वादिः, सि.कौ. - धा.सं. 445) **वशिरण्योरुपसंख्यानम्** (वा. 2203) इति अप्-प्रत्ययः। नपुं. स.वि. ए.व.।

2846. रताः (5-25, 12-4) - रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853)स् **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकस्य लोपः। पुं. प्र.वि. ब.व.।

2847. रथम् (1-11) - रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) **हनिकुषिणीरमिकाशिभ्यः क्थन्** (उणा. 2-2) इति क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकस्य लोपः। पुं. द्वि.वि. ए.व.।

2848. रथोत्तमम् (1-24) - रथेषु उत्तमः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः, अथवा रथानामुत्तमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रथ इत्यत्र रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853)

**हनिकुषिणीरमिकाशिभ्यः क्थन्** (उणा. 2-2) इति क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकस्य लोपः। उत्तम इत्यत्र उत्पूर्वकात् तम्-धातोः (तमु काङ्क्षायाम्, दिवादिः, सि.कौ. - धा.सं.1202) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। पुं. द्वि.वि. ए.व.।

2849. रथोपस्थे (1-47) - रथस्य उपस्थः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रथ इत्यत्र **हनिकुषिनरिकाशिभ्यः क्थन्** (उणा. 2-2) इति रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 856) क्थन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। उपस्थ इत्यत्र उप-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. स.वि. ए.व.।

2850. रमते (5-22, 18-36) - रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2851. रमन्ति (10-9) - रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) लट्, लटः झिः। रम् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। अयं धातुः आत्मनेपदी इत्यतः रमन्ते इति स्यात्। प्रकृते परस्मैपदप्रयोगः आर्षः। लट्. प्र.पु. ए.व.।

2852. रविः (10-21, 13-33) - रु-धातोः (रुङ् गतिरोषणयोः, भ्वादिः, सि.कौ. - धा.सं.959) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

2853. रसनम् (15-9) - रस्-धातोः (रस आस्वादनस्नेहनयोः, चुरादिः, सि.कौ. - धा.सं. 1931) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति -युस्थाने अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. द्वि.वि. ए.व.।

2854. रसः (2-59, 7-8) - रस्-धातोः (रस आस्वादनस्नेहनयोः, चुरादिः, सि.कौ. - धा.सं. 1931) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

2855. रसात्मकः (15-23) - रसः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्-प्रत्ययः। रस इत्यत्र रस्-धातोः (रस आस्वादनस्नेहनयोः, चुरादिः, सि.कौ. - धा.सं. 1931) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2856. रस्याः (17-8) - रस्-धातोः (रस आस्वादनस्नेहनयोः, चुरादिः, सि.कौ. - धा.सं. 1931) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो यत्** (पा.सू. 3-1-97) इति यत्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

2857. रहसि (6-10) - रह्-धातोः (रह त्यागे, भ्वादिः, सि.कौ. - धा.सं. 731) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. स.वि. ए.व.।

2858. रहस्यम् (4-3) - रहस्-शब्दात् **दिगादिभ्यो यत्** (पा.4-3-54) इति यत्-प्रत्ययः। रहस् इत्यत्र रह्-धातोः (रह त्यागे, भ्वादिः, सि.कौ. - धा.सं. 731) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

2859. राक्षसीम् (9-12) - रक्षस्-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। रक्षस् इत्यत्र रक्ष्-धातोः (रक्ष पालने, भ्वादिः, सि.कौ. - धा.सं. 658) **सर्वधातुभ्योऽसुन्** (उणा. 4-189) इति सूत्रेण असुन्-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

2860. रागद्वेषवियुक्तैः (2-64) - रागश्च द्वेषश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। रागद्वेषाभ्यां वियुक्ताः **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। द्वेष इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। वियुक्त इत्यत्र वि-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. तृ.वि. ब.व.।

2861. रागद्वेषौ (3-34, 18-51) - रागश्च द्वेषश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। द्वेष इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. द्वि.व.।

2862. रागात्मकम् (14-7) - रागः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। नपुं. द्वि.वि. ए.व.।

2863. रागी (18-27) - **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विष - द्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू. 3-2-142) इति सूत्रेण रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) घिनुण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2864. राजगुह्यम् (9-2) - गुह्यानां राजा, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **राजदन्तादिषु परम्** (पा.सू. 2-2-31) इति परनिपातः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। गुह्य इत्यत्र गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (उणा. 18-35) इति वार्तिकेन क्यप्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

2865. राजन् (11-9, 18-76,77) - **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

2866. राजर्षयः (4-2, 9-33) - राजानः ऋषयः इव, **उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** (पा.सू. 2-1-56) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। ऋषि इत्यत्र ऋष्-धातोः (ऋषी गतौ, तुदादिः, सि.कौ. - धा.सं.1287) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

2867. राजविद्या (9-2) - विद्यानां राजा, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, **राजदन्तादिषु परम्** (पा.सू. 2-2-31) इति विद्या-शब्दस्य परनिपातः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। विद्या इत्यत्र विद्-धातोः अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्-प्रत्ययहः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2868. राजसस्य (17-9) - राजसम् अस्य अस्ति, तस्य, इति विग्रहे राजस-शब्दात् **अर्शआदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। राजस इत्यत्र रजः एव राजसम् इति विग्रहे रजस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। पुं. ष.वि. ए.व.।

2869. राजसम् (17-12,18,21) - राजसम् अस्य अस्ति इति विग्रहे राजस-शब्दात् **अर्शआदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। राजस इत्यत्र रजः एव राजसम् इति विग्रहे रजस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। पुं. द्वि.वि. ए.व.।

2870. राजसः (18-27) - राजसम् अस्य अस्ति इति विग्रहे राजस-शब्दात् **अर्शआदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। राजस इत्यत्र रजः एव राजसम् इति विग्रहे रजस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। पुं. प्र.वि. ए.व.।

2871. राजसाः (7-12, 14-18, 17-4) - राजसम् अस्य अस्ति इति विग्रहे राजस-शब्दात् **अर्शआदिभ्योच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। राजस इत्यत्र रजः एव राजसम् इति विग्रहे रजस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। पुं. प्र.वि. ब.व.।

2872. राजसी (17-2, 18-31,34) - रजस्-शब्दात् **तेन निर्वृत्तम्** (पा.सू. 4-2-68) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। राजस-शब्दात् **अर्शआदिभ्योच्** इति अच्-प्रत्ययः। **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। स्त्री. प्र.वि. ए.व.।

2873. राजा (1-2,16) - **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2874. राज्यसुखलोभेन (1-45) - राज्यस्य सुखम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। राज्यसुखस्य लोभः **षष्ठी** (पा.सू. 2-2-8) इति समासः। राज्य इत्यत्र राजन्-शब्दात् **पत्यन्तपुरोहितादिभ्यो यक्** (पा.सू. 5-1-128) इति यक्-प्रत्ययः, **किति च** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टिलोपः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। लोभ इत्यत्र लुभ्-धातोः (लुभ विमोहने, तुदादिः, सि.कौ. - धा.सं. 1305) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ए.व.।

2875. राज्यम् (1-32,33, 2-8, 11-33) - राजन्-शब्दात् **पत्यन्तपुरोहितादिभ्यो यक्** (पा.सू. 5-1-128) इति यक्-प्रत्ययः, **किति च** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टिलोपः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

2876. राज्येन (1-32) - राजन्-शब्दात् **पत्यन्तपुरोहितादिभ्यो यक्** (पा.सू. 5-1-128) इति यक्-प्रत्ययः, **किति च** (पा.सू. 7-2-117) इति आदिवृद्धिः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टिलोपः। राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

2877. रात्रिम् (8-17) - रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **राशदिभ्यां त्रिप्** (उणा. 4-67) इति त्रिप्-प्रत्ययः। स्त्री. द्वि.वि. ए.व.।

2878. रात्रिः (8-25) - रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **राशदिभ्यां त्रिप्** (उणा. 4-67) इति त्रिप्-प्रत्ययः। स्त्री. प्र.वि. ए.व.।

2879. रात्र्यागमे (8-18,19) - रात्र्याः आगमः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रात्रि इत्यत्र रा-धातोः (रा दाने, अदादिः, सि.कौ. - धा.सं. 1057) **राशदिभ्यां त्रिप्** (उणा. 4-67) इति त्रिप्-प्रत्ययः। आगम इत्यत्र आङ्पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.982) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः। पुं. स.वि. ए.व.।

2880. राधनम् (7-22) - राध्-धातोः (राध संसिद्धौ, स्वादिः, सि.कौ. - धा.सं. 1262) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. द्वि.वि. ए.व.।

2881. रामः (10-31) - रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2882. रिपुः (6-5) - रप्-धातोः (रप् व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा. सं. 401) **रपेरिच्चोपधायाः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः धातोः अकारस्य च इकारादेशः। पुं. प्र.वि. ए.व.।

2883. रुद्राणाम् (10-23) - रुद्-धातोः (रुदिर् अश्रुविमोचने, अदादिः, सि.कौ. - धा. सं. 1067) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **रोदेर्णिलुक् च** (उणा. 2-22) इति रक्-प्रत्ययः णेः च लुक्। पुं. ष.वि. ब.व.।

2884. रुद्रादित्याः (11-22) - रुद्राश्च आदित्याश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। रुद्र इत्यत्र रुद्-धातोः (रुदिर् अश्रुविमोचने, अदादिः, सि.कौ. - धा. सं. 1067) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **रोदेर्णिलुक् च** (उणा. 2-22) इति रक्-प्रत्ययः णेः च लुक्। आदित्य इत्यत्र अदिति-शब्दात् **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः** (पा.सू. 4-1-85) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, अदिति इति नामधेयम्, अत्र औपचारिकं समासादिकम् एवं ज्ञातव्यम् - न दितिः इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। दिति इत्यत्र दो-धातोः (दो अवखण्डने, दिवादिः, सि.कौ. - धा.सं. 1148) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति ओकारस्य आकारादेशः, **द्यतिस्यतिमास्थामित्तिकिति** (पा.सू. 7-4-40) इति आकारस्य इकारः। पुं. प्र.वि. ब.व.।

2885. रुद्रान् (11-6) - रुद्-धातोः (रुदिर् अश्रुविमोचने, अदादिः, सि.कौ. - धा. सं. 1067) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **रोदेर्णिलुक् च** (उणा. 2-22) इति रक्-प्रत्ययः णेः च लुक्। पुं. द्वि.वि. ब.व.।

2886. रुद्ध्वा (4-29) - रुध्-धातोः (रुधिर् आवरणे, रुधादिः, सि.कौ. - धा.सं. 1438) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धत्वम्, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जत्वेन दकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। अव्ययम्।

2887. रुधिरप्रदिग्धान् (2-5) - रुधिरेण प्रदिग्धान्, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। रुधिर इत्यत्र रुध्-धातोः (रुधिर् आवरणे, रुधादिः, सि.कौ. - धा.सं. 1438) **इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच्** (उणा. 1-51) इति किरच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। प्रदिग्ध इत्यत्र प्र-पूर्वकात् दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **दादेर्धातोर्घः** (पा.सू. 8-2-32) इति हस्य घकारः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन घकारस्य गकारः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। पुं. द्वि.वि. ब.व.।

2888. रूपस्य (11-52) - रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। नपुं. ष.वि. ए.व.।

2889. रूपम् (11-3,9,20,23,45,47,49,49,50,51,52, 15-3, 18-77) - रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। नपुं. द्वि.वि. ए.व.।

2890. रूपाणि (11-5) - रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। नपुं. द्वि.वि. ब.व.।

2891. रूपेण (11-46) - रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. तृ.वि. ए.व.।

2892. रोमहर्षणम् (18-74) - रोम्णां हर्षणम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रोमन् इत्यत्र रु-धातोः (रु शब्दे, अदादिः, सि.कौ. - धा.सं. 1034) **नामन्-सीमन्-व्योमन्-रोमन्-लोमन्-पाप्मन्-ध्यामन्** (उणा. 4-150) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। हर्षण इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. द्वि.वि. ए.व.।

2893. रोमहर्षः (1-29) - रोम्णां हर्षः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। रोमन् इत्यत्र रु-धातोः (रु शब्दे, अदादिः, सि.कौ. - धा.सं. 1034) **नामन्-सीमन्-व्योमन्-रोमन्-लोमन्-पाप्मन्-ध्यामन्** (उणा. 4-150) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। हर्ष इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

2894. लघ्वाशी (18-52) - लघु अश्नाति, लघु इति उपपदे अश्-धातोः (अश भोजने, क्र्यादिः, सि.कौ. - धा.सं. 1523) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। लघु इत्यत्र लघ्-धातोः (लघि गतौ भोजननिवृत्तौ च, क्र्यादिः, सि.कौ. - धा.सं. 1523) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति सूत्रेण कु-प्रत्ययः नकारस्य च लोपः। पुं. प्र.वि. ए.व.।

2895. लब्धम् (16-13) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन भकारस्य बकारः। नपुं. प्र.वि. ए.व.।

2896. लब्धा (18-73) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन भकारस्य बकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

2897. लब्ध्वा (4-39, 6-22) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति निषेधः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन भकारस्य बकारः। अव्ययम्।

2898. लभते (4-39, 6-43, 7-22, 18-45,54) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2899. लभन्ते (2-32, 5-25, 9-21) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) लट्, लटः झ, लभ् झ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2900. लभस्व (11-33) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) लोट्, लोटः थास्, लभ् थास्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, **सवाभ्यां वामौ** (पा.सू. 3-4-91) इति एकारस्य वादेशः एकारस्य। लोट्. म.पु. ए.व.।

2901. लभे (11-25) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) लट्, लटः इट्, लभ् इट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. उ.पु. ए.व.।

2902. लभेत् (18-8) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोऽनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति या-स्थाने इय्-आदेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **इतश्च** (पा.सू. 3-4-100) इति अन्त्यस्य इकारस्य लोपः। अयमात्मनेपदी धातुः अतः लभेत इति भवेत्, परन्तु अत्र परस्ममैपदप्रयोगः आर्षः। लिङ्. प्र.पु. ए.व.।

2903. लभ्यः (8-22) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **पोरदुपधात्** (पा.सू. 3-1-98) इति यत्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2904. लाघवम् (2-35) - लघु-शब्दात् **इगन्ताच्च लघुपूर्वात्** (पा.सू. 5-1-131) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लघु इत्यत्र लघ्-धातोः (लघि गतौ भोजननिवृत्तौ च, क्र्यादिः, सि.कौ. - धा.सं. 1523) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **लङ्घिबंह्योर्नलोपश्च** (उणा. 1-29) इति सूत्रेण कु-प्रत्ययः नकारस्य च लोपः। नपुं. द्वि.वि. ए.व.।

2905. लाभम् (6-22) - लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

2906. लाभालाभौ (2-38) - लाभश्च अलाभश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। लाभ इत्यत्र लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं. 975) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। अलाभ इत्यत्र न लाभः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। पुं. द्वि.वि. द्वि.व.।

2907. लिङ्गैः (14-21) - लिग्-धातोः (लिगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 155) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुमागमः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः ङकारः, **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

2908. लिप्यते (5-7,10, 13-31, 18-17) - लिप्-धातोः (लिप उपदेहे, तुदादिः, सि.कौ. - धा.सं. 1433) कर्मणि लट्, लटः त। लिप् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2909. लिम्पन्ति (4-14) - लिप्-धातोः (लिप उपदेहे, तुदादिः, सि.कौ. - धा.सं. 1433) लट्, लटः झि, लिप् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **शे मुचादीनाम्** (पा.सू. 7-1-59) इति नुमागमः। लट्. प्र.पु. ब.व.।

2910. लुप्तपिण्डोदकक्रियाः (1-42) - पिण्डं च उदकक्रिया च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, लुप्ते पिण्डोदकक्रिये येषां ते **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। उदकेन क्रिया उदकक्रिया, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। लुप्त इत्यत्र लुप्-धातोः (लुप विमोहने, दिवादिः, सि.कौ. - धा.सं. 1237)

**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पिण्ड इत्यत्र पिड्-धातोः (पिडि संघाते, भ्वादिः, सि.कौ. - धा.सं. 274) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः णकारः, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। उदक इत्यत्र उन्द्-धातोः (उन्दी क्लेदने, रुधादिः, सि.कौ. - धा.सं.1457) **उदकञ्च** (उणा. 2-40) इति क्वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। क्रिया इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **कृञः श च** (पा.सू. 3-3-100) इति शप्रत्ययः, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति रिङ्, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ब.व.।

2911. लुब्धः (18-27) - लुभ्-धातोः (लुभ विमोहने, तुदादिः, सि.कौ. - धा.सं. 1305) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति भकारस्य जश्त्वेन बकारः। पुं. प्र.वि. ए.व.।

2912. लेलिह्यसे (11-30) - लिह्-धातोः (लिह् आस्वादने, अदादिः, सि.कौ. - धा.सं. 1016) **धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** (पा.सू. 3-1-7) इति यङ्, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **हलादिः शेषः** (पा.सू. 7-4-60) इति आदेः हलः शेषः, **गुणो यङ्लुकोः** (पा.सू. 7-4-82) इति अभ्यासस्य गुणः, **सनाद्यन्ताः धातवः** (पा.सू. 3-1-32) इति धातुसंज्ञा, ततः लट्, लटः थास्, लेलिह्य थास्, **थासः से** (पा.सू. 3-4-80) इति से-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. म.पु. ए.व.।

2913. लोकक्षयकृत् (11-32) - लोकानां क्षयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, लोकक्षयं करोति इति विग्रहे लोकक्षय-उपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। क्षय इत्यत्र क्षि-धातोः (क्षि निवासगत्योः, तुदादिः, सि.कौ. - धा.सं. 1407) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

2914. लोकत्रयम् (11-20, 15-17) - लोकानां त्रयम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। त्रय इत्यत्र त्रि-शब्दात् **सङ्ख्याया अवयवे तयप्** (पा.सू. 52-42) इति तयप्-प्रत्ययः, **द्वित्रिभ्यां तयस्य अयज्वा** (पा.सू. 5-2-43) इति तयपः अयजादेशः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. प्र.वि. ए.व.।

2915. लोकत्रये (11-43) - लोकानां त्रयं तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। त्रय इत्यत्र त्रि-शब्दात् **सङ्ख्याया अवयवे तयप्** (पा.सू. 52-42) इति तयप्-प्रत्ययः, **द्वित्रिभ्यां तयस्य अयज्वा** (पा.सू. 5-2-43) इति तयपः अयजादेशः,

**यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, त्रि इत्यत्र तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) **तरतेर्ड्रिः** (उणा. 5-66) इति ड्रि-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. स.वि. ए.व.।

2916. लोकमहेश्वरम् (10-3) - लोकानां महेश्वरः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। महेश्वर इत्यत्र महान् ईश्वरः इति विग्रहे **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीयदेशीयेषु** (पा.सू. 6-3-46) इति तकारस्य आकारः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, , महा ईश्वर महेश्वर इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह्-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते, ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

2917. लोकसङ्ग्रहम् (3-20,25) - लोकस्य सङ्ग्रहः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। सङ्ग्रह इत्यत्र सम्पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समो मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः ङकारः। पुं. द्वि.वि. ए.व.।

2918. लोकस्य (5-14, 11-43) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. ष.वि. ए.व.।

2919. लोकम् (9-33, 13-33) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. द्वि.वि. ए.व.।

2920. लोकः (3-9,21, 4-31,40, 7-25, 10-6, 12-15) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. प्र.वि. ए.व.।

2921. लोकात् (12-15) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. पं.वि. ए.व.।

2922. लोकान् (6-41, 10-16, 11-30,32, 14-14, 18-17,71) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. द्वि.वि. ब.व.।

2923. लोकाः (3-24, 8-16, 11-23,29) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. प्र.वि. ब.व.।

2924. लोके (2-5, 3-3, 4-12, 6-42, 13-13, 15-16,18, 16-6) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. स.वि. ए.व.।

2925. लोकेषु (3-22) - लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्य। पुं. स.वि. ब.व.।

2926. लोभः (14-12,17, 16-21) - लुभ्-धातोः (लुभ विमोहने, तुदादिः, सि.कौ. - धा.सं. 1305) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

2927. लोभोपहतचेतसः (1-38) - लोभेन उपहतम्, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः, लोभोपहतं चेतः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। लोभ इत्यत्र लुभ्-धातोः (लुभ विमोहने, तुदादिः,

सि.कौ. - धा.सं. 1305) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। उपहत इत्यत्र उपपूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

2928. वक्तुम् (10-16) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** इति इटः निषेधः, **चोः कुः** इति कुत्वम्। अव्ययम्।

2929. वक्त्राणि (11-27,28,29) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः** (उणा. 4-166) इति त्र-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। नपुं. द्वि.वि. ब.व.।

2930. वक्ष्यामि (7-2, 8-23, 10-1, 18-64) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) लृट्, लृटः मिप्, वच् मि, **स्यतासीलृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्। लट्. उ.पु. ए.व.।

2931. वचनम् (1-2, 11-35, 18-73) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। नपुं. द्वि.वि. ए.व.।

2932. वचः (2-10, 10-1, 11-1, 18-64) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

2933. वज्रम् (10-28) - वज्र इति वज्-धातोः (वज गतौ, भ्वादिः, सि.कौ. - धा.सं. 252) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययान्तः निपात्यते। नपुं. प्र.वि. ए.व.।

2934. वद (3-2) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लोट्, लोटः सिप्, वद् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

2935. वदति (2-29) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लट्, लटः तिप्, वद् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. प्र.पु. ए.व.।

2936. वदनैः (11-30) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। नपुं. तृ.वि. ब.व.।

2937. वदन्ति (8-11) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लट्, लटः झिः, वद् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. प्र.पु. ब.व.।

2938. वदसि (10-14) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लट्, लटः सिप्, वद् सि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. म.पु. ए.व.।

2939. वदिष्यन्ति (2-36) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) लृट्, लृटः झिः, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। लृट्. प्र.पु. ब.व.।

2940. वयम् (1-37,45, 2-12) - अस्मद् जस्, **ङेप्रथमयोरम्** (पा.सू. 7-1-28) इति अमादेशः, **यूयवयौ जसि** (पा.सू. 7-2-93) इति मपर्यन्तस्य वयादेशः, **शेषे लोपः** (पा.सू. 7-2-90) इति अदः लोपः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्। पुं. प्र.वि. ब.व.।

2941. वर (8-4) - वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. सम्बो.वि. ए.व.।

2942. वरुणः (10-29, 11-39) - वृ-धातोः (वृङ् सम्भक्तौ, क्र्यादिः, सि.कौ. - धा.सं. 1509) **कृवृदारिभ्य उनन्** (पा.सू. 3-53) इति उनन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। पुं. प्र.वि. ए.व.।

2943. वर्णसङ्करकारकैः (1-43) - वर्णानां सङ्करः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वर्णसङ्करस्य कारकाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति नप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। सङ्कर इत्यत्र सम्प्रूवकात् कृ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समो मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः ङकारः। कारक इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति ण्वुल्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. तृ.वि. ब.व.।

2944. वर्णसङ्करः (1-41) - वर्णानां सङ्करः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वर्ण इत्यत्र वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति नप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। सङ्कर इत्यत्र सम्प्रूवकात् कृ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समो मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः ङकारः। पुं. प्र.वि. ए.व.।

2945. वर्तते (5-26, 6-31, 16-23) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

2946. वर्तन्ते (3-28, 5-9, 14-23) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट, लटः झ, वृत् झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

2947. वर्तमानः (6-31, 13-23) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः। पुं. प्र.वि. ए.व.।

2948. वर्तमानानि (7-26) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **आने मुक्** (पा.सू. 7-2-82) इति मुक्। नपुं. द्वि.वि. ब.व.।

2949. वर्ते (3-22) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः इट्, वृत् इ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. उ.पु. ए.व.।

2950. वर्तेत (6-6) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लिङ्, लिङः त, वृत् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **लिङः सीयुट्** (पा.सू. 3-4-102) इति सीयुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। विधिलिङ्. प्र.पु. ए.व.।

2951. वर्तेयम् (3-23) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लिङ्, लिङः मिप्। वृत् इट्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79)इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति या इत्यस्य इयादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। वस्तुतः वृत्-धातुः आत्मनेपदी, अस्य च परस्मैपदित्वम् आर्षः। विधिलिङ्. उ.पु. ए.व.।

2952. वर्त्म (3-23, 4-11) - वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

2953. वर्षम् (9-19) - वृष्-धातोः (वृषु सेचनहिंसासङ्क्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 706) **भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्यर्थम्** (वा. 2197) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

2954. वशम् (3-34, 6-26) - वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन अप्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

2955. वशात् (9-8) - वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन अप्-प्रत्ययः। नपुं. पं.वि. ए.व.।

2956. वशी (5-13) - वश-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। वश इत्यत्र वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन अप्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2957. वशे (2-61) - वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) **वशिरण्योश्चोपसङ्ख्यानम्** इति वार्तिकेन अप्-प्रत्ययः। नपुं. स.वि. ए.व.।

2958. वश्यात्मना (6-36) - वश्यः आत्मा येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। वश्य इत्यत्र वश-शब्दात् **वशं गतः** (पा.सू. 4-4-86) इति सूत्रेण यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, वश इत्यत्र वश्-धातोः (वश कान्तौ, अदादिः, सि.कौ. - धा.सं. 1080) **वशिरण्योश्चोपसङ्ख्यानम्** (वा. 2203) इति वार्तिकेन अप्-प्रत्ययः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. तृ.वि. ए.व.।

2959. वसवः (11-22) - वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ब.व.।

2960. वसूनाम् (10-23) - वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. ष.वि. ब.व.।

2961. वसून् (11-6) - वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. द्वि.वि. ब.व.।

2962. वहामि (9-22) - वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) लट्, लटः मिप्, वह् मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

2963. वह्निः (3-38) - वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण नित्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2964. वः (3-10,11,12) - **बहुवचनस्य वस्नसौ** (पा.सू. 8-1-21) इति सूत्रेण बहुवचनान्तयोः अस्मदः षष्ठीचतुर्थीद्वितीयास्थयोः बहुवचने वस्-आदेशः। अस्मद् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) **युष्यसिभ्यां मदिक्** (उणा. 1-136) इति मदिक्-प्रत्ययः। पुं. ष.वि. ब.व.।

2965. वा (1-32, 2-6,6,20,20,26,37, 6-32,32, 8-6, 10-41, 11-41, 15-10,10, 17-19,21, 18-15,15,24,40,40) - वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) बाहुलकात् क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। अव्ययम्।

2966. वाक् (10-34) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं** (उणा. 2-58) इति क्विप्-प्रत्ययः धातोः दीर्घः **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इत्यनेन प्राप्तं सम्प्रसारणं च निषिध्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि. ए.व.।

2967. वाक्यम् (1-21, 2-1, 17-25, ) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अत उपधायाः** इति उपधायाः वृद्धिः। नपुं. द्वि.वि. ए.व.।

2968. वाक्येन (3-2) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अत उपधायाः** इति उपधायाः वृद्धिः। नपुं. तृ.वि. ए.व.।

2969. वाङ्मयम् (17-15) - वाच्-शब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **प्रत्यये भाषायां नित्यम्** (वा. 5010) इति ककारस्य अनुनासिकः ङकारः। वाच् इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं** (उणा. 2-58) इति क्विप्-प्रत्ययः धातोः दीर्घः **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इत्यनेन प्राप्तं सम्प्रसारणं च निषिध्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। नपुं. प्र.वि. ए.व.।

2970. वाचम् (2-42) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं** (उणा. 2-58) इति क्विप्-प्रत्ययः धातोः दीर्घः **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इत्यनेन प्राप्तं सम्प्रसारणं च निषिध्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. द्वि.वि. ए.व.।

2971. वाच्यम् (18-67) - वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वं प्राप्तम्, **वचोऽशब्दसंज्ञायाम्** (पा.सू. 7-3-67) इति सूत्रेण कुत्वनिषेधः। नपुं. प्र.वि. ए.व.।

2972. वादः (10-32) - वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ए.व.।

2973. वादिनः (2-42) - वादः अस्य अस्ति इत्यर्थे वाद-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। वाद इत्यत्र वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पुं. प्र.वि. ब.व.।

2974. वायुः (2-67, 7-4, 9-6, 11-39, 15-8) - वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-1) वा-धातोः उण्-प्रत्ययः, **आतो युक्चिण्कृतोः** (पा.सू. 7-3-33) इति युगागमः। पुं. प्र.वि. ए.व.।

2975. वायोः (6-34) - वा-धातोः (वा गतिगन्धनयोः, अदादिः, सि.कौ. - धा.सं. 1050) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-1) वा-धातोः उण्-प्रत्ययः, **आतो युक्चिण्कृतोः** (पा.सू. 7-3-33) इति युगागमः। पुं. ष.वि. ए.व.।

2976. वार्ष्णेय (1-31, 3-36, ) - वृष्णि-शब्दात् **इतश्चानिञः** (पा.सू. 4-1-122) इति सूत्रेण ढक्-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति सूत्रेण ढस्य एयादेशः, **किति च** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इकारलोपः। वृष्णि इत्यत्र वृष्-धातोः (वृषु सेचनहिंसासङ्क्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 706) **सृवृषिभ्यां कित्** (उणा. 4-49) इति सूत्रेण नि-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। पुं. सम्बो.वि. ए.व.।

2977. वासवः (10-22) - वसु-शब्दात् **ज्योत्स्नादिभ्यः उपसङ्ख्यानम्** (वा. 3197) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदेः अचः वृद्धिः, **ओर्गुणः** (पा.सू. 6-4-146) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। वसु इत्यत्र वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2978. वासः (1-44) - वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **हलश्च** (3-3-121) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

2979. वासांसि (2-22) - **वसेर्णित्** (उणा. 4-118) इति वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) असुन्-प्रत्ययः अयं च णित्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. द्वि.वि. ब.व.।

2980. वासुकिः (10-28) - वसुक-शब्दात् **अत इञ्** (पा.सू. 4-1-95) इति इञ्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। वसुक इत्यत्र वसु-शब्दात् **संज्ञायां कन्** (पा.सू. 5-3-75) इति कन्, वसु इत्यत्र वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2981. वासुदेवस्य (18-74) - **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति वसुदेव-शब्दात् अण्-प्रत्ययः, **तद्धितेष्वचामादेः** इति आदेः अचः वृद्धिः। वसुदेव इत्यत्र वसु-उपपदे दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, वसु इत्यत्र वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. ष.वि. ए.व.।

2982. वासुदेवः (7-19, 10-37, 11-50) - **ऋष्यन्धकवृष्णिकुरुभ्यश्च** (पा.सू. 4-1-114) इति वसुदेव-शब्दात् अण्-प्रत्ययः, **तद्धितेष्वचामादेः** इति आदेः अचः वृद्धिः। वसुदेव इत्यत्र वसु-उपपदे दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, वसु इत्यत्र वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. प्र.वि. ए.व.।

2983. विकम्पितुम् (2-31) - वि-पूर्वकात् कम्प्-धातोः (कपि चलने, भ्वादिः, सि.कौ. - धा.सं. 375) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः। अव्ययम्।

2984. विकर्णः (1-8) - कस्यचित् संज्ञा एषा। वि-पूर्वकात् कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3-10) इति न-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। पुं. प्र.वि. ए.व.।

2985. विकर्मणः (4-17) - वि-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. ष.वि. ए.व.।

2986. विकारान् (13-19) - वि-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. द्वि.वि. ब.व.।

2987. विक्रान्तः (1-6) - वि-पूर्वकात् क्रम्-धातोः (क्रमु पादविक्षेपे, भ्वादिः, सि.कौ. - धा.सं. 473) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-12) इति क्त-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-15) इति उपधायाः दीर्घः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णादेशः नकारः। पुं. प्र.वि. ए.व.।

2988. विगतकल्मषः (6-28) - विगतः कल्मषः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विगत इत्यत्र वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। कल्मष इत्यत्र कर्म स्यति इति विग्रहे कर्मन् इति उपपदपूर्वकात् सोधातोः **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, ततः **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **पृषोदरादीनि यथोपदिष्टमिति** (पा.सू. 6-4-109) सूत्रेण साधुत्वं तस्मादेव च रेफस्य लत्वं षत्वञ्च, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

2989. विगतज्वरः (6-30) - विगतः ज्वरः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विगत इत्यत्र वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू.

3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। ज्वर इत्यत्र ज्वर्-धातोः (ज्वर रोगे, भ्वादिः, सि.कौ. - धा.सं. 776) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

2990. विगतभीः (6-14) - विगता भीः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। विगत इत्यत्र वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। भी इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. प्र.वि. ए.व.।

2991. विगतस्पृहः (2-56, 18-49) - विगता स्पृहा यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति स्पृहा इत्यस्य आकारस्य ह्रस्वः। विगता इत्यत्र वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्पृहा इत्यत्र स्पृह्-धातोः (स्पृह ईप्सायाम्, चुरादिः, सि.कौ. - धा.सं. 1872) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपे **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते लुप्तस्य अकारस्य **अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन गुणो न, **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

2992. विगतः (11-1) - वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

2993. विगतेच्छाभयक्रोधः (5-28) - इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, विगताः इच्छाभयक्रोधाः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विगत इत्यत्र वि-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। इच्छा इति इष्-धातोः (इषु इच्छायाम्, तुदादिः, सि.कौ. - धा.सं. 1351) श-प्रत्यये **इच्छा** (पा.सू. 3-3-101) इति सूत्रेण निपातनात् सिद्धम्। भय इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

2994. विगुणः (3-35, 18-47) - वि-पूर्वकात् गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिचि, तदन्तात् **एरच्** (पा.सू. 3-3-56) इति अच् इति प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. प्र.वि. ए.व.।

2995. विचक्षणाः (18-2) - वि-पूर्वकात् चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) **अनुदात्तेतश्च हलादेः** (पा.सू. 3-2-149) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **रषाभ्यां णो नः समानपादे** (पा.सू. 8-4-1) इति णत्वम्, **चक्षिङः ख्याञ्** (पा.सू. 2-4-54) इति ख्याञ्-आदेशे प्राप्ते **असनयोश्च प्रतिषेधो वक्तव्यः** (वा. 1620) इति ख्याञ्-आदेशस्य निषेधः। पुं. प्र.वि. ब.व.।

2996. विचालयेत् (3-29) - वि-पूर्वकात् चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, तस्मात् लिङ्, लिङः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **अतो येयः** (पा.सू. 7-2-80) इति इयादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। विधिलिङ्. प्र.पु. ए.व.।

2997. विचाल्यते (7-22, 14-23) - वि-पूर्वकात् चल्-धातोः (चल कम्पने, भ्वादिः, सि.कौ. - धा.सं. 812) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, कर्मणि लट्, लटः त। **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **णेरनिटि** इति णेः लोपः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

2998. विचेतसः (9-12) - विगतं चेतः येभ्यः ते, **प्रादिभ्यो धातुजस्य वाच्ये वाचोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदलोपश्च। चेतस् इत्यत्र चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ब.व.।

2999. विजयम् (1-32) - वि-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3000. विजयः (18-78) - वि-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3001. विजानतः (2-46) - वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **श्नाभ्यस्तयोरातः** (पा.सू. 6-4-112) इति आकारस्य लोपः, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति ज्ञा-स्थाने जादेशः। पुं. ष.वि. ए.व.।

3002. विजानीतः (2-11) - वि-पूर्वकात् ज्ञाधातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लट्, लटः तस्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति ज्ञा-स्थाने जादेशः, **ई हल्यघोः** (पा.सू. 6-4-113) इति आकारस्य ईकारादेशः। लट्. प्र.पु. द्वि.व.।

3003. विजानीयाम् (4-4) - विपूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) लिङ्, लिङः मिप्, ज्ञा मिप्, **क्र्यादिभ्यः श्ना** (पा.सू. 3-1-81) इति श्ना, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति ज्ञा-स्थाने जादेशः, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **ईहल्यघोः** (पा.सू. 6-4-113) इति आकारस्य ईकारः, **तस्थस्थमिपां तांतंतामः** (पा.सू. 3-4-101) इति मिपः अमादेशः। विधिलिङ्. उ.पु. ए.व.।

3004. विजितात्मा (5-7) - विजितः आत्मा येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विजित इत्यत्र विपूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आत्मन् इत्यत्र अत्-

धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3005. विजितेन्द्रियः (6-8) - विजितानि इन्द्रियाणि येन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विजित इत्यत्र विपूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3006. विज्ञातुम् (11-31) - विपूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। अव्ययम्।

3007. विज्ञानसहितम् (9-1) - विज्ञानेन सहितम्, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30 इति समासः। विज्ञान इत्यत्र वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। सहित इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **तीषसहलुभरुषरिषः** (पा.सू. 7-2-48) इति विकल्पेन इट्। नपुं. द्वि.वि. ए.व.।

3008. विज्ञानम् (18-42) - वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। नपुं. प्र.वि. ए.व.।

3009. विज्ञाय (13-18) - वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

3010. वितताः (4-32) - वि-पूर्वकात् तन्-धातोः (तनु विस्तारे, स्वादिः, सि.कौ. - धा.सं. 1463) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37 ) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

3011. वित्तेशः (10-23) - वित्तस्य ईशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वित्त इत्यत्र विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) क्त-प्रत्ययः तस्य च **नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्** (पा.सू. 8-2-56) इति सूत्रेण प्राप्तस्य नत्वविकल्पस्य अभावः **वित्तो भोगप्रत्यययोः** (पा.सू. 8-2-58) इति सूत्रेण निपात्यते। ईश इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. प्र.वि. ए.व.।

3012. विदधामि (7-21) - वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्, लटःमिप्, धा मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति शपः श्लुः, **श्लौ** (पा.सू. 6–1-10) इति द्वित्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति जश्त्वम्, **ह्रस्वः** (पा.सू. 7-4-59) इति अभ्यासस्य ह्रस्वश्च। लट्. उ.पु. ए.व.।

3013. विदितात्मनाम् (5-26) -विदितः आत्मा यैः तेषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विदित इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः**

(पा.सू. 7-2-35) इति इट्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. ष.वि. ब.व.।

3014. विदित्वा (2-25, 8-28) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्योड्वलादेः**(पा.सू. 7-2-35) इति इडागमः। अव्ययम्।

3015. विदुः (4-2, 7-29,30,30, 8-17, 10-2,14, 13-34, 16-7, 18-2) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः झि, विद् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **विदो लटो वा** (पा.सू. 3-4-83) इति सूत्रेण झेः विकल्पेन उस्-आदेशः। लट्. प्र.पु. ब.व.।स्

3016. विद्धि (2-17, 3-15,32,37, 4-13,32,34, 6-2, 7-5,10,12, 10-24,27, 13-2,19,19,26, 14-7,8,15,12, 17-6,12, 18-20,21) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लोट्, लोटः सिप्, विद् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **हुझल्भ्यो हेर्धिः** (पा.सू. 6-4-101) इति हेः धि-आदेशः। लोट्. म.पु. ए.व.।

3017. विद्मः (2-6) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः मस्, विद् मस्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। लट्. उ.पु. ब.व.।

3018. विद्यते (2-16,16,31,40, 3-17, 4-38, 6–40, 8-16, 16-7) - विद्-धातोः (विद सत्तायाम्, दिवादिः, सि.कौ. - धा.सं. 1171) लट्, लटः त, विद् त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3019. विद्यात् (6-23, 14-11) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लिङ्, लिङः तिप्, विद् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति सूत्रेण शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सूत्रेण अनन्त्यस्य सस्य लोपः स्यात्, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः। विधिलिङ्. प्र.पु. ए.व.।

3020. विद्यानाम् (10-32) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. ष.वि. ब.व.।

3021. विद्याम् (10-17) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

3022. विद्याविनयसम्पन्ने (5-18) - विद्या च विनयश्च विद्याविनयौ, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। विद्याविनयाभ्यां सम्पन्नः **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। विद्या इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति क्यप्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। विनय इत्यत्र वि-पूर्वकात् नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवायावः** (पा.सू. 6-1-78) इति अयादेशः। सम्पन्न इत्यत्र सम्-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः**

(पा.सू. 8-2-42) इति तकारस्य दकारस्य च नकारादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति सम् इत्यस्य मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति अनुस्वारस्य नकारः। पुं. प्र.वि. ए.व.। पुं. स.वि. ए.व.।

3023. विद्वान् (3-25,26) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण लटः शतृ-आदेशः, **विदेः शतुर्वसुः** (पा.सू. 7-1-36) इति सूत्रेण शतुः वस्वादेशः, विद्वस् इति निष्पन्नम्। पुं. प्र.वि. ए.व.।

3024. विधानोक्ताः (17-24) - विधानैः उक्ताः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। विधान इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति सूत्रेण अनादेशः, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। उक्त इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। स्त्री. प्र.वि. ब.व.।

3025. विधिदृष्टः (17-11) - विधिना दृष्टः, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। विधि इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। दृष्ट इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्तप्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3026. विधिहीनम् (17-13) - विधिना हीनः **पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः** (पा.सू. 2-1-31) इति समासः। विधि इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। हीन इत्यत्र हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति ईत्वम्, **ओदितश्च** (पा.सू. 8-2-45) इति तस्य नत्वम्। पुं. द्वि.वि. ए.व.।

3027. विधीयते (2-44) - वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) कर्मणि लट्, लटः त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति सूत्रेण यक्-प्रत्ययः, **घुमास्थागापाजहातिसां हलि** (पा.सू. 6-4-66) इति सूत्रेण आकारस्य ईकारादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

3028. विधेयात्मा (2-64) - विधेयः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विधेय इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः, **ईद्यति** (पा.सू. 6-4-65) इति आकारस्य ईकारः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3029. विनङ्क्ष्यसि (18-58) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) लृट्, लृटः सिप्, नश् सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति सूत्रेण स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति सूत्रेण इडागमे प्राप्ते, **रधादिभ्यश्च** (पा.सू. 7-2-45) इति सूत्रेण इड्विकल्पेन भवति, **मस्जिनशोर्झलि** (पा.सू. 7-1-60) इति सूत्रेण नुम्, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति सूत्रेण शकारस्य षकारः, **षढोः कः सि** (पा.सू. 8-2-41) इति सूत्रेण षस्य ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सूत्रेण सस्य मूर्धन्यादेशः। लृट्. म.पु. ए.व.।

3030. विनद्य (1-12) - वि-पूर्वकात् नद्-धातोः (टुनदि समृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 67) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति सूत्रेण क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

3031. विनश्यति (4-40, 8-20) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) लट्, लटः तिप्। वि नश् तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति सूत्रेण श्यन्। लट्. प्र.पु. ए.व.।

3032. विनश्यत्सु (13-27) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्-प्रत्ययः। पुं. स.वि. ब.व.।

3033. विना (10-39) - **विनञ्भ्यां नानाञौ न सह** (पा.सू. 5-2-27) इति वि-शब्दात् ना-प्रत्ययः। अव्ययम्।

3034. विनाशम् (2-27) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

3035. विनाशः (6-40) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3036. विनाशाय (4-8) - वि-पूर्वकात् नश्-धातोः (णश अदर्शने, दिवादिः, सि.कौ. - धा.सं. 1195) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. च.वि. ए.व.।

3037. विनियतम् (6-18) - वि-पूर्वकात् नि-पूर्वकाच्च यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं.984) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. प्र.वि. ए.व.।

3038. विनियम्य (6-24) - विपू-र्वकात् नि-पूर्वकाच्च यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं.984) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति सूत्रेण क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

3039. विनिवर्तन्ते (2-51) - वि-पूर्वकात् नि-पूर्वकात् च वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लृटः झ,। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः इति एत्वम्। लट्. प्र.पु. ब.व.।

3040. विनिवृत्तकामाः (15-5) - विनिवृत्तः कामः येभ्यः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विनिवृत्त इत्यत्र वि-नि-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

3041. विनिश्चितैः (13-4) - वि-पूर्वकात् निस्-पूर्वकात् च चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति निसः सकारस्य श्चुत्वेन शकारः। नपुं. तृ.वि. ब.व.।

3042. विन्दति (4-38, 5-21, 18-45,46) - विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) लट्, लटः तिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **शे मुचादीनाम्** (पा.सू. 7-1-59) इति सूत्रेण नुम्। लट्. प्र.पु. ए.व.।

3043. विन्दते (4-5) - विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) लट्, लटः त, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **शे मुचादीनाम्** (पा.सू. 7-1-59) इति सूत्रेण नुम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3044. विन्दामि (11-24) - विद्-धातोः (विदॢ लाभे, तुदादिः, सि.कौ. - धा.सं. 1432) लट्, लटः मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **शे मुचादीनाम्** (पा.सू. 7-1-59) इति सूत्रेण नुम्, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

3045. विपरिवर्तते (9-10) - वि-पूर्वकात् परि-पूर्वकात् च वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) लट्, लटः त। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः इति एत्वम्। लट्. प्र.पु. ए.व.।

3046. विपरीतम् (18-15) - वि-परि-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः च प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. द्वि.वि. ए.व.।

3047. विपरीतानि (1-31) - वि-परि-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः च प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. द्वि.वि. ब.व.।

3048. विपरीतान् (18-32) - वि-परि-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः च प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. द्वि.वि. ब.व.।

3049. विपश्चितः (2-60) - विप्रकृष्टं चेतति निश्चिनोति वा इति विग्रहे वि-प्र-पूर्वकात् चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति पृषोदरादित्वात् प्र-स्थाने पस्-आदेशे श्चुत्वे (पा.सू. 8-4-40) च अयं शब्दः साध्यते। पुं. ष.वि. ए.व.।

3050. विभक्तम् (13-16) - वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्तप्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, ततः विभक्तम् अस्य अस्ति इत्यर्थे विभक्त-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। नपुं. प्र.वि. ए.व.।

3051. विभक्तेषु (18-20) - वि-पूर्वकात् भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं. 998) **निष्ठा** (पा.सू. 3-2-102) इति क्तप्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. स.वि. ब.व.।

3052. विभावसौ (7-9) - विभा वसु यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विभा इत्यत्र वि-पूर्वकात् भा-धातोः (भा दीप्तौ, अदादिः, सि.कौ. - धा.सं. 1051) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः -

**हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। वसु इत्यत्र वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। नपुं. स.वि. ए.व.।

3053. विभुम् (10-13) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **विप्रसम्भ्यो ड्वसंज्ञायाम्** (पा.सू. 3-2-180) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ए.व.।

3054. विभुः (5-15) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **विप्रसम्भ्यो ड्वसंज्ञायाम्** (पा.सू. 3-2-180) इति वार्तिकेन डु-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

3055. विभूतिभिः (10-16) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति निषेधात् न भवति। स्त्री. तृ.वि. ब.व.।

3056. विभूतिमत् (10-41) - विभूति-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति सूत्रेण मतुप्। विभूति इत्यत्र वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति निषेधात् न भवति। नपुं. प्र.वि. ए.व.।

3057. विभूतिम् (10-7,18) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति निषेधात् न भवति। स्त्री. द्वि.वि. ए.व.।

3058. विभूतीनाम् (10-40) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति निषेधात् न भवति। स्त्री. ष.वि. ब.व.।

3059. विभूतेः (10-40) - वि-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति सूत्रेण क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **श्र्युकः किति** (पा.सू. 7-2-11) इति निषेधात् न भवति। स्त्री. ष.वि. ए.व.।

3060. विमत्सरः (4-22) - वि-पूर्वकात् मद्-धातोः (मदी हर्षग्लेपनयोः, भ्वादिः, सि.कौ. - धा.सं. 815) **कृभूमदिभ्यः कित्** (उणा. 3-73) इति सूत्रेण सर-प्रत्ययः, **खरि च** (8-4-55) इति चर्त्वेन दकारस्य तकारः। पुं. प्र.वि. ए.व.।

3061. विमुक्तः (9-28, 14-20, 16-22) - वि-पूर्वकात् मुच्-धातोः (मुच्लृ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

3062. विमुक्ताः (15-5) - वि-पूर्वकात् मुच्-धातोः (मुच्लृ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3063. विमुच्य (18-56) - वि-पूर्वकात् मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

3064. विमुञ्चति (18-35) - वि-पूर्वकात् मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) लट्, लटः तिप्, मुच् तिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति शप्रत्ययः, **शे मुचादीनाम्** (पा.सू. 7-1-59) इति नुम्। लट्. प्र.पु. ए.व.।

3065. विमुह्यति (2-72) - वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) लट्, लटः तिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, श्यनः ङित्त्वात् **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः। लट्. प्र.पु. ए.व.।

3066. विमूढः (6-38) - वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति विकल्पेन हस्य घत्वाभावे **हो ढः** (पा.सू. 8-2-31 इति हस्य ढत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोणः** (पा.सू. 6-3-111) इति अणः दीर्घः। पुं. प्र.वि. ए.व.।

3067. विमूढभावः (11-49) - विमूढस्य भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। विमूढ इत्यत्र वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति विकल्पेन हस्य घत्वाभावे **हो ढः** (पा.सू. 8-2-31 इति हस्य ढत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोणः** (पा.सू. 6-3-111) इति अणः दीर्घः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3068. विमूढात्मा (3-6) - विमूढः आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विमूढ इत्यत्र वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति विकल्पेन हस्य घत्वाभावे **हो ढः** (पा.सू. 8-2-31 इति हस्य ढत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोणः** (पा.सू. 6-3-111) इति अणः दीर्घः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3069. विमूढाः (15-10) - वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति विकल्पेन हस्य घत्वाभावे **हो ढः** (पा.सू. 8-2-31) इति हस्य ढत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोणः** (पा.सू. 6-3-111) इति अणः दीर्घः। पुं. प्र.वि. ब.व.।

3070. विमृश्य (18-63) - वि-पूर्वकात् मृश्-धातोः (मृश आमर्शने, तुदादिः, सि.कौ. - धा.सं. 1425) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्। अव्ययम्।

3071. विमोक्षाय (16-5) - वि-पूर्वकात् मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, तस्मात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, अथवा **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. च.वि. ए.व.।

3072. विमोक्ष्यसे (4-32) - वि-पूर्वकात् मुच्-धातोः (मुचॢ मोक्षणे, तुदादिः, सि.कौ. - धा.सं. 1430) लृट्, लृटः थास्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **थासः से** (पा.सू. 3-4-80) इति थासः से आदेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। लृट्. म.पु. ए.व.।

3073. विमोहयति (3-40) - वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। ततः लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84 इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। इति गुणः। लट्. प्र.पु. ए.व.।

3074. विराटः (1-4,17) - विराट इति राज्ञः संज्ञा। विशेषः राटः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। राट इत्यत्र रट्-धातोः (रट परिभाषणे, भ्वादिः, सि.कौ. - धा.सं. 297) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3075. विलग्नाः (11-27) - वि-पूर्वकात् लस्ज्-धातोः (ओ लस्जी व्रीडायाम्, तुदादिः, सि.कौ. - धा.सं. 1291) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः, **ओदितश्च** (पा.सू. 8-2-45) इति निष्ठातकारस्य नकारः, **स्कोः संयोगाद्योरन्ते च** (पा.सू. 8-2-29) इति सलोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3076. विवस्वतः (4-4) - वि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, ततः विवस् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मतुपः मस्य वकारादेशः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **ससजुषो रुः** (पा.सू. 8-2-66) इति विवस्-शब्दस्य सकारस्य रुत्वं न भवति। पुं. ष.वि. ए.व.।

3077. विवस्वते (4-1) - वि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, ततः विवस् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मतुपः मस्य वकारादेशः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **ससजुषो रुः** (पा.सू. 8-2-66) इति विवस्-शब्दस्य सकारस्य रुत्वं न भवति। पुं. च.वि. ए.व.।

3078. विवस्वान् (4-1) - वि-पूर्वकात् वस्-धातोः (वस निवासे, भ्वादिः, सि.कौ. - धा.सं. 1005) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, ततः विवस् इति शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मतुपः मस्य वकारादेशः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **ससजुषो रुः** (पा.सू. 8-2-66) इति विवस्-शब्दस्य सकारस्य रुत्वं न भवति। पुं. प्र.वि. ए.व.।

3079. विविक्तदेशसेवित्वम् (13-10) - विविक्तः चासौ देशः च विविक्तदेशः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, विविक्तदेशं सेवितुं शीलम् अस्य इति विविक्तदेशसेवी, अत्र विविक्तदेश इति उपपदे सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं. 501) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, विविक्तदेशसेविनः भावः इति विग्रहे विविक्तदेशसेविन् इति शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। विविक्त इत्यत्र वि-पूर्वकात् विच्-धातोः (विचिर् पृथग्भावे, रुधादिः, सि.कौ. - धा.सं. 1442) **क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** (पा.सू. 3-4-76) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। देश इत्यत्र दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इत्यनेन अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण उपधागुणः। नपुं. प्र.वि. ए.व.।

3080. विविक्तसेवी (18-52) -विविक्त इति उपपदे सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं. 501) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। विविक्त इत्यत्र वि-पूर्वकात् विच्-धातोः (विचिर् पृथग्भावे, रुधादिः, सि.कौ. - धा.सं. 1442) **क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः** (पा.सू. 3-4-76) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ए.व.।

3081. विविधाः (17-25, 18-14) - विभिन्ना विधा यासां ताः, **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदस्य लोपः च। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

3082. विविधैः (13-4) - विभिन्ना विधा येषां तैः, **प्रादिभ्यो धातुजस्य वाच्ये वा चोत्तरपदलोपः** (वा. 1360) इति वार्तिकेन समासः उत्तरपदस्य लोपः च, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति विधा इत्यस्य आकारस्य ह्रस्वः। विधा इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. तृ.वि. ब.व.।

3083. विवृद्धम् (14-11) - वि-पूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। नपुं. द्वि.वि. ए.व.।

3084. विवृद्धे (14-12,13) - वि-पूर्वकात् वृध्-धातोः (वृधु वृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 759) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। नपुं. स.वि. ए.व.।

3085. विशते (18-55) - विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) लट्, लटः त, विश् त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। अयं धातुः परस्मैपदी अतः विशति इति स्यात्। विशते इति आत्मनेपदम् आर्षम्। लट्. प्र.पु. ए.व.।

3086. विशन्ति (8-11, 9-21, 11-21,27,28,29,29) - विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) लट्, लटः झिः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति ङिद्वाद्भावः तेन

**पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः। लट्. प्र.पु. ब.व.।

3087. विशालम् (9-21) - वि इत्यस्मात् **वेः शालच्छङ्कटचौ** (पा.सू. 5-2-28) इति शालच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3088. विशिष्टाः (1-7) - वि-पूर्वकात् शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) **गत्यर्थाकर्मकश्लिषशीङ्स्थसवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3089. विशिष्यते (3-7, 5-2, 6-9, 7-17, 12-12) - वि-पूर्वकात् शिष्-धातोः (शिषॢ विशेषणे, रुधादिः, सि.कौ. - धा.सं. 1451) कर्मणि लट्, लटः त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

3090. विशुद्धया (18-51) - वि-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

3091. विशुद्धात्मा (5-7) - विशुद्धः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विशुद्ध इत्यत्र वि-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3092. विश्वतोमुखम् (9-15, 11-11) - विश्वतः मुखानि यस्य तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, विश्वतस् मुख इति स्थिते विश्वतस् इत्यस्य सकारस्य **ससजुषो रुः** (पा.सू. 8-2-66) इति रुत्वम्, **हशि च** (पा.सू. 6-1-114) इति रोः उत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विश्वतस् इत्यत्र विश्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. द्वि.वि. ए.व.।

3093. विश्वतोमुखः (10-33) - विश्वतः मुखानि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, विश्वतस् मुख इति स्थिते विश्वतस् इत्यस्य सकारस्य **ससजुषो रुः** (पा.सू. 8-2-66) इति रुत्वम्, **हशि च** (पा.सू. 6-1-114) इति रोः उत्वम्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। विश्वतस् इत्यत्र विश्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

3094. विश्वमूर्ते (11-46) - विश्वं मूर्तिः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। मूर्ति इत्यत्र मूर्छ्-

धातोः (मूर्छा मोहसमुच्छ्राययोः, भ्वादिः, सि.कौ. - धा.सं. 212) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **राल्लोपः** (पा.सू. 6-4-21) इति छस्य लोपः। पुं. सम्बो.वि. ए.व.।

3095. विश्वरूप (11-16) - विश्वं रूपं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। पुं. प्र.वि. ए.व.।

3096. विश्वस्य (11-18,38) - विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। नपुं. ष.वि. ए.व.।

3097. विश्वम् (11-19,38,47) - विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। नपुं. द्वि.वि. ए.व.।

3098. विश्वे (11-22) - विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। पुं. प्र.वि. ब.व.।

3099. विश्वेश्वर (11-16) - विश्वस्य ईश्वरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति सूत्रेण वरच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

3100. विषम् (18-37,38) - विष्-धातोः (विषु सेचने, भ्वादिः, सि.कौ. - धा.सं. 618) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। नपुं. प्र.वि. ए.व.।

3101. विषमे (2-2) - विगतः समः, **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्। सुषामादिगणे (पा.सू. 8-3-18) विषम-शब्दस्य पाठकल्पनात् वेः परे धातोः सकारस्य षत्वादेशः अवगन्तव्यः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. स.वि. ए.व.।

3102. विषयप्रवालाः (15-2) - विषयाः प्रवालाः इव यासां ताः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। विषय इत्यत्र वि-पूर्वकात् सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** (पा.सू. 8-3-70) इति धातोः सकारस्य षकारः। प्रवाल इत्यत्र प्र-पूर्वकात् बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **ज्वलितिकसन्तेभ्यो णः** (पा.सू. 3-1-140) इति ण-प्रत्ययः,

**अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। स्त्री. प्र.वि. ब.व.।

3103. विषयान् (2-62,64, 4-26, 15-9, 18-51) - वि-पूर्वकात् सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** (पा.सू. 8-3-70) इति धातोः सकारस्य षकारः। पुं. द्वि.वि. ब.व.।

3104. विषयाः (2-59) - वि-पूर्वकात् सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** (पा.सू. 8-3-70) इति धातोः सकारस्य षकारः। पुं. प्र.वि. ब.व.।

3105. विषयेन्द्रियसंयोगात् (18-38) - विषयाश्च इन्द्रियाणि च विषयेन्द्रियाणि, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, विषयेन्द्रियाणां संयोगः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। विषय इत्यत्र वि-पूर्वकात् सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्** (पा.सू. 8-3-70) इति धातोः सकारस्य षकारः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्रशब्दात् घच्, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। संयोग इत्यत्र सम्-पूर्वकात् युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. पं.वि. ए.व.।

3106. विषादम् (18-35) - विपूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **सदिरप्रतेः** (पा.सू. 8-3-66) इति धातोः सकारस्य षत्वम्। पुं. द्वि.वि. ए.व.।

3107. विषादी (18-28) - विषाद-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। विपूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **सदिरप्रतेः** (पा.सू. 8-3-66) इति धातोः सकारस्य षत्वम्। पुं. प्र.वि. ए.व.।

3108. विषीदन् (1-28) - वि-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति सद्-स्थाने सीद्-आदेशः, **सदिरप्रतेः** (पा.सू. 8-3-66) इति धातुसकारस्य षत्वम्। पुं. प्र.वि. ए.व.।

3109. विषीदन्तम् (2-1,10) - वि-पूर्वकात् सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 854) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति सद्-स्थाने सीद्-आदेशः, **सदिरप्रतेः** (पा.सू. 8-3-66) इति धातुसकारस्य षत्वम्। पुं. द्वि.वि. ए.व.।

3110. विष्टभ्य (10-42) - वि-पूर्वकात् स्तम्भ्-धातोः (ष्टभि प्रतिबन्धे, भ्वादिः, सि.कौ. - धा.सं. 386) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति न-लोपः, **स्तम्भेः** (पा.सू. 8-3-67 इति धातुसकारस्य षकारः। अव्ययम्।

3111. विष्ठितम् (13-17) - वि-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति आकारस्य इकारादेशः, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति सस्य षत्वम्। नपुं. प्र.वि. ए.व.।

3112. विष्णुः (10-21) - विष्-धातोः (विषॢ व्याप्तौ, जुहोत्यादिः, सि.कौ. - धा.सं.1095) **विषेः किच्च** (उणा. 3-39) इति नु-प्रत्ययः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। पुं. प्र.वि. ए.व.।

3113. विष्णो (11-24,30) - विष्-धातोः (विषॢ व्याप्तौ, जुहोत्यादिः, सि.कौ. - धा.सं.1095) **विषेः किच्च** (उणा. 3-39) इति नु-प्रत्ययः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। पुं. सम्बो.वि. ए.व.।

3114. विसर्गः (8-3) - वि-पूर्वकात् सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

3115. विसृजन् (5-9) - वि-पूर्वकात् सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श-प्रत्ययस्य ङिद्वद्भावः इति कारणात् **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। पुं. प्र.वि. ए.व.।

3116. विसृजामि (9-7,8) - वि-पूर्वकात् सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) लट्, लटः मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श-प्रत्ययस्य ङिद्वद्भावः इति कारणात् **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

3117. विसृज्य (1-47) - वि-पूर्वकात् सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। अव्ययम्।

3118. विस्तरशः (11-2, 16-3) - विस्तर-शब्दात् **सङ्ख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति शस्-प्रत्ययः। विस्तर इत्यत्र वि-पूर्वकात् स्तॄ-धातोः (स्तॄञ् आच्छादने, क्र्यादिः, सि.कौ. - धा.सं. 1484) **प्रथने वावशब्दे** (पा.सू. 3-3-33) इति घञः प्रतिषेधे, **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

3119. विस्तरस्य (10-19) - वि-पूर्वकात् स्तॄ-धातोः (स्तॄञ् आच्छादने, क्र्यादिः, सि.कौ. - धा.सं. 1484) **प्रथने वावशब्दे** (पा.सू. 3-3-33) इति घञः प्रतिषेधे, **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः।। पुं. ष.वि. ए.व.।

3120. विस्तरः (10-40) - वि-पूर्वकात् स्तॄ-धातोः (स्तॄञ् आच्छादने, क्र्यादिः, सि.कौ. - धा.सं. 1484) **प्रथने वावशब्दे** (पा.सू. 3-3-33) इति घञः प्रतिषेधे, **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3121. विस्तरेण (10-18) - वि-पूर्वकात् स्तॄ-धातोः (स्तॄञ् आच्छादने, क्र्यादिः, सि.कौ. - धा.सं. 1484) **प्रथने वावशब्दे** (पा.सू. 3-3-33) इति घञः प्रतिषेधे, **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. तृ.वि. ए.व.।

3122. विस्तारम् (13-30) - वि-पूर्वकात् स्तॄ-धातोः (स्तॄञ् आच्छादने, क्र्यादिः, सि.कौ. - धा.सं. 1484) **प्रथने वावशब्दे** (पा.सू. 3-3-33) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

3123. विस्मयः (18-77) - वि-पूर्वकात् स्मि-धातोः (ष्मिङ् ईषद्धसने, भ्वादिः, सि.कौ. - धा.सं. 948) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

3124. विस्मयाविष्टः (11-14) - विस्मयेन आविष्टः **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। विस्मय इत्यत्र वि-पूर्वकात् स्मि-धातोः (ष्मिङ् ईषद्धसने, भ्वादिः, सि.कौ. - धा.सं. 948) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। आविष्ट इत्यत्र आङ्-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) अथवा **आदिकर्मणि क्तः कर्तरि च** (पा.सू. 3-4-71) इति कर्तरि क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3125. विस्मिताः (11-22) - वि-पूर्वकात् स्मि-धातोः (ष्मिङ् ईषद्धसने, भ्वादिः, सि.कौ. - धा.सं. 948) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3126. विहाय (2-22,22,71) - वि-पूर्वकात् हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्। अव्ययम्।

3127. विहारशय्यासनभोजनेषु (11-42) - विहारश्च शय्या च आसनं च भोजनं च विहारशय्यासनभोजनानि तेषु, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। विहार इत्यत्र वि-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। शय्या इत्यत्र शी-धातोः (शीङ् स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः** (पा.सू. 3-3-99) इति सूत्रेण क्यप्-प्रत्ययः, **अयङ् यि क्ङिति** (पा.सू. 7-4-22) इति धातोः ईकारस्य स्थाने अयङ्-आदेशः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। आसन इत्यत्र आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। भोजन इत्यत्र भुज्-धातोः (भुज पालनाभ्यवहारयोः, रुधादिः, सि.कौ. - धा.सं.1454) **ल्युट् च** (पा.सू. 3-3-3115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। नपुं. स.वि. ब.व.।

3128. विहितान् (7-22) - वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति धाधातोः हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ब.व.।

3129. विहिताः (17-23) - वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति धा-धातोः हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3130. वीक्षन्ते (11-22) - वि-पूर्वकात् ईक्ष-ऀधातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) लट्, लटः झ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

3131. वीतरागभयक्रोधः (4-10) - रागः च भयं च क्रोधः रागभयक्रोधाः इति **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। वीताः रागभयक्रोधाः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। वीत इत्यत्र अज्-धातोः (अज गतिक्षेपणयोः, भ्वादिः, सि.कौ. - धा.सं. 230) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अजेर्व्यघञपोः** (पा.सू. 2-4-56) इति अज्-स्थाने वी-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। भय इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। क्रोध इत्यत्र क्रुध्-धातोः (क्रुध क्रोधे, दिवादिः, सि.कौ. - धा.सं. 1189) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3132. वीतरागाः (8-11) - वीतः रागः येभ्यः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। वीत इत्यत्र अज्-धातोः (अज गतिक्षेपणयोः, भ्वादिः, सि.कौ. - धा.सं. 230) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अजेर्व्यघञपोः** (पा.सू. 2-4-56) इति अज्-स्थाने वी-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3133. वीर्यवान् (1-5,6) - वीर्य-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। वीर्य इत्यत्र वीर-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इत यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3134. वृकोदरः (1-15) - वृक इत्याख्यः अग्निः उदरे यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। वृक वृ-धातोः (वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) इत्यत्र **सृवृभृशुषिमुषिभ्यः कक्** (उणा 3-41) इति कक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। उदर इत्यत्र उद्-पूर्वकात् ऋधातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3135. वृजिनम् (4-36) - वृज्-धातोः (वृजी वर्जने, अदादिः, सि.कौ. - धा.सं. 1029) **वृजेः किच्च** (उणा. 2-47) इति इनच्-प्रत्ययः सः च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। पुं. द्वि.वि. ए.व.।

3136. वृष्णीनाम् (10-37) - वृष्-धातोः (वृषु सेचनहिंसासङ्क्लेशनेषु, भ्वादिः, सि.कौ. - धा.सं. 706) **सृवृषिभ्यां कित्** (उणा. 4-49) इति नि-प्रत्ययः, सः च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। पुं. ष.वि. ब.व.।

3137. वेगम् (5-23) - विज्-धातोः (ओविजी भयचलनयोः, तुदादिः, सि.कौ. - धा.सं. 1289) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

3138. वेत्ता (11-38) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **खरि च** (8-4-55) इति चर्त्वेन दकारस्य तकारः। पुं. प्र.वि. ए.व.।

3139. वेत्ति (2-19, 4-9, 6-21, 7-3, 10-3,7, 13-1,23, 14-19, 18-21,30) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः गुणः, **खरि च** (8-4-55) इति चर्त्वेन दकारस्य तकारः। लट्. प्र.पु. ए.व.।

3140. वेत्थ (4-5, 10-15) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः सिप्, विद् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **विदो लटो वा** (पा.सू. 3-4-83) इति विकल्पेन सिपः थल्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **खरि च** (8-4-55) इति चर्त्वेन दकारस्य तकारः। लट्. म.पु. ए.व.।

3141. वेद (2-21,29, 5-5, 7-26,26, 15-1) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः तिप्, विद् तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **विदो लटो वा** (पा.सू. 3-4-83) इति तिपः णल्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। लट्. प्र.पु. ए.व.।

3142. वेदयज्ञाध्ययनैः (11-48) - वेदाश्च यज्ञाश्च वेदयज्ञाः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। वेदयज्ञानाम् अध्ययनानि वेदयज्ञाध्ययनानि तैः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। अध्ययन इत्यत्र अधि-पूर्वकात् इङ्-धातोः (इङ् अध्ययने, अदादिः, सि.कौ. - धा.सं. 1046) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, अधि अयन इत्यत्र **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. तृ.वि. ब.व.।

3143. वेदवादरताः (2-42) - वेदस्य वादाः वेदवादाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वेदवादेषु रताः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। वाद इत्यत्र वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। रत इत्यत्र रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा.सं. 853) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

3144. वेदवित् (15-1,15) - वेदं वेत्ति इति विग्रहे वेद इत्युपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. प्र.वि. ए.व.।

3145. वेदानाम् (10-22) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. ष.वि. ब.व.।

3146. वेदान्तकृत् (15-15) - वेदान्तं करोति इति विग्रहे वेदान्त इत्युपपदे कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। वेदान्त इत्यत्र वेदानाम् अन्तः **षष्ठी** (पा.सू. 2-2-8) इति समासः, वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः, अन्त इत्यत्र अति (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) इति इदित्-धातोः **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। अत्र वेदान्तः नाम वेदान्तार्थसम्प्रदायः इति। पुं. प्र.वि. ए.व.।

3147. वेदाः (2-45, 17-23) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. प्र.वि. ब.व.।

3148. वेदितव्यम् (11-18) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। नपुं. प्र.वि. ए.व.।

3149. वेदितुम् (18-1) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। अव्ययम्।

3150. वेदेषु (2-46, 8-28) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. स.वि. ब.व.।

3151. वेदे (15-18) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. स.वि. ए.व.।

3152. वेदैः (11-53, 15-1) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. तृ.वि. ब.व.।

3153. वेद्यम् (9-17, 11-38) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. प्र.वि. ए.व.।

3154. वेद्यः (15-15) - विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3155. वेपथुः (1-29) - वेप्-धातोः (टुवेपृ कम्पने, भ्वादिः, सि.कौ. - धा.सं. 367) **ट्वितोऽथुच्** (पा.सू. 3-3-89) इति अथुच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3156. वेपमानः (11-35) - वेप्-धातोः (टुवेपृ कम्पने, भ्वादिः, सि.कौ. - धा.सं. 367) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः। पुं. प्र.वि. ए.व.।

3157. वैनतेयः (10-30) - विनता-शब्दात् **स्त्रीभ्यो ढक्** (पा.सू. 4-1-120) इति ढक्-प्रत्ययः, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति ढस्य एयादेशः। विनता इति नामधेयम्, वि-पूर्वकात् नम्-धातोः (णम प्रह्वत्वे, दिवादिः, सि.कौ. - धा.सं. 981) बाहुलकात् क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

3158. वैराग्यम् (13-8, 18-52) - विराग-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। विराग इत्यत्र विगतः रागः यस्य इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः, उत्तरपदलोपश्च, राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। नपुं. प्र.वि. ए.व.।

3159. वैराग्येण (6-35) - विराग-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः। विराग इत्यत्र विगतः रागः यस्य इति विग्रहे **प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः** (वा. 1360) इति समासः, उत्तरपदलोपश्च, राग इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **घञि च भावकरणयोः** (पा.सू. 6-4-27) इति ञकारस्थानिकस्य नकारस्य लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। नपुं. तृ.वि. ए.व.।

3160. वैरिणम् (3-37) - वैर-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, वैर इत्यत्र वीर-शब्दात् **हायनान्तयुवादिभ्योऽण्** (पा.सू. 5-1-130) इति सूत्रेण अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, वीर इत्यत्र वीर-धातोः (वीर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1903) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ए.व.।

3161. वैश्यकर्म (18-44) - वैश्यानां कर्म, **षष्ठी** (पा.सू. 2-2-8) इति समासः। वैश्य इत्यत्र विश्-शब्दात् **चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्** (वा. 3091) इति वार्तिकेन ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, विश् इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

3162. वैश्याः (9-32) - वैश्य इत्यत्र विश्-शब्दात् **चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्** (वा. 3091) इति वार्तिकेन ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, विश् इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. -

धा.सं. 1424) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. प्र.वि. ब.व.।

3163. वैश्वानरः (15-14) - विश्वे नराः अस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **नरे संज्ञायाम्** (पा.सू. 6-3-129) इति विश्व-शब्दस्य अकारस्य दीर्घः, ततः विश्वानरः एव वैश्वानर इति विग्रहे विश्वानर-शब्दात् **ऋष्यन्धकविष्णुकुरुभ्यश्च** (पा.सू. 4-1-114) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। विश्व इत्यत्र विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **अशूप्रुषिलटिकणिकटिविशिभ्यः क्वन्** (उणा.1-151) इति क्वन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः क्रियते। नर इत्यत्र नॄ-धातोः (नॄ नये, भ्वादिः, सि.कौ. - धा.सं. 809) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3164. व्यक्तमध्यानि (2-28) - व्यक्तः मध्यः येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। व्यक्त इत्यत्र वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति न-लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। मध्य इत्यत्र मध्यशब्दात् **अ साम्प्रतिके** (पा.सू. 4-3-9) इति सूत्रेण अप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मध्य इति मन् धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययान्तः नकारस्य धकारादेशत्वेन निपात्यते। नपुं. प्र.वि. ब.व.।

3165. व्यक्तयः (8-18) - वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति न-लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। स्त्री. प्र.वि. ब.व.।

3166. व्यक्तिम् (7-24, 10-14) - वि-पूर्वकात् अञ्ज्-धातोः (अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु, रुधादिः, सि.कौ. - धा.सं. 1458) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति न-लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। स्त्री. द्वि.वि. ए.व.।

3167. व्यतितरिष्यति (2-52) - वि-अति-पूर्वकात् तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) लृट्, लृटः तिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यणादेशः। लृट्. प्र.पु. ए.व.।

3168. व्यतीतानि (4-5) - वि-अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, व्यति इत इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः, **इको यणचि** (पा.सू. 6-1-77) इति यणादेशः। नपुं. प्र.वि. ब.व.।

3169. व्यथन्ति (14-2) - व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) लट्, लटः झिः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। व्यथ्-इति आत्मनेपदी धातुः अतः व्यथन्ते इति भवेत्। व्यथन्ति इति परस्मैपदं तु आर्षम्।

3170. व्यथयन्ति (2-15) - व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **घटादयो मितः** (ग.सू. 187) इति मित्त्वम्, **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वः, व्यथि इति णिजन्तात् लट्, लटः झिः, व्यथि झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्,

**सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. प्र.पु. ब.व.।

3171. व्यथा (11-49) - व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) **घटादयः षितः** (ग.सू. 187) इति षित्त्वातिदेशात् **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-104) इति अङ्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

3172. व्यथिष्ठाः (11-34) - व्यथ्-धातोः (व्यथ भयसञ्चलनयोः, भ्वादिः, सि.कौ. - धा.सं. 764) लुङ्, लुङः थास्, व्यथ् थास्, **च्लि लुङि** (पा.सू. 3-1-43) इति च्लिः, **च्लेः सिच्** (3-1-44) इति सिच्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अडागमे प्राप्ते, **न माङ्योगे** (पा.सू. 6-4-74) इति अडागमस्य निषेधः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। लुङ्. म.पु. ए.व.।

3173. व्यदारयत् (1-11) - वि-पूर्वकात् दॄ-धातोः (दॄ भये, भ्वादिः, सि.कौ. - धा.सं. 808) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, दारि इति णिजन्तात् लङ्, लङः तिप्, विदारि ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अडागमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः। लङ्. प्र.पु. ए.व.।

3174. व्यनुनादयन् (1-19) - वि-अनु-पूर्वकात् नद्-धातोः (णद अव्यक्ते शब्दे, भ्वादिः, सि.कौ. - धा.सं. 54) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। व्युनादि इति णिजन्तात् लट् **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

3175. व्यपाश्रित्य (9-32) - वि-अप-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अव्ययम्।

3176. व्यपेतभीः (11-49) - व्यपेता भीः यस्मात्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। व्यपेता इत्यत्र वि-अप-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं.1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। भी इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. प्र.वि. ए.व.।

3177. व्यवसायः (10-36, 18-59) - वि-अव-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति सूत्रेण आकारान्तादेशः, ततः **श्याद्व्यधास्रुसंस्वतीणवसाऽवहलिहश्लिषश्वसश्च** (पा.सू. 3-1-141) इति ण-प्रत्ययः, **आतो युक्चिण्कृतोः** (पा.सू. 7-3-33) इति युगागमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

3178. व्यवसायात्मिका (2-41,44) - व्यवसायः आत्मा यस्याः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः क-प्रत्ययः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः** (पा.सू. 7-3-44) इति ककारात् पूर्वस्य अकारस्य इत्त्वम्। व्यवस्याय इत्यत्र वि-अव-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति सूत्रेण आकारान्तादेशः, ततः **श्याद्व्यधास्रुसंस्रवतीणवसाऽवहृलिहश्लिषश्वसश्च** (पा.सू. 3-1-141) इति ण-प्रत्ययः, **आतो युक्चिण्कृतोः** (पा.सू. 7-3-33) इति युगागमः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। स्त्री. प्र.वि. ए.व.।

3179. व्यवसितः (9-30) - वि-अव-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति सूत्रेण आकारान्तादेशः, ततः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

3180. व्यवसिताः (1-45) - वि-अव-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति सूत्रेण आकारान्तादेशः, ततः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

3181. व्यवस्थितान् (1-20) - वि-अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. द्वि.वि. ब.व.।

3182. व्यवस्थितौ (3-34) - वि-अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. द्वि.व.।

3183. व्यात्ताननम् (11-24) - व्यात्तम् आननं यस्य तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। व्यात्त इत्यत्र वि-आङ्-पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अच उपसर्गात्तः** (पा.सू. 7-4-47) इति तादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। आनन इत्यत्र आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. द्वि.वि. ए.व.।

3184. व्याप्तम् (11-20) - वि-पूर्वकात् आप्-धातोः (आप्लृ **व्याप्तौ**, स्वादिः, सि.कौ. - धा.सं. 1260) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति निषेधात् न भवति, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. प्र.वि. ए.व.।

3185. व्याप्य (10-16) - वि-पूर्वकात् आप्-धातोः (आप्लृ **व्याप्तौ**, स्वादिः, सि.कौ. - धा.सं. 1260) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अव्ययम्।

3186. व्यामिश्रेण (3-2) - वि-आङ्-पूर्वकात् मिश्र-धातोः (मिश्र सम्पर्के, चुरादिः, सि.कौ. - धा.सं. 1921) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभियो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-

4-48) इति अलोपः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, वि आ इत्यनयोः तु **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. तृ.वि. ए.व.।

3187. व्यासप्रसादात् (18-75) - व्यासस्य प्रसादः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। व्यास इत्यत्र व्यस्यति वेदान् इति विग्रहे वि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) बाहुलकात् कर्तरि घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। प्रसाद इत्यत्र प्र-पूर्वकात् षद्-धातोः (षद पद्यर्थे, चुरादादिः, सि.कौ. - धा.सं. 1832) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **धात्वादेः षः सः** (पा.सू. 6-1-64) इति षस्य सः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ए.व.।

3188. व्यासः (10-13,37) - ऋषिनाम। व्यस्यति वेदान् इति विग्रहे वि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) बाहुलकात् कर्तरि घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

3189. व्याहरन् (8-13) - वि-आङ्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ए.व.।

3190. व्युदस्य (18-51) - वि-उद्-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अव्ययम्।

3191. व्यूढम् (1-2) - वि-पूर्वकात् वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **हो ढः** (पा.सू. 8-2-31) इति हकारस्य ढकारः, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति अणः दीर्घः। पुं. द्वि.वि. ए.व.।

3192. व्यूढाम् (1-3) - वि-पूर्वकात् वह्-धातोः (वह प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 1004) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **हो ढः** (पा.सू. 8-2-31) इति हकारस्य ढकारः, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति अणः दीर्घः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

3193. व्रज (18-66) - व्रज्-धातोः (व्रज गतौ, भ्वादिः, सि.कौ. - धा.सं. 253) लोट्, लोटः सिप्, व्रज् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सि-स्थाने हि-आदेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

3194. व्रजेत (2-54) - व्रज्-धातोः (व्रज गतौ, भ्वादिः, सि.कौ. - धा.सं. 253) लिङ्, लिङः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **लिङः सीयुट्** (पा.सू. 3-4-102) इति सीयुट्, **सुट् तिथोः** (पा.सू. 3-4-107) इति सुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः। वस्तुतः व्रज्-धातुः परस्मैपदी वर्तते अतः व्रजेत् इति प्रयोगः स्यात्। प्रकृते आत्मनेपदम् आर्षम्। विधिलिङ्. प्र.पु. ए.व.।

3195. शक्नोति (5-23) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) लट्, लटः तिप्, शक् ति, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नु-प्रत्ययः **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ए.व.।

3196. शक्नोमि (1-30) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) लट्, लटः मिप्, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. उ.पु. ए.व.।

3197. शक्नोषि (12-9) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) लट्, लटः सिप्, **स्वादिभ्यः श्नुः** (पा.सू. 3-1-73) इति श्नु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. म.पु. ए.व.।

3198. शक्यसे (11-8) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) लट्, लटः थास्, शक् थास्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्-प्रत्ययः, **थासः से** (पा.सू. 3-4-80) इति थासः से-आदेशः। लट्. म.पु. ए.व.।

3199. शक्यम् (11-4, 18-11) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) **शकिसहोश्च** (पा.सू. 3-1-99) इति सूत्रेण यत्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3200. शक्यः (6-36, 11-48,53,54) - शक्-धातोः (शक्लृ शक्तौ, स्वादिः, सि.कौ. - धा.सं. 1261) **शकिसहोश्च** (पा.सू. 3-1-99) इति सूत्रेण यत्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3201. शङ्करः (10-23) - **शमि धातोः संज्ञायाम्** (पा.सू. 3-2-14) इति सूत्रेण शम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) अच्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3202. शङ्खम् (1-12) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **शमेः खः** इति (उणा. 1-102) इति सूत्रेण ख-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। पुं. द्वि.वि. ए.व.।

3203. शङ्खाः (1-13) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **शमेः खः** इति (उणा. 1-102) इति सूत्रेण ख-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। पुं. प्र.वि. ब.व.।

3204. शङ्खान् (1-18) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **शमेः खः** इति (उणा. 1-102) इति सूत्रेण ख-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। पुं. द्वि.वि. ब.व.।

3205. शङ्खौ (1-14) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **शमेः खः** इति (उणा. 1-102) इति सूत्रेण ख-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। पुं. द्वि.वि. द्वि.व.।

3206. शठः (18-28) - शठ्-धातोः (शठ कैतवे हिंसासङ्क्लेशनयोः द्यूते स्पर्धायां च, भ्वादिः, सि.कौ. - धा.सं. 340) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. प्र.वि. ए.व.।

3207. शतशः (11-5) - शत-शब्दात् **संख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति सूरेण शस्-प्रत्ययः। शत इति **पङ्क्ति-विंशति-त्रिंशत्-चत्वारिंशत्-पञ्चाशत्-षष्टि-सप्तति-अशीति-नवति-शतम्** (पा.सू. 5-1-59) इति निपातनात् निष्पन्नम्, अत्र दशानां दशतां स्थाने श-आदेशः त-प्रत्ययश्च निपात्यते, दशत् इति शब्दः **पञ्चद्दशतौ वर्गे वा** (पा.सू. 5-1-60) इति सूत्रेण दश परिमाणम् अस्य इत्यर्थे निपात्यते।

3208. शत्रुत्वे (6-6) - शत्रोः भावः इत्यर्थे **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। शत्रु इत्यत्र शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः,

**प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। नपुं. स.वि. ए.व.।

3209. शत्रुवत् (6-6) - शत्रु-शब्दात् **तत्र तस्येव** (पा.सू. 5-1-116) इति वति-प्रत्ययः। शत्रु इत्यत्र शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः, **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। अव्ययम्।

3210. शत्रुम् (3-43) - शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः, **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। पुं. द्वि.वि. ए.व.।

3211. शत्रुः (16-14) - शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः, **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। पुं. प्र.वि. ए.व.।

3212. शत्रून् (11-33) - शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः, **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। पुं. द्वि.वि. ब.व.।

3213. शत्रौ (12-18) - शद्-धातोः (शद्लृ शातने, भ्वादिः, सि.कौ. - धा.सं. 855) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **शदेरगतौ तः** (पा.सू. 7-3-42) इति दस्य तः, **रुशातिभ्यां क्रुन्** (उणा. 4-103) इति शाति इति णिजन्तात् क्रुन्-प्रत्ययः, **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति सूत्रे पठिते प्रज्ञादिगणे शत्रु-शब्दः ह्रस्वत्वेन पठितः अतः शत्रुः इति ह्रस्व-अकारयुक्तः सिध्यति, उपधावृद्ध्या लब्धः आकारः ह्रस्वः जायते इत्यर्थः। पुं. स.वि. ए.व.।

3214. शनैः (6-25,25) - शान्-धातोः (शान तेजने निशाने च, भ्वादिः, सि.कौ. - धा.सं. 995) ऐस्-प्रत्ययः, पृषोदरादित्वात् (पा.सू. 6-4-109) धातोः आकारस्य ह्रस्वः। अव्ययम्।

3215. शब्दब्रह्म (6-44) - शब्दरूपं ब्रह्म, **शाकपार्थिवादीनासिद्धये उत्तरपदलोपस्योपसंख्यानम्** इति समासः उत्तरपदलोपः। शब्द इत्यत्र शप्-धातोः (शप आक्रोशे, भ्वादिः, सि.कौ. - धा.सं. 1000) **शाशपिभ्यां ददनौ** (उणा. 4-97) इति दन्-प्रत्ययः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पस्य बकारादेशः, अथवा शब्द्-धातोः (शब्द आविष्कारे, भ्वादिः, सि.कौ. - धा.सं. 1715) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। ब्रह्मन् इत्यत्र बृन्ह्-धातोः (बृहि वृद्धौ शब्दे च, भ्वादिः, सि.कौ. - धा.सं. 736) **बृंहेर्नोच्च** (उणा. 4-145) इति सूत्रेण मनिन्-प्रत्ययः नकारस्य अकारः च, **इको यणचि** (पा.सू. 6-1-77) इति यण्। नपुं. द्वि.वि. ए.व.।

3216. शब्दः (1-13, 7-8) - शप्-धातोः (शप आक्रोशे, भ्वादिः, सि.कौ. - धा.सं. 1000) **शाशपिभ्यां ददनौ** (उणा. 4-97) इति दन्-प्रत्ययः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पस्य बकारादेशः, अथवा शब्द्-धातोः (शब्द आविष्कारे, भ्वादिः, सि.कौ. - धा.सं. 1715) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः पुं. प्र.वि. ए.व.।

3217. शब्दादीन् (4-23, 18-51) - शब्दः आदिः येषां तान्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शब्द इत्यत्र शप्-धातोः (शप आक्रोशे, भ्वादिः, सि.कौ. - धा.सं. 1000) **शाशपिभ्यां ददनौ** (उणा. 4-97) इति दन्-प्रत्ययः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पस्य बकारादेशः, अथवा शब्द्-धातोः (शब्द आविष्कारे, भ्वादिः, सि.कौ. - धा.सं. 1715) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ब.व.।

3218. शमम् (11-24) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धौ प्राप्तायां **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति सूत्रेण वृद्धेः निषेधः। पुं. द्वि.वि. ए.व.।

3219. शमः (6-3, 10-4, 18-42) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धौ प्राप्तायां **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (पा.सू. 7-3-34) इति सूत्रेण वृद्धेः निषेधः। पुं. प्र.वि. ए.व.।

3220. शंससि (5-1) - शंस्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) लट्, लटः सिप्, शंस् सि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। लट्. म.पु. ए.व.।

3221. शरणम् (2-49, 9-18,18,62,66) - शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** इति यु-स्थाने अनादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. द्वि.वि. ए.व.।

3222. शरीरम् (15-8) - शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

3223. शरीरयात्रा (3-8) - शरीरस्य यात्रा **षष्ठी** (पा.सू. 2-2-8) इति समासः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। यात्रा इत्यत्र या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) **हुयामाश्रुभसिभ्यस्त्रन्** (उणा. 4-167) इति त्रन्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

3224. शरीरवाङ्मनोभिः (18-15) - शरीरं च वाक् च मनश्च शरीवाङ्मनांसि तैः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। वाच् इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं** (उणा. 2-58) इति क्विप्-प्रत्ययः धातोः दीर्घः **वचिस्वपियजादीनां किति** (पा.सू. 6-1-15) इत्यनेन प्राप्तं सम्प्रसारणं च निषिध्यते, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

3225. शरीरविमोक्षणात् (5-23) - शरीरस्य विमोक्षणं तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। विमोक्षण इत्यत्र वि-पूर्वकात् मोक्ष्-धातोः (मोक्ष मोचने, चुरादिः इति कविकल्पद्रुमः) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः

**ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** इति अनादेशः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. पं.वि. ए.व.।

3226. शरीरस्थम् (17-6) - शरीरे तिष्ठति यः तम्, **सुपि स्थः** इति शरीर-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3227. शरीरस्थः (13-31) - शरीरे तिष्ठति, **सुपि स्थः** इति शरीर-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3228. शरीराणि (2-22) - शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

3229. शरीरिणः (2-18) - शरीर-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः। शरीर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

3230. शरीरे (1-29, 2-20, 11-13) - शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. स.वि. ए.व.।

3231. शर्म (11-25) - **सर्व्वधातुभ्यो मनिन्** (उणा. 4-144) शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

3232. शशाङ्कः (11-39, 15-6) - शशः अङ्कः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शश इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) (3-1-134) इति अच्। अङ्क इत्यत्र अक्-धातोः (अकि लक्षणे, भ्वादिः, सि.कौ. - धा.सं. 87) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ङकारः। पुं. प्र.वि. ए.व.।

3233. शशिसूर्यनेत्रम् (11-19) - शशी च सूर्यश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शशिसूर्यौ नेत्रे यस्य तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शशिन् इत्यत्र शश-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः, शश इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) (3-1-134) इति अच्-प्रत्ययः। सूर्य इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** (पा.सू. 3-1-114) इति सूत्रेण क्यप्-प्रत्ययः क्यपः च रुडागमः निपात्यते। नेत्र इत्यत्र नी-धातोः (णीञ् प्रापणे, भ्वादिः, सि.कौ. - धा.सं. 901) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण ष्ट्रन् इति प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3234. शशिसूर्ययोः (7-8) - शशी च सूर्यश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शशिन् इत्यत्र शश-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, शश इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) (3-1-134) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः।

सूर्य इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** (पा.सू. 3-1-114) इति सूत्रेण क्यप्-प्रत्ययः क्यपः च रुडागमः निपात्यते। पुं. ष.वि. द्वि.व.।

3235. शशी (10-21) - शश-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः **यस्येति च** (पा.सू. 6-4-148) अ-लोपः, शश इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) (3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3236. शश्वत् (9-31) - शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। अव्ययम्।

3237. शस्त्रपाणयः (1-46) - शस्त्रं पाणौ येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शस्त्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) ष्ट्रन्-प्रत्ययः। पाणि इत्यत्र **अशिपणाय्यो रुडायलुकौ च** (उणा. 4-132) इति पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) इण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ब.व.।

3238. शस्त्रभृताम् (10-31) - शस्त्रं बिभ्रति ये तेषाम्, शस्त्र-उपपदे भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्। शस्त्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) ष्ट्रन्-प्रत्ययः। पुं. ष.वि. ब.व.।

3239. शस्त्रसम्पाते (1-20) - शस्त्राणां सम्पातः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। शस्त्र इत्यत्र **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहःकरणे** (पा.सू. 3-2-182) इति सूत्रेण शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) ष्ट्रन्-प्रत्ययः। सम्पात इत्यत्र सम्पूर्वकात् पत्-धातोः (पतॢ गतौ, भ्वादिः, सि.कौ. - धा.सं.845) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. स.वि. ए.व.।

3240. शस्त्राणि (2-23) - शस्-धातोः (शसु हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 727) **दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे** (पा.सू. 3-2-182) इति सूत्रेण ष्ट्रन् इति प्रत्ययः। नपुं. प्र.वि. ब.व.।

3241. शाखाः (15-2) - शाख्-धातोः (शाखृ व्याप्तौ, भ्वादिः, सि.कौ. - धा.सं. 126) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

3242. शाधि (2-7) - शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) लोट्, लोटः सिप्, शास् सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **शा हौ** (पा.सू. 6-4-35) इति शा-आदेशः, **हुझल्भ्यो हेर्धिः** (पा.सू. 6-4-101) इति हेः धि-आदेशः। लोट्. म.पु. ए.व.।

3243. शान्तरजसम् (6-27) - शान्तं रजः यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शान्त इत्यत्र शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-115) इति उपधायाः दीर्घः। रजस् इत्यत्र रञ्ज्-धातोः (रञ्ज रागे, दिवादिः, सि.कौ. - धा.सं. 1167) **भूरञ्जिभ्यां कित्** (उणा. 4-4216) इति असुन्-प्रत्ययः, कित्त्वात् **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधानकारस्य लोपः। पुं. द्वि.वि. ए.व.।

3244. शान्तः (18-53) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-115) इति उपधायाः दीर्घः। पुं. प्र.वि. ए.व.।

3245. शान्तिम् (2-70,71, 4-39, 5-12,29, 6-15, 9-31, 18-62) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-115) इति उपधायाः दीर्घः। स्त्री. द्वि.वि. ए.व.।

3246. शान्तिः (2-66, 12-12, 16-2) - शम्-धातोः (शमु उपशमे, दिवादिः, सि.कौ. - धा.सं. 1201) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुनासिकस्य क्विझलोः क्ङिति** (पा.सू. 6-4-115) इति उपधायाः दीर्घः। स्त्री. प्र.वि. ए.व.।

3247. शारीरम् (4-21, 17-14) - शरीर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः। शरीर इत्यत्र **कॄशॄपॄकटिपटिशौटिभ्य ईरन्** (उणा. 4-30) इति शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) ईरन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

3248. शाश्वतधर्मगोप्ता (11-18) - शाश्वतः धर्मः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। शाश्वतधर्मस्य गोप्ता, **षष्ठी** (पा.सू. 2-2-8) इति समासः। शाश्वत इत्यत्र शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। गोप्तृ इत्यत्र गुप्-धातोः (गुपू रक्षणे, भ्वादिः, सि.कौ. - धा.सं. 395) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधागुणः। पुं. प्र.वि. ए.व.।

3249. शाश्वतस्य (14-27) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। पुं. ष.वि. ए.व.।

3250. शाश्वतम् (18-56,62) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

3251. शाश्वतः (2-20) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3252. शाश्वताः (1-43) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। पुं. प्र.वि. ब.व.।

3253. शाश्वतीः (6-41) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-

धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, शश्वत् इत्यत्र शश्-धातोः बाहुलकात् वत्-प्रत्ययः। स्त्री. द्वि.वि. ब.व.।

3254. शाश्वते (8-26) - शश्वत्-शब्दात् **तत्र भवः** (पा.सू. 4-3-53) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **तसौ मत्वर्थे** (पा.सू. 1-4-19) इति भ-संज्ञया **स्वादिष्वसर्वनामस्थाने** (पा.सू. 1-4-17) इति प्राप्तायाः पदसंज्ञायाः बाधात् **झलां जशोऽन्ते** (पा.सू. 8-2-39) इत्यनेन शश्वत्-शब्दस्य तकारस्य दकारः न भवति, शश्वत् इत्यत्र शश्-धातोः (शश प्लुतगतौ, भ्वादिः, सि.कौ. - धा.सं. 726) बाहुलकात् वत्-प्रत्ययः। स्त्री. प्र.वि. द्वि.व.।

3255. शास्त्रविधानोक्तम् (16-24) - शास्त्रस्य विधानम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः, शास्त्रविधानेन उक्तम् **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। शास्त्र इत्यत्र शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः। विधान इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **करणाधिकरणयोश्च** (पा.सू. 3-3-117) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। उक्त इत्यत्र वच्-धातोः (वच परिभाषणे, अदादिः, सि.कौ. - धा.सं. 1063) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **वचिस्वपियजादीनां किति** इति सम्प्रसारणम्, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। नपुं. द्वि.वि. ए.व.।

3256. शास्त्रविधिम् (16-23, 17-1) - शास्त्रोक्तः विधिः **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसङ्ख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च। शास्त्र इत्यत्र शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः। विधि इत्यत्र वि-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. द्वि.वि. ए.व.।

3257. शास्त्रम् (15-20, 16-24) - शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः।-प्रत्ययः नपुं. प्र.वि. ए.व.।

3258. शिखण्डी (1-17) - द्रुपदस्य पुत्रः। शिखण्ड अस्मिन् अस्य अस्ति इति विग्रहे शिखण्ड-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः। शिखण्ड इत्यत्र शिखिन् इति उपपदे अम्-धातोः (अम गतौ शब्दे सम्भक्तौ च, भ्वादिः, सि.कौ. - धा.सं. 465) **ञमन्ताड्डः** (उणा. 1-111) इति ड-प्रत्ययः न डित्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः णकारः, शिखिन् अण्ड इति स्थिते, **शकन्ध्वादिषु पररूपं वाच्यम्** (वा. 3632) इति टेः इन् इत्यस्य पररूपम्, शिखिन् इत्यत्र शिखा-शब्दात् **व्रीह्यादिभ्यश्च** (पा.सू. 5-2-116) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) आ-लोपः, शिखा इत्यत्र शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **शीङो ह्रस्वश्च** (उणा. 5-24) इति सूत्रेण ख-प्रत्ययः धातोः ह्रस्वः च, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

3259. शिखरिणाम् (10-23) - शिखर-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) अ-लोपः। शिखर इत्यत्र शिखा-शब्दात् **वुञ्छण्कठजिलशेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाऽश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः** (पा.सू. 4-2-80) इत्यत्र अश्मादित्वात् र-प्रत्ययः शिखा इति शब्दस्य ह्रस्वान्तादेशः च। शिखा इत्यत्र शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **शीङो ह्रस्वश्च** (उणा. 5-24) इति सूत्रेण ख-प्रत्ययः धातोः ह्रस्वः च, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ब.व.।

3260. शिरसा (11-14) - श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **श्रयतेः स्वाङ्गे शिरः किच्च** (उणा. 4-193) इति असुन्-प्रत्ययः धातोः च शिर इति आदेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। नपुं. तृ.वि. ए.व.।

3261. शिष्यः (2-7) - शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **एतिस्तुशास्वृदृजुषः क्यप्** (पा.सू. 3-1-109) इति क्यप्, **शास इदङ्हलोः** (पा.सू. 6-4-34) इति धातोः आकारस्य स्थाने इत्वम्, **शासिवसिघसीनाञ्च** (पा.सू. 8-3-60) इति सस्य षत्वम्। पुं. प्र.वि. ए.व.।

3262. शिष्येण (1-3) - शास्-धातोः (शासु अनुशिष्टौ, अदादिः, सि.कौ. - धा.सं. 1075) **एतिस्तुशास्वृदृजुषः क्यप्** (पा.सू. 3-1-109) इति क्यप्, **शास इदङ्हलोः** (पा.सू. 6-4-34) इति धातोः आकारस्य स्थाने इत्वम्, **शासिवसिघसीनाञ्च** (पा.सू. 8-3-60) इति सस्य षत्वम्। पुं. तृ.वि. ए.व.।

3263. शीतोष्णसुखदुःखदाः (2-14) - शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः, ततः शीतोष्णसुखदुःखानि ददाति इति विग्रहे शीतोष्णसुखदुःख इत्युपपदे दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **आतोऽनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। शीत इत्यत्र श्यै-धातोः (श्यैङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 963) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **द्रवमूर्तिस्पर्शयोः श्यः** (पा.सू. 6-1-45) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **हलः** (पा.सू. 6-4-2) इति दीर्घः, **श्योऽस्पर्शे** (पा.सू. 8-2-47) इति पर्युदासात् निष्ठा (पा.सू. 3-2-102) तस्य नत्वं न। उष्ण इत्यत्र उष्-धातोः (उष दाहे, भ्वादिः, सि.कौ. - धा.सं. 696) **इण्सिञ्जिदीङुष्यविभ्यो नक्** (उणा. 3-02) इति नक्-प्रत्ययः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

3264. शीतोष्णसुखदुःखेषु (6-7, 12-18) - शीतं च उष्णं च सुखं च दुःखं च शीतोष्णसुखदुःखानि तेषु, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्वः। शीत इत्यत्र श्यै-धातोः (श्यैङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 963) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **द्रवमूर्तिस्पर्शयोः श्यः** (पा.सू. 6-1-45) इति सम्प्रसारणम्, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, **हलः** (पा.सू. 6-4-2) इति दीर्घः, **श्योऽस्पर्शे** (पा.सू. 8-2-47) इति पर्युदासात् निष्ठा (पा.सू. 3-2-102) तस्य नत्वं न। उष्ण इत्यत्र उष्-धातोः (उष दाहे, भ्वादिः, सि.कौ. - धा.सं. 696) **इण्सिञ्जिदीङुष्यविभ्यो नक्** (उणा. 3-02) इति नक्-प्रत्ययः, **रषाभ्यां नो णः समानपदे** (पा.सू. 8-4-1) इति णत्वम्। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. स.वि. ब.व.।

3265. शुक्लकृष्णे (8-26) - शुक्ला च कृष्णा च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शुक्ला इत्यत्र शुक्-धातोः (शुक गतौ, भ्वादिः इति कविकल्पद्रुमः) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययः रेफस्य च लत्वं निपात्यते, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। कृष्णा इत्यत्र कृष्-धातोः (कृष

विलेखने, भ्वादिः, सि.कौ. - धा.सं. 990) **कृषेर्वर्णे** (उणा. 3-4) इति नक्, ततः कृष्णः अस्य अस्ति इत्यर्थे कृष्णशब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्, ततः **गुणवचनेभ्यो मतुपो लुक्** (वा. 3185) इति मतुपः लुक्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. द्वि.व.।

3266. शुक्लः (8-24) - शुक्-धातोः (शुक गतौ, भ्वादिः इति कविकल्पद्रुमः) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययः रेफस्य च लत्वं निपात्यते। पुं. प्र.वि. ए.व.।

3267. शुचः (16-5, 18-66) - माङ्-योगे शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) लुङ्, लुङः सिप्, **च्लि लुङि** (पा.सू. 3-1-43) इति च्लिप्रत्ययः, **इरितो वा** (पा.सू. 3-1-57) इति च्लेः अङादेशः, **इतश्च** (पा.सू. 3-4-100) इति इकारलोपः, **लुङ्लङ्लृङ्क्ष्वडुदात्तः** (पा.सू. 6-4-71) इति अडागमे प्राप्ते, **न माङ्योगे** (पा.सू. 6-4-74) इति अडागमस्य निषेधः। लुङ्. म.पु. ए.व.।

3268. शुचिः (12-16) - शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। पुं. प्र.वि. ए.व.।

3269. शुचीनाम् (6-41) - शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। पुं. ष.वि. ब.व.।

3270. शुचौ (6-11) - शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इत्यनेन निषेधः। पुं. स.वि. ए.व.।

3271. शुनि (5-18) - श्वन् इति **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्जन्मातरिश्वन्मघवन्निति** (उणा. 1-157) इति श्वि-धातोः (टुओश्वि गतिवृद्ध्योः, भ्वादिः, सि.कौ. - धा.सं. 1010) कनिन्-प्रत्ययान्तः शब्दः निपातनात् सिद्धः भवति। पुं. स.वि. ए.व.।

3272. शुभान् (18-71) - शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ब.व.।

3273. शुभाः () - शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3274. शुभाशुभपरित्यागी (12-17) - शुभं च अशुभं च अनयोः समाहारः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शुभाशुभयोः परित्यागी **षष्ठी** (पा.सू. 2-2-8) इति समासः। शुभ इत्यत्र शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति कप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अशुभ इत्यत्र न शुभः, **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। परित्यागिन् इत्यत्र परि-पूर्वकात् त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजा**

**तिचरापचरामुषाभ्याहनश्च** (पा.सू 3-2-142) इति घिनुण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3275. शुभाशुभफलैः (9-28) - शुभानि च अशुभानि च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, शुभाशुभानां फलैः **षष्ठी** (पा.सू. 2-2-8) इति समासः। शुभ इत्यत्र शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति कप्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अशुभ इत्यत्र न शुभः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. तृ.वि. ब.व.।

3276. शुभाशुभम् (2-57) - शुभं च अशुभं च अनयोः समाहारः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। शुभ इत्यत्र शुभ्-धातोः (शुभ भाषणे भासने हिंसायां च, भ्वादिः, सि.कौ. - धा.सं. 432) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-134) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अशुभ इत्यत्र न शुभः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। नपुं. द्वि.वि. ए.व.।

3277. शूद्रस्य (18-44) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **शुचेर्दश्च** (उणा. 2-19) इति रक्-प्रत्ययः दीर्घश्च। पुं. ष.वि. ए.व.।

3278. शूद्राणाम् (18-41) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **शुचेर्दश्च** (उणा. 2-19) इति रक्-प्रत्ययः दीर्घश्च। पुं. ष.वि. ब.व.।

3279. शूद्राः (9-32) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **शुचेर्दश्च** (उणा. 2-19) इति रक्-प्रत्ययः दीर्घश्च। पुं. प्र.वि. ब.व.।

3280. शूराः (1-4,9) - शूर्-धातोः (शूर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1902) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

3281. शृणु (2-39, 7-1, 10-1, 13-3, 16-6, 17-2,7, 18-4,19,29,36,45,64) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लोट्, लोटः सिप्, श्रु सिप्, **श्रुवः शृ च** (पा.सू. 3-1-74) इति श्नु-प्रत्ययः शृ-आदेशश्च, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **उतश्च प्रत्ययादसंयोगपूर्वात्** (पा.सू. 6-4-106) इति हेः लुक्। लोट्. म.पु. ए.व.।

3282. शृणुयात् (18-71) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लिङ्, लिङः तिप्, **श्रुवः शृ च** (पा.सू. 3-1-74) इति श्नु-प्रत्ययः शृ-आदेशश्च, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्-आगमः, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सलोपः, **इतश्च** (पा.सू. 3-4-100) इति इलोपः। विधिलिङ्. प्र.पु. ए.व.।

3283. शृणोति (2-29) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लट्, लटः तिप्, **श्रुवः शृ च** (पा.सू. 3-1-74) इति श्नु-प्रत्ययः शृ-आदेशश्च, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ए.व.।

3284. शृण्वतः (10-18) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **श्रुवः शृ च** (पा.सू. 3-1-74) इति श्नु-प्रत्ययः शृ-आदेशश्च, **हुश्नुवोः सार्वधातुके** (पा.सू. 6-4-87) इति यणादेशः। पुं. ष.वि. ए.व.।

3285. शृण्वन् (5-8) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **श्रुवः शृ च** (पा.सू. 3-1-74) इति श्नु-प्रत्ययः शृ-आदेशश्च, **हुश्नुवोः सार्वधातुके** (पा.सू. 6-4-87) इति यणादेशः। पुं. प्र.वि. ए.व.।

3286. शैब्यः (1-5) - शिबि-शब्दात् **वृद्धेत्कोसलाजादाञ्ञ्यङ्** (पा.सू. 4-1-171) ञ्यङ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इ-लोपः। शिवि इत्यत्र शि-धातोः (शिञ् निशाने, स्वादिः, सि.कौ. - धा.सं. 1249) बाहुलकात् वि-प्रत्ययः, माधवाद्यावार्याणां मते लक्ष्यानुरोधेन बवयोरभेदस्वीकारात् वस्य बः। पुं. प्र.वि. ए.व.।

3287. शोकम् (2-8, 18-35) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

3288. शोकसंविग्नमानसः (1-4) - शोकेन संविग्नम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः, शोकसंविग्नं मानसं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। शोक इत्यत्र शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। संविग्न इत्यत्र सम्पूर्वकात् विज्-धातोः (विजिर् पृथग्भावे, जुहोत्यादिः, सि.कौ. - धा.सं. 1094) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **श्वीदितो निष्ठायाम्** (पा.सू. 7-2-14) इति तस्य इडागमनिषेधः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **ओदितश्च** (पा.सू. 8-2-45) इति निष्ठातकास्य नकारः, समः मकारस्य **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः। मानस इत्यत्र मनस्-शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, मनस् इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3289. शोचति (12-17, 18-54) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) लट्, लोटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। लट्. प्र.पु. ए.व.।

3290. शोचितुम् (2-26, 27-30) - शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अव्ययम्।

3291. शोषयति (2-23) - शुष्-धातोः (शुष शोषणे, दिवादिः, सि.कौ. - धा.सं. 1183) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, तस्मात् लट्, लटः तिप्। **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति अयादेशः। लट्. प्र.पु. ए.व.।

3292. शौचम् (13-7, 16-3,7,17-14, 18-42) - शुचि-शब्दात् **इगन्ताच्च लघुपूर्वात्** (पा.सू. 5-1-131) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-कारलोपः। शुचि इत्यत्र शुच्-धातोः (ईशुचिर् पूतीभावे, दिवादिः, सि.कौ. - धा.सं. 1165) **इगुपधात् कित्** (उणा. 4-119) इति इन्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3293. शौर्यम् (18-43) - शूर-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-125) इति ष्यञ्प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति इ-कारलोपः। शूर इत्यत्र शूर्-धातोः (शूर विक्रान्तौ, चुरादिः, सि.कौ. - धा.सं. 1902) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्**

(पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

3294. श्यालाः (1-34) - श्यै-धातोः (श्यैङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 963) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **उणादयो बहुलम्** (पा.सू. 3-3-1) इति बाहुलकात् कालन्, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ब.व.।

3295. श्रद्दधानाः (12-32) - श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण शानच्-प्रत्ययः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **जुहोत्यादिभ्यः श्लुः** (पा.सू. 2-4-75) इति श्लु-प्रत्ययः, **श्लौ** (पा.सू. 6–1-10) इति द्वित्वम्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। पुं. प्र.वि. ब.व.।

3296. श्रद्धया (6-37, 7-21,22, 9-23, 12-2, 17-1,17- श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। स्त्री. तृ.वि. ए.व.।

3297. श्रद्धा (17-2,3) - श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। स्त्री. प्र.वि. ए.व.।

3298. श्रद्धामयः (17-3) - श्रद्धा-शब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्-प्रत्ययः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। पुं. प्र.वि. ए.व.।

3299. श्रद्धावन्तः (3-31) - श्रद्धा-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। पुं. प्र.वि.ब.व.।

3300. श्रद्धावान् (4-39, 6-47, 18-71) - श्रद्धा-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वकारः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। पुं. प्र.वि. ए.व.।

3301. श्रद्धाविरहितम् (17-13) - श्रद्धया विरहितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति समासः। श्रद्धा इत्यत्र श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-

धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। विरहित इत्यत्र वि-पूर्वकात् रह्-धातोः (रह् त्यागे, भ्वादिः, सि.कौ. - धा.सं. 731) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः। पुं. द्वि.वि. ए.व.।

3302. श्रद्धाम् (7-21) - श्रत्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। श्रत् इत्यत्र श्रोण्-धातोः (श्रोणृ सङ्घाते, भ्वादिः, सि.कौ. - धा.सं. 1092) बाहुलकात् डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, अव्ययम् इदं श्रद्धार्थे। स्त्री. द्वि.वि. ए.व.।

3303. श्रिताः (9-12) - श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **श्र्युकः किति** (पा.सू. 7-2-11) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3304. श्रीभगवान् (2-2,11,55, 3-3,37, 4-1,5, 5-2,6,1,35,40, 7-1, 8-3, 9-1, 10-1,19, 11-5,32,37,52, 12-2, 13-1, 14-1,22, 15-1, 16-1, 17-2, 18-2) - श्रीसहितः भगवान् श्रीभगवान्, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति समासः उत्तरपदलोपश्च। श्री इत्यत्र **क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** (वा. 2147) इति वार्तिकेन श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) क्विप्-प्रत्ययः दीर्घश्च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। भगवत् इत्यत्र भग-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः** (पा.सू. 8-2-9) इति मकारस्य वादेशः। भग इत्यत्र भज्-धातोः (भज सेवायाम्, भ्वादिः, सि.कौ. - धा.सं.998) **पुंसि घः संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घ-प्रत्ययः, **चजोः कु घिण्ण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ए.व.।

3305. श्रीमत् (10-41) - श्री-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्। श्री इत्यत्र **क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** (वा. 2147) इति वार्तिकेन श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) क्विप्-प्रत्ययः दीर्घश्च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। नपुं. प्र.वि. ए.व.।

3306. श्रीमताम् (6-41) - श्री-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्। श्री इत्यत्र **क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** (वा. 2147) इति वार्तिकेन श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) क्विप्-प्रत्ययः दीर्घश्च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. ष.वि. ब.व.।

3307. श्रीः (10-34, 18-78) - **क्विब्वचिप्रच्छायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च** (वा. 2147) इति वार्तिकेन श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) क्विप् दीर्घश्च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि. ए.व.।

3308. श्रुतवान् (18-75) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **निष्ठा** (पा.सू. 3-2-102) इति क्तवतु-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। पुं. प्र.वि. ए.व.।

3309. श्रुतस्य (2-52) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। नपुं. ष.वि. ए.व.।

3310. श्रुतम् (18-72) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। नपुं. प्र.वि. ए.व.।

3311. श्रुतिपरायणाः (13-25) - श्रुतौ परायणाः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। श्रुति इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **श्रुयजिस्तुभ्यः करणे** (वा. 2212) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। परायण इत्यत्र परम् अयनम् इति विग्रहे **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, तनादिः, सि.कौ. - धा.सं. 1463) **नन्दिग्रहादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अयन इत्यत्र अय्-धातोः **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, अथवा परायण इत्यत्र परा-उपसर्गात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं. 474) **कृत्यल्युटो बहुलम्** (पा.सू. 3-3-113) इति कर्मणि ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **कृत्यचः** (पा.सू. 8-4-29) इति णत्वम्। पुं. प्र.वि. ब.व.।

3312. श्रुतिविप्रतिपन्ना (2-53) - श्रुतौ विप्रतिपन्नाः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। श्रुति इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **श्रुयजिस्तुभ्यः करणे** (वा. 2212) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। विप्रतिपन्न इत्यत्र वि-पूर्वकात् प्रतिपूर्वकाच्च पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं. 1169) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **रदाभ्यां निष्ठातो नः पूर्वस्य च दः** (पा.सू. 8-2-42) इति निष्ठा-तकारस्य पूर्वस्य दकारस्य च नत्वम्। स्त्री. प्र.वि. ए.व.।

3313. श्रुतौ (11-2) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **श्रुयजिस्तुभ्यः करणे** (वा. 2212) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। स्त्री. स.वि. ए.व.।

3314. श्रुत्वा (2-29, 11-35, 13-25) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। अव्ययम्।

3315. श्रेयः (1-31, 2-5,7,31, 3-2,11,35, 5-1, 12-12, 16-22) - प्रशस्य-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इति प्रशस्य-शब्दस्य स्थाने श्रादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। नपुं. द्वि.वि. ए.व.।

3316. श्रेयान् (3-35, 4-33, 18-47) - प्रशस्य-शब्दात् **द्विवचनविभज्योपपदे तरबीयसुनौ** (पा.सू. 5-3-57) इति ईयसुन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इति प्रशस्य-शब्दस्य स्थाने श्रादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः, प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. प्र.वि. ए.व.।

3317. श्रेष्ठः (3-21) - प्रशस्य इति शब्दात् **अजादी गुणवचनादेव** (पा.सू. 5-3-58) इति नियमेन **अतिशायने तमबिष्ठनौ** (पा.सू. 5-3-55) इति इष्ठन्-प्रत्ययः, **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) प्रशस्य-शब्दस्य स्थाने श्रादेशः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। प्रशस्य इति **प्रशस्यस्य श्रः** (पा.सू. 5-3-60) इत्यत्र प्र-पूर्वकात् शन्स्-धातोः (शन्सु स्तुतौ, भ्वादिः, सि.कौ. - धा.सं. 728) क्यप्-प्रत्ययान्तः निपातनेन सिद्धः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। पुं. प्र.वि. ए.व.।

3318. श्रोतव्यस्य (2-52) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **तव्यत्तव्यानीयरः** (पा.सू. 3-1-96) इति तव्यत्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेध। नपुं. ष.वि. ए.व.।

3319. श्रोत्रम् (15-9) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. द्वि.वि. ए.व.।

3320. श्रोत्रादीनि (4-26) - श्रोत्रम् आदिः येषां तानि, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। श्रोत्र इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। आदि इत्यत्र आङ्पूर्वकात् दा-धातोः (डुदाञ् दाने, जुहोत्यादिः, सि.कौ. - धा.सं. 1091) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति कि-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। नपुं. द्वि.वि. ब.व.।

3321. श्रोष्यसि (18-58) - श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) लृट्, लृटः सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **एकाच उपदेशे अनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। लृट्. म.पि. ए.व.।

3322. श्वपाके (5-18) - श्वानं पचति, श्वन्-उपपदे पच्-धातोः (डुपचष् पाके, भ्वादिः, सि.कौ. - धा.सं. 996) **कर्मण्यण्** (पा.सू. 3-2-1) इति अण्, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्। श्वन् इति **श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्जन्मातरिश्वन्मघवन्निति** (उणा. 1-157) इति श्वि-धातोः (टुओश्वि गतिवृद्ध्योः, भ्वादिः, सि.कौ. - धा.सं. 1010) कनिन्-प्रत्ययान्तः शब्दः निपातनात् सिद्धः भवति। पुं. स.वि. ए.व.। श्वपचा

3323. श्वसन् (5-9) - श्वस्-धातोः (श्वस प्राणने, अदादिः, सि.कौ. - धा.सं. 1069) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। पुं. प्र.वि. ए.व.।

3324. श्वशुरान् (1-27) - शु-पूर्वकात् अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **शावशेराप्तौ** (उणा. 1-44) इति उरन्, **इको यणचि** (पा.सू. 6-1-77) इति यण् इति यण्। शु इति प्रशंसाश्चर्यादिषु अर्थेषु अव्ययम् बाहुलकात् शो-धातोः (शो तनूकरणे, दिवादिः, सि.कौ. - धा.सं. 1145) डु-प्रत्यये कृते सिद्ध्यति, डित्त्वसामर्थ्यात् धातोः टेः लोपः। पुं. द्वि.वि. ब.व.।

3325. श्वशुराः (1-34) - शु-पूर्वकात् अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **शावशेराप्तौ** (उणा. 1-44) इति उरन्, **इको यणचि** (पा.सू. 6-1-77) इति यण् इति यण्। शु इति प्रशंसाश्चर्यादिषु अर्थेषु अव्ययम् बाहुलकात् शो-धातोः (शो तनूकरणे, दिवादिः, सि.कौ. - धा.सं. 1145) डु-प्रत्यये कृते सिद्ध्यति, डित्त्वसामर्थ्यात् धातोः टेः लोपः। पुं. प्र.वि. ब.व.।

3326. श्वेतैः (1-14) - श्वित्-धातोः (श्विता वर्णे, भ्वावादिः, सि.कौ. - धा.सं. 742) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. तृ.वि. ब.व.।

3327. षट् (8-24,25) - षष् इत्यस्य षो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) क्विपि **पृषोदरादीनि यथोपदिष्टम्** (पा.सू. 6-3-109) इति साधुत्वम्, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। पुं. प्र.वि. ब.व.।

3328. सक्तम् (18-22) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। नपुं. प्र.वि. ए.व.।

3329. सक्तः (5-12) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ए.व.।

3330. सक्ताः (3-25) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्। पुं. प्र.वि. ब.व.।

3331. सखा (4-3, 11-41,44) - सखि इति मूलशब्दः अत्र, समानः ख्यायते इति विग्रहे समान इति उपपदे ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **समाने ख्यः स चोदात्तः** (उणा. 4-136) इति सूत्रेण इञ्-प्रत्ययः भवति स च डित् भवति, डित्त्वसामर्थ्यात् टेः लोपः, अनेन एव सूत्रेण च धातोः यकारस्य अपि लोपः भवति समान-शब्दस्य स-आदेशः च। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

3332. सखीन् (1-26) - सखि इति मूलशब्दः अत्र, समानः ख्यायते इति विग्रहे समान इति उपपदे ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **समाने ख्यः स चोदात्तः** (उणा. 4-136) इति सूत्रेण इञ्-प्रत्ययः भवति स च डित् भवति, डित्त्वसामर्थ्यात् टेः लोपः, अनेन एव सूत्रेण च धातोः यकारस्य अपि लोपः भवति समान-शब्दस्य स-आदेशः च। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. द्वि.वि. ब.व.।

3333. सखे (11-41) - सखि इति मूलशब्दः अत्र, समानः ख्यायते इति विग्रहे समान इति उपपदे ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **समाने ख्यः स चोदात्तः** (उणा. 4-136) इति सूत्रेण इञ्-प्रत्ययः भवति स च डित् भवति, डित्त्वसामर्थ्यात् टेः लोपः, अनेन एव सूत्रेण च धातोः यकारस्य अपि लोपः भवति समान-शब्दस्य स-आदेशः च। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो**

**ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. सम्बो.वि. ए.व.।

3334. सख्युः (11-44) - सखि इति मूलशब्दः अत्र, समानः ख्यायते इति विग्रहे समान इति उपपदे ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **समाने ख्यः स चोदात्तः** (उणा. 4-136) इति सूत्रेण इञ्-प्रत्ययः भवति स च डित् भवति, डित्त्वसामर्थ्यात् टेः लोपः, अनेन एव सूत्रेण च धातोः यकारस्य अपि लोपः भवति समान-शब्दस्य स-आदेशः च। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. पं.वि. ए.व.।

3335. सगद्गदम् (11-35) - गद्गदेन सह, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। गद्गद इत्यत्र कण्ड्वादेः गद्गद् इति धातोः **कण्ड्वादिभ्यो यक्** (पा.सू. 3-1-27) इति यक्, **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **आदेः परस्य** (पा.सू. 1-1-54) इति नियमेन **यस्य हलः** (पा.सू. 6-4-49) इति यकः यकारस्य लोपः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धौ प्राप्तायां लुप्तस्य अकारस्य **अचः परस्मिन्पूर्वविधौ** (पा.सू. 1-1-57) स्थानिवद्भावेन उपधावृद्धिः न। नपुं. प्र.वि. ए.व.।

3336. सङ्करस्य (3-24) - सम्-पूर्वकात् कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। पुं. ष.वि. ए.व.।

3337. सङ्करः (1-42) - सम्-पूर्वकात् कॄ-धातोः (कॄ विक्षेपे, तुदादिः, सि.कौ. - धा.सं. 1409) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। पुं. प्र.वि. ए.व.।

3338. सङ्कल्पप्रभवान् (6-24) - सङ्कल्पः प्रभवः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सङ्कल्प इत्यत्र सम्-पूर्वकात् कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **कृपो रो लः** इति रस्य लकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। प्रभव इत्यत्र प्र-पूर्वकात् भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. द्वि.वि. ब.व.।

3339. सङ्ख्ये (1-47, 2-4) - सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **घञर्थे कविधानम्** इति भावे (पा.सू. 3-3-18) क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। नपुं. स.वि. ए.व.।

3340. सङ्गरहितम् (18-23) - सङ्गेन रहितम्, **कर्तृकरणे कृता बहुलम्** (पा.सू. 2-1-32) इति **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति वा समासः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। रहित इत्यत्र रह्-धातोः (रह् त्यागे, भ्वादिः, सि.कौ. - धा.सं. 731) **निष्ठा** (पा.सू. 3-2-102) इति कर्मणि क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** इति इडागमः। नपुं. प्र.वि. ए.व.।

3341. सङ्गवर्जितः (11-55) - सङ्गेन वर्जितः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति वा समासः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। वर्जित इत्यत्र वृज्-धातोः (वृजी वर्जने, चुरादिः, सि.कौ. - धा.सं. 1813) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3342. सङ्गविवर्जितः (12-18) - सङ्गेन विवर्जितः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति वा समासः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। विवर्जित इत्यत्र वि-पूर्वकात् वृज्-धातोः (वृजी वर्जने, चुरादिः, सि.कौ. - धा.सं. 1813) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3343. सङ्गम् (2-48, 5-10,11, 18-6,9) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. द्वि.वि. ए.व.।

3344. सङ्गः (2-47,62) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. प्र.वि. ए.व.।

3345. सङ्गात् (2-62) - सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. पं.वि. ए.व.।

3346. सङ्ग्रहेण (8-11) - सम्-पूर्वकात् ग्रह्-धातोः (ग्रह उपादाने, क्र्यादिः, सि.कौ. - धा.सं. 1533) **ग्रहवृदृनिश्चिगमश्च** (पा.सू. 3-3-58) इति सूत्रेण अप्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। पुं. तृ.वि. ए.व.।

3347. सङ्ग्रामम् (2-33) - सङ्ग्राम-धातोः (सङ्ग्राम युद्धे, चुरादिः, सि.कौ. - धा.सं. 1922) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

3348. सङ्घातः (13-6) - सम्-पूर्वकात् हन्-धातोः (हन हिंसागत्येः, अदादिः, सि.कौ. - धा.सं. 1012) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **हनस्तोचिण्णलोः** (पा.सू. 7-3-32) इति धातोः नकारस्य तकारः, **हो हन्तेर्ञ्णिन्नेषु** (पा.सू. 7-3-54) इति हस्य कुत्वेन घकारः। पुं. प्र.वि. ए.व.।

3349. सचराचरम् (9-10, 11-7) - चरं च अचरं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति द्वन्द्व-समासः, ततः चराचरेण सह इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। चर इत्यत्र चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः**

(पा.सू. 3-1-134) इति अच्-प्रत्ययः। अचर इत्यत्र न चरः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति सूत्रेण समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नस्य लोपः। नपुं. प्र.वि. ए.व.।

3350. सचेताः (11-51) - चेतसा सह, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। चेतस् इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3351. सच्छब्दः (17-26) - सत् च एषः शब्दः च, **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति समासः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति सूत्रेण शतृ-आदेशः, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अ-लोपः। शब्द इत्यत्र शप्-धातोः (शप आक्रोशे, भ्वादिः, सि.कौ. - धा.सं. 1000) **शाशपिभ्यां ददनौ** (उणा. 4-97) इति दन्-प्रत्ययः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पस्य बकारादेशः, अथवा शब्द्-धातोः (शब्द आविष्कारे, भ्वादिः, सि.कौ. - धा.सं. 1715) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3352. सज्जते (3-28) - षस्ज्-धातोः (षस्ज गतौ, भ्वादिः, सि.कौ. - धा.सं. 202) लट्, लटः त, **धात्वादेः षः सः** (पा.सू. 6-1-64) इति षस्य सकारः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वेन धातोः सकारस्य शकारः, ततः **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन तस्य जकारः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3353. सज्जन्ते (3-29) - षस्ज्-धातोः (षस्ज गतौ, भ्वादिः, सि.कौ. - धा.सं. 202) लट्, लटः झ। **धात्वादेः षः सः** (पा.सू. 6-1-64) इति षस्य सकारः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वेन धातोः सकारस्य शकारः, ततः **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन तस्य जकारः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ब.व.।

3354. सञ्जनयन् (1-12) - सम्-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (ग.सू. 1188) अमन्तत्वात् धातोः अस्य मित्त्वम्, तेन **मितां ह्रस्वः** (पा.सू. 6-4-92) इति ह्रस्वः, तस्मात् णिजन्तात् लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

3355. सञ्जय (1-1) - कस्यचित् संज्ञा। सम्-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. सम्बो.वि. ए.व.।

3356. सञ्जयति (14-9,9) - सम्-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) लट्, लटः ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोयवयावः** (पा.सू. 6-1-78) इति अयादेशः। लट्. प्र.पु. ए.व.।

3357. सञ्जयः (1-2,24,47, 2-1,9, 11-9,35,50, 18-74) - कस्यचित् संज्ञा। सम्-पूर्वकात् जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

3358. सञ्जायते (2-62, 13-26, 14-17) - सम्-पूर्वकात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) लट्, लटः त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **ज्ञाजनोर्जा** (पा.सू. 7-3-79) इति जादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3359. संज्ञार्थम् (1-7) - संज्ञायै इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3360. सत् (9-19, 11-37, 13-12, 17-23,26,27,27) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. प्र.वि. ए.व.।

3361. सततयुक्तानाम् (10-10) - सततं युक्ताः तेषाम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। सतत इत्यत्र सम्-पूर्वकात् तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **समो वा हिततयोः** (वा. 6252) इति मस्य लोपः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. ष.वि. ब.व.।

3362. सततयुक्ताः (12-1) - सततं युक्ताः, **सह सुपा** (पा.सू. 2-1-4) इति समासः। सतत इत्यत्र सम्-पूर्वकात् तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **समो वा हिततयोः** (वा. 6252) इति मस्य लोपः। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3363. सततम् (3-19, 6-10, 8-14, 9-14, 12-14, 17-24, 18-57) - सम्-पूर्वकात् तन्-धातोः (तनु विस्तारे, तनादिः, सि.कौ. - धा.सं. 1463) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः, **समो वा हिततयोः** (वा. 6252) इति मस्य लोपः। पुं. द्वि.वि. ए.व.।

3364. सतः (2-16) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. ष.वि. ए.व.।

3365. सति (18-16) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. स.वि. ए.व.।

3366. सत्कारमानपूजार्थम् (17-18) - सत्कारश्च मानश्च पूजा च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सत्कारमानपूजाभ्यः इदम्, **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। सत्कार इत्यत्र सत्पूर्वकात् कृ-

धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। मान इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः। पूजा इत्यत्र पूज्-धातोः (पूज पूजायाम्, चुरादिः, सि.कौ. - धा.सं. 1646) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **चिन्तिपूजिकथिकुम्बिचर्चश्च** (पा.सू. 3-3-105) इति अङ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। अर्थ इत्यत्र अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3367. सत्त्ववताम् (10-36) - सत्त्व-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, **मादुपधायाश्च मतोर्वोयवादिभ्यः** (पा.सू. 8-2-9) इति मस्य वः, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. ष.वि. ब.व.।

3368. सत्त्वसमाविष्टः (18-10) - सत्त्वेन समाविष्टः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। समाविष्ट इत्यत्र सम्-आङ्-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3369. सत्त्वसंशुद्धिः (16-1) - सत्त्वस्य संशुद्धिः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। संशुद्धि इत्यत्र सम्-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। स्त्री. प्र.वि. ए.व.।

3370. सत्त्वस्थाः (14-18) - सत्त्वे तिष्ठन्ति ये इति विग्रहे सत्त्व-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. बए.व.।

3371. सत्त्वम् (10-36,41, 13-26, 14-5,6,9,10,10,10,11, 17-1, 18-40) - सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. प्र.वि. ए.व.।

3372. सत्त्वात् (14-17) - सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. पं.वि. ए.व.।

3373. सत्त्वानुरूपा (17-3) - सत्त्वस्य अनुरूपा **षष्ठी** (पा.सू.) इति समासः। सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। अनुरूपा इत्यत्र रूपस्य योग्यम्, **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्य-सादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति समासः, **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, रूप इत्यत्र रूप-धातोः (रूप रूपक्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1933) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः। स्त्री. प्र.वि. ए.व.।

3374. सत्त्वे (14-14) - सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. स.वि. ए.व.।

3375. सत्यम् (10-4, 16-2,7, 17-15, 18-65) - सत्-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इति यत्-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. प्र.वि. ए.व.।

3376. सदसत् (11-37) - सत् च असत् च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। असत् इत्यत्र न सत् इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। नपुं. प्र.वि. ए.व.।

3377. सदसद्योनिजन्मसु (13-21) - सत्यश्च च असत्यश्च च सदसत्यः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। सदसत्यः योनयः सदसद्योनयः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियाऽऽदिषु** (पा.सू. 6-3-34) इति पूर्वपदस्य पुंवद्भावः। सदसद्योनिषु जन्मानि तेषु, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। सती इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः स्थाने **लटः**

**शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः, **उगितश्च** (पा.सू. 4-1-6) इति ङीप्। असती इत्यत्र न सती इति विग्रहे **नञ्** (पा.सू. 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। योनि इत्यत्र **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण यु-धातोः (यु मिश्रणेमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) निप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। जन्मन् इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **सर्वधातुभ्यः मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः। नपुं. स.वि. ब.व.।

3378. सदा (5-28, 6-15,28, 8-6, 10-17, 18-56) - सर्व-शब्दात् **सर्वैकान्यकिंयत्तदः काले दा** (पा.सू. 5-3-15) इति दा-प्रत्ययः, **सर्वस्य सोन्यतरस्यां दि** (पा.सू. 5-3-6) इति सर्वस्य सादेशः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्प्रत्यये साधुः। अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3379. सदृशम् (3-33, 4-38) - **समानान्ययोश्चेति वक्तव्यम्** (वा. 2029) इति वार्तिकेन समान-उपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) कञ्-प्रत्ययः, **दृक्दृशवतुषु** (पा.सू. 6-3-59) इति सूत्रेण समानस्य सादेशः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। नपुं. द्वि.वि. ए.व.।

3380. सदृशः (16-15) - **समानान्ययोश्चेति वक्तव्यम्** (वा. 2029) इति वार्तिकेन समान-उपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) कञ्-प्रत्ययः, **दृक्दृशवतुषु** (पा.सू. 6-3-59) इति सूत्रेण समानस्य सादेशः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. प्र.वि. ए.व.।

3381. सदृशी (11-12) - **समानान्ययोश्चेति वक्तव्यम्** (वा. 2029) इति वार्तिकेन समान-उपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) कञ्-प्रत्ययः, **दृक्दृशवतुषु** (पा.सू. 6-3-59) इति सूत्रेण समानस्य सादेशः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। स्त्री. प्र.वि. ए.व.।

3382. सदोषम् (18-48) - दोषेण सह तत्, **तेन सहेति तुल्ययोगे** (पा.सू 2-2-26) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दोष इत्यत्र दुष्-धातोः (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **भावे** (पा.सू. 3-3-18) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

3383. सद्भावे (17-26) - सतः भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **झलां जशोऽन्ते** (पा.सू. 8-2-39) इति सतः तकारस्य दकारः। सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-

2-115) इति वृद्धिः, **एचोऽयवायवः** (पा.सू. 6-1-78) इति आवादेशः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. स.वि. ए.व.।

3384. सन् (4-6,6) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ए.व.।

3385. सनातनम् (4-31, 7-10) - सना इति शब्दात् **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति ट्युः ट्युल् वा प्रत्ययः, प्रत्ययस्य तुट्-आगमश्च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। सना इत्यत्र सन्-धातोः (षण संभक्तौ, भ्वादिः, सि.कौ. - धा.सं. 464) बाहुलकात् आ-प्रत्ययः, अव्ययम् इदं सना इति। नपुं. द्वि.वि. ए.व.।

3386. सनातनः (2-24, 8-20) - सना इति शब्दात् **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति ट्युः ट्युल् वा प्रत्ययः, प्रत्ययस्य तुट्-आगमश्च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। सना इत्यत्र सन्-धातोः (षण संभक्तौ, भ्वादिः, सि.कौ. - धा.सं. 464) बाहुलकात् आ-प्रत्ययः, अव्ययम् इदं सना इति। पुं. प्र.वि. ए.व.।

3387. सनातनाः (1-40) - सना इति शब्दात् **सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च** (पा.सू. 4-3-23) इति ट्युः ट्युल् वा प्रत्ययः, प्रत्ययस्य तुट्-आगमश्च, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। सना इत्यत्र सन्-धातोः (षण संभक्तौ, भ्वादिः, सि.कौ. - धा.सं. 464) बाहुलकात् आ-प्रत्ययः, अव्ययम् इदं सना इति। पुं. प्र.वि. ब.व.।

3388. सन्तरिष्यसि (4-36) - सम्-पूर्वकात् तॄ-धातोः (तॄ प्लवनतरणयोः, भ्वादिः, सि.कौ. - धा.सं. 969) लृट्, लृटः सिप्, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। लृट्. म.पु. ए.व.।

3389. सन्तः (3-16) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1064) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ब.व.।

3390. सन्तुष्टः (3-17, 12-14,19) - सम्-पूर्वकात् तुष्-धातोः (तुष प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1184) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3391. सन्दृश्यन्ते (11-27) - सम्-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) कर्मणि लट्, लटः झ, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। कर्मणि लट्. प्र.पु. ब.व.।

3392. सन्नियम्य (12-4) - सम्-नि-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्। अव्ययम्।

3393. सन्निविष्टः (15-15) - सम्-नि-पूर्वकात् विश्-धातोः (विश प्रवेशने, तुदादिः, सि.कौ. - धा.सं. 1424) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां**

**षः** (पा.सू. 8-2-36) इति शस्य षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. प्र.वि. ए.व.।

3394. सन्न्यसनात् (3-4) - सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **ल्युट् च** (पा.सू. 3-3-115) ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। नपुं. पं.वि. ए.व.।

3395. सन्न्यस्य (3-30, 5-13, 12-6, 18-57) - सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। अव्ययम्।

3396. सन्न्यासयोगयुक्तात्मा (9-28) - सन्न्यास एव योगः **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, सन्न्यासयोगेन युक्तः सन्न्यासयोगयुक्तः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। सन्न्यासयोगयुक्तः आत्मा यस्य सः **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सन्न्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः, **इको यणचि** (पा.सू. 6-1-77) इति नेः इकारस्य यकारः। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। युक्त इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3397. सन्न्यासस्य (18-1) - सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. ष.वि. ए.व.।

3398. सन्न्यासम् (5-1, 6-2, 18-2) - सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. द्वि.वि. ए.व.।

3399. सन्न्यासः (5-2,6, 18-7) - सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. प्र.वि. ए.व.।

3400. सन्न्यासिनाम् (18-12) - सन्न्यास-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सन्न्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-

116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. ष.वि. ब.व.।

3401. सन्न्यासी (6-1) - सन्न्यास-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सन्न्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातो (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. प्र.वि. ए.व.।

3402. सन्न्यासेन (18-49) - सन्न्यास-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सन्न्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) अथवा **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधावृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य नकारः। पुं. तृ.वि. ए.व.।

3403. सपत्नान् (11-34) - सपत्नीव सपत्नः, इवार्थे अकारान्तः निपातनात् सिद्धः इति **व्यन् सपत्ने** (पा.सू. 4-1-145) इति निर्देशात्। सपत्नी इत्यत्र समानः पतिः यस्या सा इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **नित्यं सपत्न्यादिषु** (पा.सू. 4-1-35) इति पति-शब्दस्य इकारस्य नकारादेशः, ऋन्नेभ्यो ङीप् इति ङीप्। पति इत्यत्र पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) **पातेर्डतिः** (उणा.सू. 4-57) डति-प्रत्ययः, डित्त्वसामर्थ्यात् टेर्लोपः। समान इत्यत्र सम्-आङ्-पूर्वकात् अन्-धातोः (अन प्राणने, अदादिः, सि.कौ. - धा.सं. 1070) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, समा अन इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः। पुं. द्वि.वि. ब.व.।

3404. सप्त (10-6) - सप्तन् इत्यत्र **सप्यशूभ्यां तुट् च** (उणा.सू. 1-155) इति सूत्रेण सप्-धातोः (षप समवाये, भ्वादिः, सि.कौ. - धा.सं. 400) कनिन्-प्रत्ययः धातोः तुडागमः च। पुं. प्र.वि. नित्य-ब.व.।

3405. समग्रम् (4-23, 7-1, 11-30) - समं ग्रसते तत्, सम इति उपपदात् ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि धातोः अस् इति टेर्लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3406. समग्रान् (11-30) - सम इति उपपदात् ग्रस्-धातोः (ग्रसु अदने, भ्वादिः, सि.कौ. - धा.सं. 630) **अन्येभ्योपि दृश्यते** (पा.सू. 3-2-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि धातोः अस् इति टेर्लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

3407. समचित्तत्वम् (13-9) - समचित्तस्य भावः **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। समं चित्तं यस्य सः समचित्तः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। चित्त इत्यत्र चित्-धातोः (चिती संज्ञाने, भ्वादिः, सि.कौ. - धा.सं. 39) **नपुंसके भावे क्तः** (पा.सू. 4-3-23) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः **श्वीदितो निष्ठायाम्** (पा.सू. 3-2-102) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

3408. समता (10-5) - सम-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति तल्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। स्त्री. प्र.वि. ए.व.।

3409. समतीतानि (7-26) - सम्-अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, समति इत इति स्थिते **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। नपुं. द्वि.वि. ब.व.।

3410. समतीत्य (14-26) - सम्-अति-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, समति इत इति स्थिते **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अव्ययम्।

3411. समत्वम् (2-48) - सम-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3412. समदर्शनः (6-29) - समं दर्शनं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दर्शन इत्यत्र दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ल्युट् च** (पा.सू. 3-3-115) ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3413. समदर्शिनः (5-18) - समं पश्यन्ति, सम इति उपपदे दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ब.व.।

3414. समदुःखसुखम् (2-15) - सुखं च दुःखं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। समे दुःखसुखे यस्य तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ए.व.।

3415. समदुःखसुखः (12-13, 14-24) - सुखं च दुःखं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। समे दुःखसुखे यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3416. समधिगच्छति (3-4) - सम्-अधि-पूर्वकात् च गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **इषुगमियमां छः** (पा.सू. 7-3-77) इति धातोः मकारस्य छ-आदेशः। लट्. प्र.पु. ए.व.।

3417. समन्ततः (6-24) - समन्त इति शब्दात् **आद्यादिभ्य उपसङ्ख्यानम्** (वा. 3339) इति तसि-प्रत्ययः। समन्त इत्यत्र सम्-पूर्वकात् अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। अव्ययम्।

3418. समन्तात् (11-70,30) - सम्-पूर्वकात् अत्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। इदम् पञ्चमीविभक्तिप्रतिरूपकम् अव्ययम्।

3419. समबुद्धयः (12-4) - समा बुद्धिः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। समा इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, दिवादिः, सि.कौ. - धा.सं. 1172) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ब.व.।

3420. समबुद्धिः (6-9) - समा बुद्धिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। समा इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, दिवादिः, सि.कौ. - धा.सं. 1172) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ए.व.।

3421. समलोष्टाश्मकाञ्चनः (6-8, 24-24) - लोष्टं च अश्मा च काञ्चनं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। समानि लोष्टाश्मकाञ्चनानि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। लोष्ट इत्यत्र लोष्ट्-धातोः (लोष्ट संघाते, भ्वादिः, सि.कौ. - धा.सं. 258) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अश्मन् इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अन्येभ्योपि दृश्यन्ते** (पा.सू. 3-2-75) इति सूत्रेण मनिन्-प्रत्ययः। काञ्चन इत्यत्र काचि इति इदितः धातोः (काचि दीप्तिबन्धनयोः, भ्वादिः, सि.कौ. - धा.सं. 170) **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति ल्यु-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ञकारः। पुं. प्र.वि. ए.व.।

3422. समवस्थितम् (13-28) - सम्-अव-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारादेशः। पुं. द्वि.वि. ए.व.।

3423. समवेतान् (1-25) - सम्-अव-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. द्वि.वि. ब.व.।

3424. समवेताः (1-1) - सम्-अव-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आद्गुणः** (पा.सू. 6-1-87) इति यण्। पुं. प्र.वि. ब.व.।

3425. समम् (5-19, 6-13,32, 13-27,28) - सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। नपुं. प्र.वि. ए.व.।

3426. समः (2-48, 4-22, 9-29, 12-18,18, 18-54) - सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। पुं. प्र.वि. ए.व.।

3427. सम्पत् (16-5) - **सम्पदादिभ्यः क्विप्** (वा. 2233) इति वार्तिकेन सम्-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। स्त्री. प्र.वि. ए.व.।

3428. सम्पदम् (16-3,4,5) - **सम्पदादिभ्यः क्विप्** (वा. 2233) इति वार्तिकेन सम्-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. द्वि.वि. ए.व.।

3429. सम्पद्यते (13-30) - सम्-पूर्वकात् पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) लट्, लटः त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3430. सम्पश्यन् (3-20) - सम्-पूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति सूत्रेण दृश्-धातोः पश्यादेशः। पुं. प्र.वि. ए.व.।

3431. सम्प्रकीर्तितः (18-4) - सम्-प्र-पूर्वकात् कृत्-धातोः (कृत संशब्दने, चुरादिः, सि.कौ. - धा.सं. 1654) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **उपधायाश्च** (पा.सू. 7-1-100) इति सूत्रेण ऋवर्णस्य इकारादेशः, **उरण्रपर** (पा.सू. 1-1-51) इत्यनेन रपरः, **उपधायां च** (पा.सू. 8-2-78) इति सूत्रेण इकारस्य दीर्घः। पुं. प्र.वि. ए.व.।

3432. सम्प्रतिष्ठा (15-3) - सम्-प्रति-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति धातोः सकारस्य षत्वम्। स्त्री. प्र.वि. ए.व.।

3433. सम्प्रवृत्तानि (14-22) - सम्-प्र-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति प्राप्तस्य गुणस्य **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः भवति। नपुं. द्वि.वि.ब.व.।

3434. सम्प्रेक्ष्य (6-13) - स-प्र-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं. 610) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। अव्ययम्।

3435. सम्बन्धिनः (1-34) - सम्बन्ध-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सम्बन्ध इत्यत्र सम्-पूर्वकात् बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508 **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. प्र.वि. ब.व.।

3436. सम्भवन्ति (14-4) - सम्-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लट्, लटः झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। लट्. प्र.पु. ब.व.।

3437. सम्भवः (14-3) - सम्-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **ऋदोरप्** (पा.सू. 3-3-57) इति सूत्रेण अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. प्र.वि. ए.व.।

3438. सम्भवामि (4-6,8) - सम्-पूर्वकात् भूधातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) लट्, लटः मिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. उ.पु. ए.व.।

3439. सम्भावितस्य (2-34) - सम्-पूर्वकात् भू-धातोः (भू सत्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 1) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 3-2-102) इति णेः लोपः। पुं. ष.वि. ए.व.।

3440. सम्मोहम् (7-27) - सम्-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

3441. सम्मोहः (2-63) - सम्-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3442. सम्मोहात् (2-63) - सम्-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. पं.वि. ए.व.।

3443. संयतेन्द्रियः (4-39) - संयतानि इन्द्रियाणि येन सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। संयत इत्यत्र सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3444. संयमताम् (10-29) - सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। अत्र यद्यपि **इषुगमियमां छः** इति छकारादेशः स्यात् तस्मात् संयच्छताम् इति प्रयोगः स्यात् तथापि प्रकृते छकारादेशाभावः आर्षः ग्राह्यः। पुं. ष.वि. ब.व.।

3445. संयमाग्निषु (4-26) - संयमाः एव अग्नयः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः, अथवा **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। संयम इत्यत्र **यमः समुपनिविषु च** (पा.सू. 3-3-63) इति सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) अप्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। अग्नि इत्यत्र अग्-धातोः (अगि गतौ, भ्वादिः, सि.कौ. - धा.सं. 146) इदित्त्वात् **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, ततः **अङ्गेर्नलोपश्च** (उणा. 4-50) इति नि-प्रत्ययः धातोः नकारस्य लोपश्च। पुं. स.वि. ब.व.।

3446. संयमी (2-69) - संयम-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। संयम इत्यत्र **यमः समुपनिविषु च** (पा.सू. 3-3-63) इति सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) अप्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ए.व.।

3447. संयम्य (2-61, 3-6, 6-14, 8-12) - सम्-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। अव्ययम्।

3448. संयाति (2-22, 15-8) - सम्-पूर्वकात् या-धातोः (या प्रापणे, अदादिः, सि.कौ. - धा.सं. 1049) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। लट्. प्र.पु. ए.व.।

3449. संवादम् (18-70,74,76) - सम्-पूर्वकात् वद्-धातोः (वद व्यक्तायां वाचि, भ्वादिः, सि.कौ. - धा.सं. 1009) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. द्वि.वि. ए.व.।

3450. संवृत्तः (11-51) - सम्-पूर्वकात् वृत्-धातोः (वृतु वर्तने, भ्वादिः, सि.कौ. - धा.सं. 758) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्तप्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः **एकाच उपदेशेनुदात्तात्** इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति तस्य निषेधः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ए.व.।

3451. संशयस्य (6-39) - सम्-पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. ष.वि. ए.व.।

3452. संशयम् (4-42, 6-39) - सम्-पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. द्वि.वि. ए.व.।

3453. संशयः (8-5, 10-7, 12-8) - सम्-पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ए.व.।

3454. संशयात्मनः (4-40) - संशये आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। संशय इत्यत्र सम्-पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. ष.वि. ए.व.।

3455. संशयात्मा (4-40) - संशये आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। संशय इत्यत्र सम्-पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3456. संशितव्रताः (4-28) - संशितं व्रतं येन, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सम्-पूर्वकात् शो-धातोः (शो तनूकरणे, दिवादिः, सि.कौ. - धा.सं. 1145) **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **शाच्छोरन्यतरस्याम्** (पा.सू. 7-4-41) इति धातोः आकारस्य विकल्पेन इकारादेशे प्राप्ते अस्मिन् सूत्रे उक्तायाः विभाषायाः (विकल्पस्य) व्यवस्थितविभाषात्वात् व्रते अर्थे गम्यमाने नित्यम् एव इकारः भवति, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। व्रत इत्यत्र वृ-धातोः वृञ् वरणे, स्वादिः, सि.कौ. - धा.सं. 1254) **पृषिरञ्जिभ्यां कित्** इति अतच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. प्र.वि. ब.व.।

3457. संशुद्धकिल्बिषः (6-45) - संशुद्धं किल्बिषं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। संशुद्ध इत्यत्र सम्-पूर्वकात् शुध्-धातोः (शुध शौचे, दिवादिः, सि.कौ. - धा.सं. 1191) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। किल्बिष इत्यत्र किल्-धातोः (किल क्षेपे, तुदादिस्थः इति सुधाव्याख्याकारः) **किलेर्बुक् च** (उणा. 1-50) इति टिषच्-प्रत्ययः प्रत्ययस्य बुक्-आगमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. प्र.वि. ए.व.।

3458. संश्रिताः (16-18) - सम्-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः **श्र्युकः किति** (पा.सू. 7-2-11) इति तस्य इटः निषेधः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ब.व.।

3459. संसारेषु (16-19) - सम्-पूर्वकात् सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः, **अचो ञ्णिति** इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. स.वि. ब.व.।

3460. संसिद्धिम् (3-20, 8-15, 18-45) - सम्-पूर्वकात् सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। स्त्री. द्वि.वि. ए.व.।

3461. संसिद्धौ (6-43) - सम्-पूर्वकात् सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। स्त्री. स.वि. ए.व.।

3462. संस्तभ्य (3-43) - सम्-पूर्वकात् स्तम्भ्-धातोः (ष्टभि प्रतिबन्धे, भ्वादिः, सि.कौ. - धा.सं. 386) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधायाः लोपः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। अव्ययम्।

3463. संस्पर्शजाः (5-22) - संस्पर्शात् जाताः इति विग्रहे संस्पर्श इति उपपदात् **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति सूत्रेण ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि धातोः टेः (अन्-इत्यस्य) लोपः, **उपपदमतिङ्** (पा.सू. 3-2-29) इति समासः। संस्पर्श इत्यत्र सम्-पूर्वकात् स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। पुं. प्र.वि. ब.व.।

3464. संस्मृत्य (18-76,76,77,77) - सम्-पूर्वकात् स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति ल्यप्, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुक्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। अव्ययम्।

3465. संहरते (2-28) - सम्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः। लट्. प्र.पु. ए.व.।

3466. सम्यक् (5-4, 8-10, 9-30) - सम्-पूर्वकात् अन्च्-धातोः (अञ्चु गतिपूजनयोः, भ्वादिः, सि.कौ. - धा.सं. 188) **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च** (पा.सू. 3-2-59) इति क्विन्-प्रत्ययः, क्विनः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति नकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति धातोः नकारस्य लोपः, **समः समि** (पा.सू. 6-3-93) इति समः समि-आदेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **वाऽवसाने** (पा.सू. 8-4-56) इति चर्त्वम्। अव्ययम्।

3467. समागताः (1-23) - सम्-आङ्-पूर्वकात् गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

3468. समाचर (3-9,19) - सम्-आङ्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लोट्, लोटः सिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हि-आदेशः, **अतो हेः** इति हेः लोपः। लोट्. म.पु. ए.व.।

3469. समाचरन् (3-26) - सम्-आङ्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्। पुं. प्र.वि. ए.व.।

3470. समाधातुम् (12-9) - सम्-आङ्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति तस्य इटः निषेधः। अव्ययम्।

3471. सामाधाय (17-11) - सम्-आङ्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेऽनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्-आदेशः। अव्ययम्।

3472. समाधिस्थस्य (2-54) - समाधौ तिष्ठति यः तस्य, समाधि इति उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। समाधि इत्यत्र सम्-आ-र्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. -

धा.सं. 1092) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. ष.वि. ए.व.।

3473. समाधौ (2-44,53) - सम्-आ-र्वकात् धा-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **उपसर्गे घोः किः** (पा.सू 3-3-92) इति किः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। पुं. स.वि. ए.व.।

3474. समाप्नोषि (11-40) - सम्-पूर्वकात् आप्-धातोः (आपॢ व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1260) लट्, लटः सिप्, सम् आप् सिप्, **स्वादिभ्यः श्नुः** इति श्नुप्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य मूर्धन्यादेशः। लट्. म.पु. ए.व.।

3475. समारम्भाः (4-19) - सम्-आङ्-पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **रभेरशब्लिटोः** (पा.सू. 7-1-63) इति धातोः नुम्-आगमः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नुमः नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः मकारः। पुं. प्र.वि. ब.व.।

3476. समासतः (13-18) - समास-शब्दात् **आद्यादिभ्य उपसंख्यानम्** (वा. 3339) इति वार्तिकेन तसि-प्रत्ययः। समास इत्यत्र सम्-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अव्ययम्।

3477. समासेन (13-3,6, 18-50) - सम्-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. तृ.वि. ए.व.।

3478. समाहर्तुम् (11-32) - सम्-आङ्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

3479. समाहितः (6-7) - सम्-आङ्-पूर्वकात् धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति धा-धातोः स्थाने हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

3480. समाः (6-41) - सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। स्त्री. द्वि.वि. ब.व.।

3481. समितिञ्जयः (1-8) - समितिं जयति, समिति इति उपपदे जि-धातोः (जि जये, भ्वादिः, सि.कौ. - धा.सं. 561) **संज्ञायां भृतॄवृजिधारिसहितपिदमः** (पा.सू. 3-2-46) इति खच्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अरुर्द्विषदजन्तस्य मुम्** (पा.सू. 6-3-67) इति समिति-शब्दस्य इति मुम्-आगमः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति मुमः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः ञकारः, समितिञ्जय इत्यत्र **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपद-समासः। समिति इत्यत्र सम्-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

3482. समिद्धः (4-37) - सम्-पूर्वकात् इन्ध्-धातोः (ञिइन्धी दीप्तौ, रुधादिः, सि.कौ. - धा.सं. 1448) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति अनुनासिकलोपः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। पुं. प्र.वि. ए.व.।

3483. समीक्ष्य (1-27) - सम्-पूर्वकात् ईक्ष्-धातोः (ईक्ष दर्शने, भ्वादिः, सि.कौ. - धा.सं.610) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **समासेनञ्पूर्वे क्त्वो ल्यप्** (पा.सू. 7-1-37) इति क्त्वा-स्थाने ल्यप्। अव्ययम्।

3484. समुद्रम् (2-70, 11-28) - सम्-पूर्वकात् उन्द्-धातोः (उन्दी क्लेदने, रुधादिः, सि.कौ. - धा.सं.1457) **स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** (उणा. 2-13) इति बाहुलकात् रक्-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति धातोः नकारस्य लोपः। पुं. द्वि.वि. ए.व.।

3485. समुद्धर्ता (12-7) - सम्-उद्-पूर्वकात् हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं.899) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **झयो होऽन्यतरस्याम्** (पा.सू. 8-4-62) पूर्वसवर्णेन हकारस्य धकारः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति तस्य इटः निषेधः। पुं. प्र.वि. ए.व.।

3486. समुपस्थितम् (1-28, 2-2) - सम्-उप-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं.928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इत्वम्। पुं. द्वि.वि. ए.व.।

3487. समुपाश्रितः (18-52) - सम्-उप-आङ्-पूर्वकात् श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः,**आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः **श्र्युकः किति** (पा.सू. 7-2-11) इति तस्य इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

3488. समृद्धवेगाः (11-29,29) - समृद्धः वेगः येषाम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। समृद्ध इत्यत्र सम्-पूर्वकात् ऋध्-धातोः (ऋधु वृद्धौ, दिवादिः, सि.कौ. - धा.सं.1245) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। वेग इत्यत्र विज्-धातोः (ओविजी भयचलनयोः, तुदादिः, सि.कौ. - धा.सं. 1289) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति उपधायाः इकः गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3489. समृद्धम् (11-33) - सम्-पूर्वकात् ऋध्-धातोः (ऋधु वृद्धौ, दिवादिः, सि.कौ. - धा.सं.1245) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य दकारः। नपुं. द्वि.वि. ए.व.।

3490. समे (2-38) - सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. द्वि.व.।

3491. समौ (5-27) - सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. द्वि.व.।

3492. सरसाम् (10-24) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. ष.वि. ब.व.।

3493. सर्गाः (5-19) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3494. सर्गाणाम् (10-32) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. ष.वि. ब.व.।

3495. सर्गे (7-27, 14-2) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. स.वि. ए.व.।

3496. सर्पाणाम् (10-28) - सृप्-धातोः (सृप्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 983) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

3497. सर्व (11-40) - सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

3498. सर्वकर्मणाम् (18-13) - सर्वाणि कर्माणि तेषाम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. ष.वि. ब.व.।

3499. सर्वकर्मफलत्यागम् (12-11, 18-2) - सर्वाणि कर्माणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्वकर्मणां फलं **षष्ठी** (पा.सू. 2-2-8) इति समासः, सर्वकर्मफलस्य त्यागः **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। फल इत्यत्र फल्-धातोः (फल निष्पत्तौ, भ्वादिः, सि.कौ. - धा.सं. 530) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। त्याग इत्यत्र त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति उपधायाः वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. ए.व.।

3500. सर्वकर्माणि (3-26, 4-37, 5-13, 18-56,57) - सर्वाणि कर्माणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ब.व.।

3501. सर्वकामेभ्यः (6-18) - सर्वे कामाः तेभ्यः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586)

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। काम इत्यत्र कम्-धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं.443) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पुं. पं.वि. ब.व.।

3502. सर्वकिल्बिषैः (3-13) - सर्वाणि किल्बिषाणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। किल्बिष इत्यत्र किल्-धातोः (किल क्षेपे, तुदादिस्थः इति सुधाव्याख्याकारः) **किलेर्बुक् च** (उणा. 1-50) इति टिषच्-प्रत्ययः प्रत्ययस्य बुक्-आगमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. तृ.वि. ए.व.।

3503. सर्वक्षेत्रेषु (13-2) - सर्वाणि क्षेत्राणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। क्षेत्र इत्यत्र क्षि-धातोः (क्षि क्षये, भ्वादिः, सि.कौ. - धा.सं. 236) **सर्वधातुभ्यः ष्ट्रन्** (उणा. 4-158) इति ष्ट्रन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **आर्धधातुकस्योड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. स.वि. ब.व.।

3504. सर्वगतम् (3-15, 13-32) - सर्वं गतम्, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. प्र.वि. ए.व.।

3505. सर्वगतः (2-14) - सर्वं गतः, **द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः** (पा.सू. 2-1-24) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। गत इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति कर्तरि क्तः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

3506. सर्वगुह्यतमम् (18-64) - सर्वेभ्यः गुह्यतमम्, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। गुह्यतम इत्यत्र गुह्य-शब्दात् **अतिशायने तमबिष्ठनौ** (पा.सू 5-3-55) इति तमप्-प्रत्ययः, गुह्य इत्यत्र गुह्-धातोः (गुहू संवरणे, भ्वादिः, सि.कौ. - धा.सं. 896) **शंसिदुहिगुहेभ्यो वा** (उणा. 18-35) इति वार्तिकेन क्यप्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ए.व.।

3507. सर्वज्ञानविमूढान् (3-32) - सर्वाणि ज्ञानानि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्वज्ञानेषु विमूढाः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः,

सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। विमूढ इत्यत्र वि-पूर्वकात् मुह्-धातोः (मुह वैचित्त्ये, दिवादिः, सि.कौ. - धा.सं. 1198) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति विकल्पेन हस्य घत्वाभावे **हो ढः** (पा.सू. 8-2-31 इति हस्य ढत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोणः** (पा.सू. 6-3-111) इति अणः दीर्घः। पुं. द्वि.वि. ब.व.।

3508. सर्वतः (2-46, 11-16,40) - सर्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3509. सर्वतःपाणिपादम् (13-13) - पाणयश्च पादाश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** (पा.सू. 2-4-2) इति एकवद्भावः, सर्वतः पाणिपादं यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सर्वतः इत्यत्र सर्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पाणि इत्यत्र **अशिपणाय्यो रुडायलुकौ च** (उणा. 4-132) इति पण्-धातोः (पण व्यवहारे स्तुतौ च, भ्वादिः, सि.कौ. - धा.सं. 439) इण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। पाद इत्यत्र **पदरुजविशस्पृशो घञ्** (पा.सू. 3-3-16) इति पद्-धातोः (पद गतौ, दिवादिः, सि.कौ. - धा.सं.1169) घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

3510. सर्वतःश्रुतिमत् (13-13) - सर्वतः श्रुतिः सर्वतःश्रुतिः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, सर्वतःश्रुतिः अस्य अस्ति इति विग्रहे सर्वतःश्रुति-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः। सर्वतः इत्यत्र सर्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। श्रुति इत्यत्र श्रु-धातोः (श्रु श्रवणे, भ्वादिः, सि.कौ. - धा.सं. 942) **श्रुयजिस्तुभ्यः करणे** (वा. 2212) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। नपुं. प्र.वि. ए.व.।

3511. सर्वतःसम्प्लुतोदके (2-46) - सर्वतः सम्प्लुतम् उदकं यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सर्वतः इत्यत्र सर्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। सम्प्लुत इत्यत्र सम्-पूर्वकात् प्लु-धातोः (प्लुङ् गतौ, भ्वादिः, सि.कौ. - धा.सं. 158) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति निषेधः। उदक इत्यत्र उन्द्-धातोः (उन्दी क्लेदने, रुधादिः, सि.कौ. - धा.सं.1457) **उदकञ्च** (उणा. 2-40) इति क्वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अकादेशः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति नलोपः। नपुं. स.वि. ए.व.।

3512. सर्वतोऽक्षिशिरोमुखम् (13-13) - अक्षीणि च शिरांसि च मुखानि च, तेषां समाहारः, **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, सर्वतः अक्षिशिरोमुखं यस्य तत्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सर्वतः इत्यत्र सर्व-शब्दात् **पञ्चम्यास्तसिल्** (पा.सू. 5-3-7) इति तसिल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अक्षि इत्यत्र अश्-धातोः (अशू व्याप्तौ सङ्घाते च, स्वादिः, सि.कौ. - धा.सं. 1264) **अशेर्नित्** (उणा. 3-156) इति क्सि-प्रत्ययः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षत्वम्, **षढोः कः सि** (पा.सू. 8-2-41) इति षकारस्य ककारः, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति षत्वम्। शिरस् इत्यत्र श्रि-धातोः (श्रिञ् सेवायाम् भ्वादिः, सि.कौ. - धा.सं. 897) **श्रयतेः स्वाङ्गे शिरः किच्च** (उणा. 4-193) इति असुन् धातोः च शिरादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। मुख इत्यत्र खन्-धातोः (खनु अवदारणे, भ्वादिः, सि.कौ. - धा.सं. 878) **डित्खनेर्मुट् चोदात्तः** (उणा. 5-20) इति अच्, सः च डित्, धातोर्मुट्-आगमः, डित्त्वसामर्थात् टेः लोपः। नपुं. प्र.वि. ए.व.।

3513. सर्वत्र (2-57, 6-30,32, 12-4, 13-18,32, 18-49) - सर्व-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3514. सर्वत्रगम् (12-3) - सर्वत्र गच्छति यः तम् इति विग्रहे सर्वत्र-उपपदे गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **सर्वत्रपन्नयोरुपसंख्यानम्** (वा. 3-2-48) इति ड-प्रत्ययः, डित्त्वसामर्थ्यादभस्यापि टेर्लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सर्वत्र इत्यत्र सर्व-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

3515. सर्वत्रगः (9-6) - सर्वत्र गच्छति यः सः, इति विग्रहे सर्वत्र-उपपदे गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **सर्वत्रपन्नयोरुपसंख्यानम्** (वा. 3-2-48) इति ड-प्रत्ययः, डित्त्वसामर्थ्यादभस्यापि टेर्लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सर्वत्र इत्यत्र सर्व-शब्दात् **सप्तम्यास्त्रल्** (पा.सू. 5-3-10) इति त्रल्-प्रत्ययः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3516. सर्वथा (6-31, 13-23) - सर्व-शब्दात् **प्रकारवचने थाल्** (पा.सू. 5-3-23) इति थाल्-प्रत्ययः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3517. सर्वदुर्गाणि (18-58) - सर्वाणि दुर्गाणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दुर्ग इत्यत्र दुर्-पूर्वकात् गम्-धातोः (गम्लृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **सुदुरोरधिकरणे** (वा. 2016) इति ड-प्रत्ययः, डित्त्वसामर्थ्त् टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। नपुं. द्वि.वि. ब.व.।

3518. सर्वदुःखानाम् (2-65) - सर्वाणि दुःखानि. **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. ष.वि. ब.व.।

3519. सर्वदेहिनाम् (14-8) - सर्वे देहिनः तेषाम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। देहिन् इत्यत्र देह-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, देह इत्यत्र दिह्-धातोः (दिह उपचये, अदादिः, सि.कौ. - धा.सं. 1015) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. ष.वि. ब.व.।

3520. सर्वद्वाराणि (8-12) - सर्वाणि द्वाराणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। द्वार इत्यत्र द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. द्वि.वि. ब.व.।

3521. सर्वद्वारेषु (14-11) - सर्वाणि द्वाराणि तेषु, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। द्वार इत्यत्र द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. स.वि. ब.व.।

3522. सर्वधर्मान् (18-66) - सर्वे धर्माः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ब.व.।

3523. सर्वपापेभ्यः (18-66) - सर्वाणि पापानि तेभ्यः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पाप इत्यत्र **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। नपुं. पं.वि. ब.व.।

3524. सर्वपापैः (10-3) - सर्वाणि पापानि तैः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पाप इत्यत्र **पानीविषिभ्यः पः** (उणा. 3-23) इति पा-धातोः (पा रक्षणे, अदादिः, सि.कौ. - धा.सं. 1056) प-प्रत्ययः। नपुं. तृ.वि. ब.व.।

3525. सर्वभावेन (15-19, 18-62) - सर्वः भावः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आवादेशः, ततः भावि इत्यस्मात् णिजन्तात् धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. तृ.वि. ए.व.।

3526. सर्वभूतस्थम् (6-29) - सर्वभूतेषु तिष्ठति तम् इति विग्रहे सर्व-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः। सर्वभूत इत्यत्र सर्वाणि भूतानि इति विग्रहे **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुं. द्वि.वि. ए.व.।

3527. सर्वभूतस्थितम् (6-31) - सर्वभूतेषु स्थितः तम्, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। सर्वभूत इत्यत्र सर्वाणि भूतानि इति विग्रहे **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्थित इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः**, द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. द्वि.वि. ए.व.।

3528. सर्वभूतहिते (5-25, 12-4) - सर्वभूतेभ्यः हितं तस्मिन्, **चतुर्थीतदर्थार्थबलिहितसुखरक्षितैः** (पा.सू. 2-1-36) इति समासः। सर्वभूत इत्यत्र सर्वाणि भूतानि इति विग्रहे **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-

2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। हित इत्यत्र धा-धातोः (डुधाञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1092) **निष्ठा** (पा.सू. 2-2-36) इति क्त-प्रत्ययः, **दधातेर्हिः** (पा.सू. 7-4-42) इति धा-स्थाने हि-आदेशः, अथवा हि-धातोः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः। नपुं. स.वि. ए.व.।

3529. सर्वभूतात्मभूतात्मा (5-7) - सर्वाणि भूतानि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, आत्मभूत इत्यत्र आत्मा भूतः **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। सर्वभूतानाम् आत्मभूतः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, सर्वभूतात्मभूतः आत्मा यस्य, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सर्वभूत इत्यत्र सर्वाणि भूतानि इति विग्रहे **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. प्र.वि. ए.व.।

3530. सर्वभूतानाम् (2-69, 5-29, 7-10, 10-39, 12-13, 14-3, 18-61) - सर्वाणि भूतानि तेषाम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. ष.वि. ब.व.।

3531. सर्वभूतानि (6-29, 7-27, 9-4,7, 18-61) - सर्वाणि भूतानि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. द्वि.वि. ब.व.।

3532. सर्वभूताशयस्थितः (10-20) - सर्वाणि भूतानि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्वभूतानाम् आशयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, सर्वभूताशये स्थितः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। सर्वभूत इत्यत्र सर्वाणि भूतानि इति विग्रहे **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः, सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्,

भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। आशय इत्यत्र आङ्पूर्वकात् शी-धातोः (शीङ स्वप्ने, अदादिः, सि.कौ. - धा.सं. 1032) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। स्थित इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः**, द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. प्र.वि. ए.व.।

3533. सर्वभूतेषु (3-18, 7-9, 9-29, 11-55, 18-20) - सर्वाणि भूतानि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। नपुं. स.वि. ब.व.।

3534. सर्वभृत् (13-14) - सर्वं बिभर्ति इति विग्रहे सर्व-उपपदे भृ-धातोः (डुभृञ् धारणपोषणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1087) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **ह्रस्वस्य पिति कृति तुक्** (पा.सू. 6-1-71) इति तुगागमः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3535. सर्वयज्ञानाम् (9-24) - सर्वे यज्ञाः तेषाम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. ष.वि. ब.व.।

3536. सर्वयोनिषु (14-4) - सर्वाः योनयः तासु, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वा इति सृ-धातोः **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्प्रत्यये साधुः, अथवा सर्व-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। योनि इत्यत्र **वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्** (उणा. 4-51) इति सूत्रेण यु-धातोः (यु मिश्रणेऽमिश्रणे च, अदादिः, सि.कौ. - धा.सं. 1033) नि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। स्त्री. स.वि. ब.व.।

3537. सर्वलोकमहेश्वरम् (5-29) - सर्वे लोकाः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वलोकानां महेश्वरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं.

935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। महेश्वर इत्यत्र महान् ईश्वरः इति विग्रहे **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः** (पा.सू. 2-1-61) इति सूत्रेण समासः, **आन्महतः समानाधिकरणजातीयदेशीयेषु** (पा.सू. 6-3-46) इति तकारस्य आकारः, **अकः सवर्णे दीर्घः** (पा.सू. 61-101) इति दीर्घः, महत् इति **वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** (उणा.2-84) इति सूत्रेण मह-धातोः (मह पूजायाम्, भ्वादिः, सि.कौ. - धा.सं. 730) अति-प्रत्ययान्तः निपात्यते, ईश्वर इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः, महा ईश्वर महेश्वर इत्यत्र **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. द्वि.वि. ए.व.।

3538. सर्ववित् (15-19) - सर्वं वेत्ति इति विग्रहे सर्व-उपपदे विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **क्विप् च** (पा.सू. 3-2-76) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3539. सर्ववृक्षाणाम् (10-26) - सर्वे वृक्षाः तेषाम्, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। वृक्ष इत्यत्र वृक्ष्-धातोः (वृक्ष वरणे, भ्वादिः, सि.कौ. - धा.सं. 604) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. ष.वि. ब.व.।

3540. सर्ववेदेषु (7-8) - सर्वे वेदाः तेषु, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. स.वि. ब.व.।

3541. सर्वशः (1-18, 2-58,68, 3-23,27, 4-11, 10-2, 13-29) - सर्व-शब्दात् **सङ्ख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति शस्-प्रत्ययः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3542. सर्वसङ्कल्पसन्न्यासी (6-4) - सर्वे सङ्कल्पाः **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वसङ्कल्पानां सन्न्यासी, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। सङ्कल्प इत्यत्र सम्-पूर्वकात् कृप्-धातोः (कृपू सामर्थ्ये, भ्वादिः, सि.कौ. - धा.सं. 762) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **कृपो रो लः** इति रस्य लकारः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पेन अनुस्वारस्य ङकारः। सन्न्यासिन् इत्यत्र सन्न्यास-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः,

सन्न्यास इत्यत्र सम्-नि-पूर्वकात् अस्-धातो (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209 **भावे** (पा.सू. 3-3-18) अथवा **अकर्तीर च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति समः मकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः, **इको यणचि** (पा.सू. 6-1-77) इति नेः इकारस्य यकारः। पुं. प्र.वि. ए.व.।

3543. सर्वस्य (2-30, 7-25, 8-9, 10-8, 13-17, 15-15, 17-3,7) - सृ-धातोः **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्प्रत्यये साधुः, अथवा सर्व-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। सर्व ङस्, **टाङसिङसामिनात्स्याः** (पा.सू. 7-1-12) इति ङसेः स्य-आदेशः। पुं. ष.वि. ए.व.।

3544. सर्वहरः (10-34) - सर्वस्य हरः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। हर इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इत्यनेन गुणः। पुं. प्र.वि. ए.व.।

3545. सर्वम् (2-17, 4-33,36, 3-30, 7-7,13,19, 8-22,28, 9-4, 10-8,14, 11-40, 13-13, 18-46) - सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3546. सर्वः (3-5, 11-40) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3547. सर्वाणि (2-30,61, 3-30, 4-5,27, 7-6, 9-6, 12-6, 15-16) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **जश्शसोः शिः** (पा.सू. 7-1-20) जसः/शसः स्थाने शि-आदेशः, **नपुंसकस्य झलचः नपुंसकस्य झलचः** (पा.सू. 7-1-72) इति नुम्, **सर्वनामस्थाने चासम्बुद्धौ** (पा.सू. 6-4-8) इति उपधायाः दीर्घः, **अट्कुप्वाङ्नुम्व्यवायेऽपि** (पा.सू. 8-4-2) इति णत्वम्। नपुं. द्वि.वि. ब.व.।

3548. सर्वान् (1-27, 2-55,71, 4-32, 6-24, 11-15,15) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ब.व.।

3549. सर्वारम्भपरित्यागी (12-16, 14-25) - सर्वे आरम्भाः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वारम्भाणां परित्यागी, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आरम्भ इत्यत्र आङ्पूर्वकात् रभ्-धातोः (रभ राभस्ये, भ्वादिः, सि.कौ. - धा.सं. 974) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः, **रधिजभोरचि** (7-1-61) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः मकारः। परित्यागिन् इत्यत्र परि-पूर्वकात् त्यज्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986)

**संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च** (पा.सू 3-2-142) इति घिनुण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. प्र.वि. ब.व.।

3550. सर्वारम्भाः (18-48) - सर्वेषाम् आरम्भाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अथवा सर्व-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आरम्भ इत्यत्र आङ्पूर्वकात् रभ्-धातोः (त्यज हानौ, भ्वादिः, सि.कौ. - धा.सं. 986) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्, **रधिजभोरचि** (7-1-61) इति नुम्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः मकारः। पुं. प्र.वि. ब.व.।

3551. सर्वार्थान् (18-32) - सर्वे अर्थाः, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अर्थ इत्यत्र अर्थ-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. द्वि.वि. ब.व.।

3552. सर्वाश्चर्यमयम् (11-11) - सर्वाश्चर्यमय-शब्दात् **तत्प्रकृतवचने मयट्** (पा.सू. 5-4-21) इति मयट्। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। आश्चर्य इत्यत्र आङ्-पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **चरेराङि चागुरौ** (वा. 1925) इति यत्, **आश्चर्यमनित्ये** (पा.सू. 6-1-147) इति सुट्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. द्वि.वि. ए.व.।

3553. सर्वाः (8-18, 11-20, 15-13) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ब.व.।

3554. सर्वे (1-6,9,11, 2-12,70, 4-19,30, 7-18, 10-13, 11-20,26,32,36, 14-1) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **जसः शी** (पा.सू. 7-1-17) इति शी, **आद्गुणः** (पा.सू. 6-1-87) इति गुणः। पुं. प्र.वि. ब.व.।

3555. सर्वेन्द्रियगुणाभासम् (13-14) - सर्वाणि इन्द्रियाणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वेन्द्रियाणां गुणाः **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्वेन्द्रियगुणानाम् आभासः **षष्ठी** (पा.सू. 2-2-8) इति समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते,

घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। गुण इत्यत्र गुण-धातोः (गुण आमन्त्रणे, चुरादिः, सि.कौ. - धा.सं. 1895) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन स्वार्थे णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अलोपः, ततः **एरच्** (पा.सू. 3-3-56) इति अच् प्रत्यये, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। आभास इत्यत्र आङ्पूर्वकात् भास्-धातोः (भासृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 624) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3556. सर्वेन्द्रियविवर्जितम् (13-14) - सर्वाणि इन्द्रियाणि, **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन** (पा.सू. 2-1-49) इति समासः। सर्वेन्द्रियैः विवर्जितम्, **तृतीयातत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) समासः। सर्व इति सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। इन्द्रिय इत्यत्र **इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा** (पा.सू. 5-2-93) इति सूत्रेण इन्द्र-शब्दात् घ-प्रत्ययः निपात्यते, घस्य **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** (पा.सू. 7-1-2) इति इयादेशः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः। विवर्जित इत्यत्र वि-पूर्वकात् वृज्-धातोः (वृजी वर्जने, चुरादिः, सि.कौ. - धा.सं. 1813) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, ततः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **निष्ठायां सेटि** (पा.सू. 6-4-52) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

3557. सर्वेभ्यः (4-36) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. पं.वि. ब.व.।

3558. सर्वेषाम् (1-25, 6-47) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, सर्व आम्, **आमि सर्वनाम्नः सुट्** (पा.सू. 7-1-52) इति सुट्, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। पुं. ष.वि. ब.व.।

3559. सर्वेषु (1-11, 2-46, 8-7,20,27, 13-27, 18-21,54) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, सर्व सु, **बहुवचने झल्येत्** (पा.सू. 7-3-103) इति एत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति मूर्धन्यादेशः। नपुं. स.वि. ब.व.।

3560. सर्वैः (15-15) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे** (उणा. 1-151) इति वन्-प्रत्यये साधुः, अथवा सर्व-धातोः (षर्व हिंसायाम्, भ्वादिः, सि.कौ. - धा.सं. 586) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. तृ.वि. ब.व.।

3561. सविकारम् (13-6) - विकारेण सह यत् तत्, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो**

**ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। विकार इत्यत्र वि-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **भावे** (पा.सू. 3-3-18) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः। नपुं. प्र.वि. ए.व.।

3562. सविज्ञानम् (7-2) - विज्ञानेन सह यत् तत्, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। विज्ञान इत्यत्र वि-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** इति दीर्घः (पा.सू. 6-1-101) इति दीर्घः। नपुं. द्वि.वि. ए.व.।

3563. सव्यसाचिन् (11-33) - सव्येन सचति इति विग्रहे सच्-धातोः (षच् सेचने सेवने च, भ्वादिः, सि.कौ. - धा.सं. 163) सव्य-उपपदात् **सुप्यजातौ णिनिस्ताच्छील्ये** (पा.सू. 3-2-78) इति णिनि-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सव्य इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अचो यत्** (पा.सू. 3-1-97) इति यत्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **धातोस्तन्निमित्तस्यैव** (पा.सू. 6-1-80) इति अवादेशः। पुं. सम्बो.वि. ए.व.।

3564. सशरम् (1-47) - शरेण सह यत् तत्, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। शर इत्यत्र शॄ-धातोः (शॄ हिंसायाम्, क्र्यादिः, सि.कौ. - धा.सं. 1488) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

3565. सह (1-22, 11-26,26, 13-23) - सह्-धातोः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3566. सहजम् (18-48) - सह जातः इति विग्रहे सह-उपपदात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **अन्येष्वपि दृश्यते** (पा.सू. 3-3-101) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

3567. सहदेवः (1-16) - नामधेयम्। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, दिवादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3568. सहयज्ञाः (3-10) - यज्ञेन सह, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्-प्रत्ययः, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। पुं. प्र.वि. ब.व.।

3569. सहसा (1-13) - अव्ययम्। सह-पूर्वकात् सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) डा-प्रत्ययः। डित्त्वसामर्थ्यात् टेः लोपः।

3570. सहस्रकृत्वः (11-39) - सहस्र-शब्दात् **सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्** (पा.सू. 5-4-17) इति सूत्रेण कृत्वसुच्-प्रत्ययः। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। अव्ययम्।

3571. सहस्रबाहो (11-46) - सहस्रं बाहवः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। बाहु इत्यत्र बाध्-धातोः (बाधृ लोडने, भ्वादिः, सि.कौ. - धा.सं. 5) **अर्जिदृशिकम्यमिपशिबाधामृजिपसितुक्धुक्दीर्घहकाराश्च** (उणा. 1-27) इति कु-प्रत्ययः धातोः हकारान्तादेशः च। पुं. सम्बो.वि. ए.व.।

3572. सहस्रयुगपर्यन्तम् (8-17) - सहस्रसंख्याकानि युगानि सहस्रयुगानि, **शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्** (वा. 1310) इति वार्तिकेन समासः, सहस्रयुगानि पर्यन्तः यस्य तत् सहस्रयुगपर्यन्तम्, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्। युग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **रथयुगप्रासङ्गम्** (पा.सू. 4-4-76) इति गुणाभावनिर्देशात् गुणो न। पर्यन्त इत्यत्र परितः अन्तम्, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः, समासे परितः इत्यर्थे परि इति शब्दः प्रयुज्यते। अन्त इत्यत्र अन्त्-धातोः (अति बन्धने, भ्वादिः, सि.कौ. - धा.सं. 61) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति धातोः नुम्-आगमः। परित इत्यत्र परि-शब्दात् **आद्यादिभ्य उपसंख्यानम्** (वा. 3339) इति वार्तिकेन तसि-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

3573. सहस्रशः (11-5) - सहस्र-शब्दात् **संख्यैकवचनाच्च वीप्सायाम्** (पा.सू. 5-4-43) इति शस्-प्रत्ययः। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। अव्ययम्।

3574. सहस्रेषु (7-3) - सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. स.वि. ब.व.।

3575. सः (1-13,19,27, 2-15,21,70,71, 3-6,7,12,16,21,42, 4-2,3,9,14,18,20, 5-3,5,11,21,23,23,24,28, 6-1,23,30,31,32,44,47, 7-17,18,19,22, 8-5,10,13,19,20,22, 9-30,30, 10-3,7, 11-14,55, 12-14,15,16,17, 13-3,23,27,29, 14-19,25,26, 15-1,19, 16-23, 17-3,3,11, 18-8,9,11,16,17,71) - तद् सु, **त्यदादीनामः** (पा.सू. 6-1-97) इति दकारस्य अ-कारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **तदोः सः सावनन्त्ययोः** (पा.सू. 7-2-106) इति दकारस्य सकारादेशः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, स्वादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः। पुं. प्र.वि. ए.व.।

3576. सा (2-69, 6-19, 11-12, 17-2, 18-30,31,32,33,34,35) - तद् सु, **त्यदादीनामः** (पा.सू. 6-1-97) इति दकारस्य अकारादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **तदोः सः सावनन्त्ययोः** (पा.सू. 7-2-106) इति दकारस्य सकारादेशः, **हल्ङ्याब्भ्यो दीर्घात् सुतुस्यपृक्तं हल्** (पा.सू. 6-1-68) इति सोः लोपः। तद् इत्यत्र तन्-धातोः (तनु विस्तारे, स्वादिः, सि.कौ. - धा.सं. 1463) **त्यजितनियजिभ्यो डित्** (उणा. 1-129) इति अदिप्रत्ययः, डित्त्वसामर्थात् टेः लोपः। स्त्री. प्र.वि. ए.व.।

3577. साक्षात् (18-75) - साक्षम् अतति इति विग्रहे साक्ष इति उपपदे अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **अन्येभ्योऽपि दृश्यते** (पा.सू. 3-2-178) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति

पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। साक्ष इत्यत्र अक्षेण सह इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, अक्ष इत्यत्र अक्ष्-धातोः (अक्षू व्याप्तौ, भ्वादिः, सि.कौ. - धा.सं. 654) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। अव्ययम्।

3578. साक्षी (9-18) - साक्ष-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। साक्ष इत्यत्र अक्षेण सह इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, अक्ष इत्यत्र अक्ष्-धातोः (अक्षू व्याप्तौ, भ्वादिः, सि.कौ. - धा.सं. 654) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3579. सागर (10-24) - सगर-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः। सगर इत्यत्र गरेण सह इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अव्ययम् इदम्, गर इत्यत्र गॄ-धातोः (गॄ निगरणे तुदादिः, सि.कौ. - धा.सं. 1410) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3580. सात्त्विकप्रियाः (17-8) - सात्त्विकानां प्रियाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सात्त्विक इत्यत्र सत्त्व-शब्दात् **निर्वृत्तेक्षद्यूतादिभ्यः** (पा.सू. 4-4-19) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। प्रिय इत्यत्र प्री-धातोः (प्रीङ् प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1144) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-35) इति क-प्रत्ययः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः ईकारस्य इयङादेशः। पुं. प्र.वि. ब.व.।

3581. सात्त्विकम् (14-16,17-17,20, 18-20,23,37) - सत्त्व-शब्दात् **निर्वृत्तेक्षद्यूतादिभ्यः** (पा.सू. 4-4-19) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। नपुं. प्र.वि. ए.व.।

3582. सात्त्विकः (17-10, 18-9,26) - सत्त्व-शब्दात् **निर्वृत्तेक्षद्यूतादिभ्यः** (पा.सू. 4-4-19) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ए.व.।

3583. सात्त्विकाः (7-12, 17-4) - सत्त्व-शब्दात् **निर्वृत्तेक्षद्यूतादिभ्यः** (पा.सू. 4-4-19) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ब.व.।

3584. सात्त्विकी (17-2, 18-30,33) - सत्त्व-शब्दात् **निर्वृत्तेक्षद्यूतादिभ्यः** (पा.सू. 4-4-19) इति ठक्, **ठस्येकः** (पा.सू. 7-3-50) इति इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू 2-2-6) इति ङीप्, सत्त्व इत्यत्र सत्-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। स्त्री. प्र.वि. ए.व.।

3585. सात्यकिः (1-17) - नामधेयम् इदम्। सत्यकस्य अपत्यम् इत्यर्थे सत्यक-शब्दात् **अत इञ्** (पा.सू. 4-1-95) इति इञ्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः। सत्यक इत्यत्र सत्य-शब्दात् **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन्-प्रत्ययः, सत्य इत्यत्र सत्-शब्दात् **तत्र साधुः** (पा.सू. 4-4-98) इति यत्-प्रत्ययः, सत् इत्यत्र अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः स्थाने शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **श्नसोरल्लोपः** (पा.सू. 6-4-111) इति अस्-धातोः अकारस्य लोपः। पुं. प्र.वि. ए.व.।

3586. साधर्म्यम् (14-2) - सधर्मन्-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-125) इति ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। सधर्मन् इत्यत्र सह धर्मो यस्य इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः, **धर्मादनिच् केवलात्** (पा.सू.5-4-124) इति अनिच्-प्रत्ययः समासान्तः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, अव्ययम् इदम्। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृक्षिभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. द्वि.वि. ए.व.।

3587. साधिभूताधिदैवम् (7-30) - अधिभूत इत्यत्र भूतेषु इति अर्थे **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इत्यनेन अधि भूत इत्यनयोः समासः। अधिदैव इत्यत्र दैवे इति अर्थे **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इत्यनेन अधि दैव इत्यनयोः समासः। ततः अधिभूतं च अधिदैवं च अधिभूताधिदैवम्, इति विग्रहे **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, ततः अधिभूताधिदैवेन सह साधिभूताधिदैवम् इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्। भूत इत्यत्र भूति-शब्दात् **अर्शआदिभ्योऽच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इलोपः, भूति इत्यत्र भू-धातोः (भू सत्तायां, भ्वादिः, सि.कौ. - धा.सं. 01) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः**

(पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। दैव इत्यत्र देवस्य इदम् इति विग्रहे **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, देव इत्यत्र दिव्-धातोः (दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु, तनादिः, सि.कौ. - धा.सं. 1107) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

3588. साधियज्ञम् (7-30) - अधियज्ञ इत्यत्र यज्ञे इत्यर्थे **अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भाव- पश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु** (पा.सू. 2-1-6) इति सूत्रेण अधि यज्ञ इत्यनयोः समासः, ततः अधियज्ञेन सह साधियज्ञम् इति विग्रहे **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य सादेशः, सह इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। नपुं. द्वि.वि. ए.व.।

3589. साधुभावे (17-23) - साधुः भावः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। साधु इत्यत्र साध्-धातोः (साध संसिद्धौ, स्वादिः, सि.कौ. - धा.सं. 1263) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-01) इति उण्-प्रत्ययः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। पुं. स.वि. ए.व.।

3590. साधुषु (6-9) - साध्-धातोः (साध संसिद्धौ, स्वादिः, सि.कौ. - धा.सं. 1263) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-01) इति उण्-प्रत्ययः। पुं. स.वि. ब.व.।

3591. साधुः (9-30) - साध्-धातोः (साध संसिद्धौ, स्वादिः, सि.कौ. - धा.सं. 1263) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-01) इति उण्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3592. साधूनाम् (4-8) - साध्-धातोः (साध संसिद्धौ, स्वादिः, सि.कौ. - धा.सं. 1263) **कृवापाजिमिस्वदिसाध्यशूभ्य उण्** (उणा. 1-01) इति उण्-प्रत्ययः। पुं. ष.वि. ब.व.।

3593. साध्याः (11-22) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47 **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **सिध्यतेरपारलौकिके** इति धातोः इकारस्य आत्वम्, **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

3594. साम (9-17) - सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण मनिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। नपुं. प्र.वि. ए.व.।

3595. सामर्थ्यम् (2-36) - समर्थ-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-125) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। समर्थ इत्यत्र सम्-पूर्वकात् अर्थ्-धातोः (अर्थ उपयाच्ञायाम्, चुरादिः, सि.कौ. - धा.सं. 1905) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति सूत्रेण घञ्-प्रत्ययः। नपुं. द्वि.वि. ए.व.।

3596. सामवेदः (10-22) - साम वेदः, **विशेषणं विशेष्येण बहुलम्** (पा.सू. 2-1-57) इति समासः। सामन् इत्यत्र सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण मनिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। वेद इत्यत्र विद्-धातोः (विद ज्ञाने, अदादिः, सि.कौ. - धा.सं. 1064) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. प्र.वि. ए.व.।

3597. सामासिकस्य (10-33) - समास-शब्दात् **अचित्तहस्तिधेनोष्ठक्** (पा.सू. 4-2-47) इति ठक्-प्रत्ययः, **ठस्येकः** (पा.सू. 7-3-50) इति इकादेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। समास इत्यत्र सम्-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. ष.वि. ए.व.।

3598. साम्नाम् (10-35) - सो-धातोः (षो अन्तकर्मणि, दिवादिः, सि.कौ. - धा.सं. 1147) **सातिभ्यां मनिन्मनिणौ** (उणा. 4-152) इति सूत्रेण मनिन्-प्रत्ययः, **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्। नपुं. ष.वि. ब.व.।

3599. साम्ये (5-9) - सम-शब्दात् **वर्णदृढादिभ्यः ष्यञ् च** (पा.सू. 5-1-123) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. स.वि. ए.व.।

3600. साम्येन (6-33) - सम-शब्दात् **वर्णदृढादिभ्यः ष्यञ् च** (पा.सू. 5-1-123) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। सम इत्यत्र सम्-धातोः (षम अवैकल्ये, भ्वादिः, सि.कौ. - धा.सं. 829) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

3601. साहंकारेण (18-24) - अहङ्कारेण सह, **तेन सहेति तुल्ययोगे** (पा.सू. 2-2-28) इति समासः, **वोपसर्जनस्य** (पा.सू. 6-3-82) इति सहस्य स्थाने स-आदेशः। अहङ्कार इत्यत्र अहम्-पूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, अहम् इत्यत्र अह्-धातोः (अह व्याप्तौ, स्वादिः, सि.कौ. - धा.सं. 1272) बाहुलकात् अम्-प्रत्ययः, विभक्तिप्रतिरूपकम् अव्ययम् इदम्। पुं. तृ.वि. ए.व.।

3602. सांख्ययोगौ (5-4) - साङ्ख्यं च योगश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सांख्य इत्यत्र सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। योग इत्यत्र युज्-धातोः (युजिर् योगे, रुधादिः, सि.कौ. - धा.सं. 1444) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. द्वि.वि. द्वि.व.।

3603. सांख्यम् (5-5) - सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण् इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. द्वि.वि. ए.व.।

3604. सांख्यानाम् (3-3) - सांख्यम् अधीयते विदन्ति वा इति विग्रहे सांख्य-शब्दात् **तदधीते तद्वेद** (पा.सू. 4-2-59) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सांख्य इत्यत्र सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ब.व.।

3605. सांख्ये (2-39, 18-13) - सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. स.वि. ए.व.।

3606. सांख्येन (13-24) - सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. तृ.वि. ए.व.।

3607. साख्यैः (5-5) - सङ्ख्या-शब्दात् **तस्येदम्** (पा.सू. 4-3-120) इति अण्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सङ्ख्या इत्यत्र सम्-पूर्वकात् ख्या-धातोः (ख्या प्रकथने, अदादिः, सि.कौ. - धा.सं. 1060) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. तृ.वि. ए.व.।

3608. सिद्धये (7-3, 18-13) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। स्त्री. च.वि. ए.व.।

3609. सिद्धसङ्घाः (11-36) - सिद्धानां सङ्घाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सिद्ध इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः, अथवा सिद्धिः अस्य अस्ति इत्यर्थे सिद्धि-शब्दात् **अर्श आदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः, सिद्धि इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। सङ्घ इत्यत्र सम्पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्घौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. प्र.वि. ब.व.।

3610. सिद्धः (16-14) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः, अथवा सिद्धिः अस्य अस्ति इत्यर्थे सिद्धि-शब्दात् **अर्श आदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः, सिद्धि इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। पुं. प्र.वि. ए.व.।

3611. सिद्धानाम् (7-3, 10-26) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः, अथवा सिद्धिः अस्य अस्ति इत्यर्थे सिद्धि-शब्दात् **अर्श आदिभ्योच्** (पा.सू. 5-2-127) इति अच्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः, सिद्धि इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। पुं. ष.वि. ब.व.।

3612. सिद्धिम् (3-4, 4-12, 12-10, 14-1, 16-23, 18-45,46,50) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। स्त्री. द्वि.वि. ए.व.।

3613. सिद्धिः (4-12) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। स्त्री. प्र.वि. ए.व.।

3614. सिद्धौ (4-22) - सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। स्त्री. स.वि. ए.व.।

3615. सिद्ध्यसिद्ध्योः (2-48, 18-26) - सिद्धिश्च असिद्धिश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सिद्धि इत्यत्र सिध्-धातोः (षिध गत्याम्, भ्वादिः, सि.कौ. - धा.सं. 47) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दः। असिद्धि इत्यत्र न सिद्धिः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः। स्त्री. स.वि. द्वि.व.।

3616. सिंधुराजः () - कस्यचित् संज्ञा। सिंधोः राजा, **षष्ठी** (पा.सू. 2-2-8) इति समासः, **राजाहस्सखिभ्यष्टच्** (पा.सू. 5-4-91) इति समासान्तः टच्-प्रत्ययः, **नस्तद्धिते** (पा.सू. 6-4-144) इति टेः लोपः। सिंधु इत्यत्र स्यन्द्-धातोः (स्यन्दू प्रस्रवणे, भ्वादिः, सि.कौ. - धा.सं. 761) **स्यन्देः संप्रसारणं धश्च** (उणा. 1-12) इति सूत्रेण धातोः उ-प्रत्ययः, यकारस्य इकारः सम्प्रसारणं दकारस्य च धकारादेशः, **संप्रसारणाच्च** (पा.सू. 6-1-108) इति पूर्वरूपम्, राजन् इत्यत्र **कनिन् युवृषितक्षिराजधिन्विद्युप्रतिदिवः** (उणा. 4-154) इति सूत्रेण राज्-धातोः (राजृ दीप्तौ, भ्वादिः, सि.कौ. - धा.सं. 822) कनिन्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3617. सिंहनादम् (1-12) - सिंहस्य नादः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सिंह इत्यत्र सिच्-धातोः (षिच क्षरणे, तुदादिः, सि.कौ. - धा.सं. 1434) **सिचेः संज्ञायां हनुमौ कश्च** (उणा. 5-62) इति सूत्रेण क-प्रत्ययः, धातोः चकारस्य हकारादेशः धातोः नुमागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणे प्राप्ते **क्ङिति च** (पा.सू. 1-1-5) इति गुणस्य निषेधः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः। नाद इत्यत्र नद्-धातोः (टुनदि समृद्धौ, भ्वादिः, सि.कौ. - धा.सं. 67) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। पुं. द्वि.वि. ए.व.।

3618. सीदन्ति (1-29) - सद्-धातोः (षद्लृ विशरणगत्यवसादनेषु, भ्वादिः, सि.कौ. - धा.सं. 990) लट्, लटः झि, सद् झि, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः** (पा.सू. 7-3-78) इति सदः सीदादेशः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। लट्. प्र.पु. ब.व.।

3619. सुकृतदुष्कृते (2-50) - सुकृतं च दुष्कृतं च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सुकृत इत्यत्र सुष्ठु कृतम् इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र समासे सुष्ठु इत्यर्थे सु इति शब्दः प्रयुज्यते, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। दुष्कृत इत्यत्र दुष्टं कृतं इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र समासे दुष्ट इत्यर्थे दुर् इति शब्दः प्रयुज्यते, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **खरवसानयोर्विसर्जनीयः** (पा.सू. 8-3-15) इति रेफस्य विसर्गः, **इदुदुपधस्य चाप्रत्ययः** (पा.सू. 8-3-41) इति विसर्गस्य षत्वम्। सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। दुष्ट इत्यत्र दुष्-धातो (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति तस्य निषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. द्वि.वि. द्वि.व.।

3620. सुकृतस्य (14-16) - सुष्ठु कृतं तस्य इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र समासे सुष्ठु इत्यर्थे सु इति शब्दः प्रयुज्यते, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. ष.वि. ए.व.।

3621. सुकृतम् (5-15) - सुष्ठु कृतम् इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र समासे सुष्ठु इत्यर्थे सु इति शब्दः प्रयुज्यते, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. द्वि.वि. ए.व.।

3622. सुकृतिनः (7-16) - सुकृत इति शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः। सुकृत इत्यत्र सुष्ठु कृतम् इति विग्रहे **प्रादयो गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र समासे सुष्ठु इत्यर्थे सु इति शब्दः प्रयुज्यते, कृत इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-

26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ब.व.।

3623. सुखदुःखसंज्ञैः (15-5) - सुखं च दुःखं च **चाऽर्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः, सुखदुःखे संज्ञे येषां तैः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **गोस्त्रियोरुपसर्जनस्य** (पा.सू. 1-2-48) इति संज्ञा-शब्दस्य आकारस्य ह्रस्वः अकारः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। संज्ञा इत्यत्र सम्पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1509) **आतश्चोपसर्गे** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. तृ.वि. ब.व.।

3624. सुखदुःखानाम् (13-20) - सुखानि च दुःखानि च तेषाम्, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. ष.वि. ब.व.।

3625. सुखदुःखे (2-38) - सुखं च दुःखं च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। दुःख इत्यत्र दुःख-धातोः (दुःख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1930) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** इति णेः लोपः, **नन्दिग्रहिपचादिभ्योल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. द्वि.वि. ब.व.।

3626. सुखसङ्गेन (14-6) - सुखस्य सङ्गः तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। सङ्ग इत्यत्र सञ्ज्-धातोः (षञ्ज सङ्गे, भ्वादिः, सि.कौ. - धा.सं. 987) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति नकारस्थानिकस्य अनुस्वारस्य ङकारः। पुं. तृ.वि. ए.व.।

3627. सुखस्य (14-27) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-

4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. ष.वि. ए.व.।

3628. सुखम् (2-66, 4-40, 5-3,13,21,21, 6-21,27,27,32, 10-4, 13-6, 16-23, 18-36,37,38,39) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

3629. सुखानि (1-32,33) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. द्वि.वि. ब.व.।

3630. सुखिनः (1-37, 2-32) - सुख-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

3631. सुखी (5-23, 16-14) - सुख-शब्दात् **अत इनिठनौ** (पा.सू. 5-2-115) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ए.व.।

3632. सुखे (14-9) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. स.वि. ए.व.।

3633. सुखेन (6-28) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. तृ.वि. ए.व.।

3634. सुखेषु (2-56) - सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, ततः सुखि इति णिजन्तात् **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. स.वि. ब.व.।

3635. सुघोषमणिपुष्पकौ (1-16) - सुघोषश्च मणिपुष्पकश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सुघोष इत्यत्र शोभनः घोषः यस्य सः इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, घोष् इत्यत्र घुष्-धातोः (घुषिर् अविशब्दने, भ्वादिः, सि.कौ. - धा.सं. 653) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः,

**पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। मणिपुष्पक इत्यत्र मणिः पुष्पके यस्य इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, मणि इत्यत्र मण्-धातोः (मण् शब्दे, भ्वादिः, सि.कौ. - धा.सं. 886) **सर्वधातुभ्य इन्** (उणा. 4-117) इति सूत्रेण इन, पुष्पक इत्यत्र पुष्प्-धातोः (पुष्प विकसने, दिवादिः, सि.कौ. - धा.सं. 1122) **क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि** (उणा. 2-33) इति सूत्रेण क्वुन्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति वु-स्थाने अकादेशः। पुं. द्वि.वि. द्वि.व.।

3636. सुदुराचारः (9-30) - दुष्टः आचारः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे दुष्टार्थे दुर्-शब्दः प्रयुज्यते। शोभनः दुराचारः **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते। आचार इत्यत्र आङ्पूर्वकात् चर्-धातोः (चर गतौ भक्षणे च, भ्वादिः, सि.कौ. - धा.सं. 559) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। दुष्ट इत्यत्र दुष्-धातो (दुष वैकृत्ये, दिवादिः, सि.कौ. - धा.सं. 1185) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट् प्राप्तः परन्तु **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति तस्य निषेधः, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति षादेशः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3637. सुदुर्दर्शम् (11-52) - सु दुर् इत्युपपदद्वयपूर्वकात् दृश्-धातोः (दृशिर् प्रेक्षणे, भ्वादिः, सि.कौ. - धा.सं. 988) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. द्वि.वि. ए.व.।

3638. सुदुर्लभः (7-19) - सु दुर् इत्युपपदद्वयपूर्वकात् लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं.975) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः पुं. प्र.वि. ए.व.।

3639. सुदुष्करम् (6-34) - सु दुर् इत्युपपदद्वयपूर्वकात् कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3640. सुनिश्चितम् (5-1) - सु-निस्-पूर्वकात् चि-धातोः (चिञ् चयने, स्वादिः, सि.कौ. - धा.सं. 1251) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। नपुं. द्वि.वि. ए.व.।स्

3641. सुरगणाः (10-2) - सुराणां गणाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सुर इत्यत्र सुर्-धातोः (षुर ऐश्वर्यदीप्त्योः, तुदादिः, सि.कौ. - धा.सं. 1340) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। गण इत्यत्र अदन्तात् गण-धातोः (गण संख्याने, चुरादिः, सि.कौ. - धा.सं. 1854) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभियो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। पुं. प्र.वि. ब.व.।

3642. सुरसङ्घाः (11-21) - सुराणां सङ्घाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सुर इत्यत्र सुर्-धातोः (षुर ऐश्वर्यदीप्त्योः, तुदादिः, सि.कौ. - धा.सं. 1340) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। सङ्घ इत्यत्र सम्पूर्वकात् हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **संघोद्धौ गणप्रशंसयोः** (पा.सू. 3-3-86) इत्यनेन अप्-प्रत्ययः टिलोपः घत्वं च निपात्यते, **मोऽनुस्वारः** (पा.सू. 8-3-23) इति अनुस्वारः, **वा पदान्तस्य** (पा.सू. 8-4-59) इति परसवर्णविकल्पः। पुं. प्र.वि. ब.व.।

3643. सुराणाम् (2-8) - सुर्-धातोः (षुर ऐश्वर्यदीप्त्योः, तुदादिः, सि.कौ. - धा.सं. 1340) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. ष.वि. ब.व.।

3644. सुरेन्द्रलोकम् (9-20) - सुरेन्द्रस्य लोकः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सुरेन्द्र इत्यत्र सुरेषु इन्द्रः इति विग्रहे **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। सुर इत्यत्र सुर्-धातोः (षुर ऐश्वर्यदीप्त्योः, तुदादिः, सि.कौ. - धा.सं. 1340) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, इन्द्र इत्यत्र इन्द्-धातोः (इदि परमैश्वर्ये, भ्वादिः, सि.कौ. - धा.सं. 63) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** (उणा. 2-29) इति रन्-प्रत्ययः, लोक इत्यत्र लोक्-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति सूत्रेण घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3645. सुलभः (8-14) - सु-पूर्वकात् लभ्-धातोः (डुलभष् प्राप्तौ, भ्वादिः, सि.कौ. - धा.सं. 975) **ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्** (पा.सू. 3-3-126) इति खल्-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः। पुं. प्र.वि. ए.व.।

3646. सुविरूढमूलम् (15-3) - सुविरूढं मूलं यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सुविरूढ इत्यत्र सु-वि-पूर्वकात् रुह्-धातोः (रुह बीजजन्मनि प्रादुर्भावे च, भ्वादिः, सि.कौ. - धा.सं. 859) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **हो ढः** इति हस्य ढः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (पा.सू. 6-3-111) इति अणः दीर्घः। मूल इत्यत्र मू-धातोः (मूङ् बन्धने, भ्वादिः, सि.कौ. - धा.सं. 967) **मूशक्यबिभ्यः क्लः** (उणा. 4-108) इति सूत्रेण क्ल-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

3647. सुसुखम् (9-2) - शोभनं सुखम्, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते। सुख इत्यत्र सुख-धातोः (सुख तत्क्रियायाम्, चुरादिः, सि.कौ. - धा.सं. 1929) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः। नपुं. प्र.वि. ए.व.।

3648. सुहृत् (9-18) - शोभनं हृदयं यस्य **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, **सुहृद्दुर्हृदौ मित्रामित्रयोः** (पा.सू. 5-4-150) इति सूत्रेण हृदयस्य हृद्-आदेशः। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ए.व.।

3649. सुहृदम् (5-29) - शोभनं हृदयं यस्य **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, **सुहृद्दुर्हृदौ मित्रामित्रयोः** (पा.सू. 5-4-150) इति सूत्रेण हृदयस्य हृद्-आदेशः। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

3650. सुहृदः (1-27) - शोभनं हृदयं यस्य **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, **सुहृद्दुर्हृदौ मित्रामित्रयोः** (पा.सू. 5-4-150) इति सूत्रेण हृदयस्य हृद्-आदेशः। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ब.व.।

3651. सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु (6-9) - सुहृत् च मित्रं च अरिश्च उदासीनश्च मध्यस्थश्च द्वेष्यश्च बन्धुश्च तेषु, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। सुहृद् इत्यत्र शोभनं हृदयं यस्य इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, **सुहृद्दुर्हृदौ मित्रामित्रयोः** (पा.सू. 5-4-150) इति सूत्रेण हृदयस्य हृद्-आदेशः, हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। मित्र इत्यत्र मिद्-धातोः (मिदृ मेधाहिंसनयोः, भ्वादिः, सि.कौ. - धा.सं. 868) **अमिचिमिदिशसिभ्यः क्रः** (उणा. 4-164) इति क्र-प्रत्ययः, **खरि च** (8-4-55) इति दकारस्य तकारः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। अरि इत्यत्र ऋ-धातोः (ऋ गतिप्रापणयोः, भ्वादिः, सि.कौ. - धा.सं. 936) **अच इः** (उणा. 4-138) इति इ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। उदासीन इत्यत्र उद्-पूर्वकात् आस्-धातोः (आस उपवेशने, अदादिः, सि.कौ. - धा.सं. 1021) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शानच्-आदेशः, **ईदासः** (पा.सू. 7-2-83) इति आनस्य आकारस्य स्थाने ईत्-आदेशः। मध्यस्थ इत्यत्र मध्ये तिष्ठति इति विग्रहे मध्य-उपपदात् स्था-धातोः **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, मध्य इत्यत्र मध्यशब्दात् **अ साम्प्रतिके** (पा.सू. 4-3-9) इति सूत्रेण अप्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, मध्य इति मन् धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **अघ्न्यादयश्च** (उणा. 4-111) इति यत्-प्रत्ययान्तः नकारस्य धकारादेशत्वेन निपात्यते। द्वेष्य इत्यत्र द्विष्-धातोः (द्विष अप्रीतौ, अदादिः, सि.कौ. - धा.सं. 1013) **ऋहलोर्ण्यत्** (पा.सू. 3-1-124) इति ण्यत्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। बन्धु इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. स.वि. ब.व.।

3652. सूक्ष्मत्वात् (13-15) - सूक्ष्म-शब्दात् **तस्यभावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः, सूक्ष्म इत्यत्र सूच्-धातोः (सूच पैशुन्ये, चुरादिः, सि.कौ. - धा.सं. 1874) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **सूचेः स्मन्** (उणा. 4-176) इति स्मन्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्ययोः** (पा.सू. 8-3-59) इति प्रत्यय-सकारस्य षकारः। नपुं. पं.वि. ए.व.।

3653. सूतपुत्रः (11-26) - सूतस्य पुत्रः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सूत इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। पुत्र इत्यत्र पू-धातोः (पूङ् पवने, भ्वादिः, सि.कौ. - धा.सं. 966) **पुवो ह्रस्वश्च** (उणा. 4-164) इति क्त्र-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अथवा पुत्-नामनरकात् त्रायते इति पुत्पूर्वकात् त्रै-धातोः (त्रैङ् पालने, भ्वादिः, सि.कौ. - धा.सं. 965) ऐकारस्य **आदेच उपदेशेऽशिति** (पा.सू. 6-1-45) इति आत्वम्, **सुपि** (पा.सू. 3-2-4) इति योगविभागेन क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, पुत् इत्यत्र पृ-धातोः (पृ प्रीतौ, स्वादिः, सि.कौ. - धा.सं. 1258) बाहुलकात् डुति-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। पुं. प्र.वि. ए.व.।

3654. सूत्रे (7-7) - सूत्र इत्यत्र सूत्र-धातोः (सूत्र वेष्टने विमोचने ग्रन्थने च, चुरादिः, सि.कौ. - धा.सं. 1908) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अतो लोपः** (पा.सू. 6-4-48) इति अ-लोपः, **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा सिव्-धातोः **सिविमुच्योष्टेरू च** (उणा. 4-162) इति ष्ट्रन्-प्रत्ययः टेः ऊ इति आदेशः च। नपुं. स.वि. ए.व.।

3655. सूयते (9-10) - सू-धातोः (षूङ् प्राणिप्रसवे, दिवादिः, सि.कौ. - धा.सं. 1132) लट्, लटः त, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3656. सूर्यसहस्रस्य (11-12) - सूर्याणां सहस्रम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। सूर्य इति सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** (पा.सू. 3-1-114) इति सूत्रेण क्यप्-प्रत्ययः क्यपः च रुडागमः निपात्यते। सहस्र इत्यत्र सहस्-शब्दात् बाहुलकात् र-प्रत्ययः, सहस् इत्यत्र सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः। नपुं. ष.वि. ए.व.।

3657. सूर्यः (15-6) - सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः** (पा.सू. 3-1-114) इति सूत्रेण क्यप् क्यपः च रुडागमः निपात्यते। पुं. प्र.वि. ए.व.।

3658. सृजति (5-14) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) लट्, लटः तिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः। लट्. प्र.पु. ए.व.।

3659. सृजामि (4-7) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) लट्, लटः मिप्, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति दीर्घः। लट्. उ.पु. ए.व.।

3660. सृती (8-27) - सृ-धातोः (सृ गतौ, भ्वादिः, सि.कौ. - धा.सं. 935) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति। स्त्री. द्वि.वि. द्वि.व.।

3661. सृष्टम् (4-13) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति जकारस्य षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

3662. सृष्ट्वा (3-10) - सृज्-धातोः (सृज विसर्गे, तुदादिः, सि.कौ. - धा.सं. 1414) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः। **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः **क्ङिति च** (पा.सू. 1-1-5) इति निषेधात् न भवति, **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः** (पा.सू. 8-2-36) इति जकारस्य षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। अव्ययम्।

3663. सेनयोः (1-21,24,27, 2-10) - सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3.10) इति न-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. ष.वि. द्वि.व.।

3664. सेनानीनाम् (10-24) - सेनां नयन्ति तेषाम् इति विग्रहे सेना-पूर्वकात् नी-धातोः **सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्** (पा.सू. 3-2-61) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, सेना इत्यत्र सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3.10) इति न-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ब.व.।

3665. सेवते (14-26) - सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं.501) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3666. सेवया (4-34) - सेव्-धातोः (षेवृ सेवने, भ्वादिः, सि.कौ. - धा.सं.501) **गुरोश्च हलः** (पा.सू. 3-3-103) इति अ-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

3667. सैन्यस्य (1-7) - सेना-शब्दात् **सेनाया वा** (पा.सू. 4-4-45) इति ण्य-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आकारलोपः, सेना इत्यत्र सि-धातोः (षिञ् बन्धने, स्वादिः, सि.कौ. - धा.सं. 1248) **कृवृजॄसिद्रुपन्यनिस्वपिभ्यो नित्** (उणा. 3.10) इति न-प्रत्ययः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। नपुं. ष.वि. ए.व.।

3668. सोढुम् (5-23, 11-44) - सह्-धातोः (षह मर्षणे, भ्वादिः, सि.कौ. - धा.सं. 852) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्, **हो ढः** इति हस्य ढः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तस्य धत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्, **ढो ढे लोपः** (पा.सू. 8-3-13) इति ढस्य लोपः, **सहिवहोरोदवर्णस्य** (पा.सू. 6-3-112) इति धातोः अकारस्य ओकारः। अव्ययम्।

3669. सोमपाः (9-20) - सोमं पिबति इति विग्रहे सोम इति उपपदे पा-धातोः (पा पाने, भ्वादिः, सि.कौ. - धा.सं.925) **आतोनुपसर्गे कः** (पा.सू. 3-2-3) इति क-प्रत्ययः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **आतो आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, सोम इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

3670. सोमः (15-13) - सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3671. सौक्ष्म्यात् (13-32) - सूक्ष्म-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-124) इति ष्यञ्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-116) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अ-लोपः, सूक्ष्म इत्यत्र सूच्-धातोः (सूच पैशुन्ये, चुरादिः, सि.कौ. - धा.सं. 1874) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **सूचेः स्मन्** (उणा. 4-176) इति स्मन्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **चोः कुः** (पा.सू. 8-2-30) इति कुत्वम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति प्रत्यय-सकारस्य षकारः। नपुं. पं.वि. ए.व.।

3672. सौभद्रः (1-6,28) - सुभद्रा-शब्दात् **अनृष्यानन्तर्ये बिदादिभ्योऽञ्** (पा.सू. 4-1-104) इति अञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-4-117) इति वृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति आ-लोपः, सुभद्रा इत्यत्र शोभनं भद्रम् यस्याः इति विग्रहे **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, अत्र समासे शोभनार्थे सु-शब्दः प्रयुज्यते, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। भद्र इति भद्-धातोः (भदि कल्याणे सुखे च, भ्वादिः, सि.कौ. - धा.सं. 12) **ऋज्रेन्द्राग्रवज्रविप्रकुव्रचुव्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवप्रेरामालाः** (उणा. 2-29) इति सूत्रेण रन्-प्रत्ययान्तः निपात्यते। पुं. प्र.वि. ए.व.।

3673. सौमदत्तिः (1-8) - सोमदत्त-शब्दात् **अत इञ्** (पा.सू. 4-1-95) इति इञ्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदि-वृद्धिः। सोमदत्त इत्यत्र सोमः एनं दद्यात् इति विग्रहे **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति सूत्रेण सोम-उपपदात् दा-धातोः आशिषि संज्ञायां क्त-प्रत्ययः, **दो दद्घोः** (पा.सू. 7-4-46) इति दथ्-आदेशः, **खरि च** (पा.सू. 8-4-55) इति चर्त्वम्, सोम इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3674. सौम्यत्वम् (17-16) - सौम्य-शब्दात् **तस्य भावस्त्वतलौ** (पा.सू. 5-1-119) इति त्व-प्रत्ययः। सौम्य इत्यत्र सोम-शब्दात् **शाखादिभ्यो यत्** (पा.सू. 5-3-103) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, ततः

**प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदि-वृद्धिः, सोम इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. प्र.वि. ए.व.।

3675. सौम्यवपुः (11-50) - सौम्यं वपुः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। सौम्य इत्यत्र सोम-शब्दात् **शाखादिभ्यो यत्** (पा.सू. 5-3-103) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, ततः **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदि-वृद्धिः, सोम इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। वपुस् इत्यत्र वप्-धातोः (डुवपँ बीजसन्ताने गर्भाधाने छेदने बीजतन्तुसन्ताने मुण्डबीजोप्त्योः वपने घर्षणे तन्तुनिर्माणे च, भ्वादिः, सि.कौ. - धा.सं. 1003) **अर्तिपॄवपियजितनिधनितपिभ्यो नित्** (उणा. 2-117) इति सूत्रेण उसि-प्रत्ययः। पुं. प्र.वि. ए.व.।

3676. सौम्यम् (11-51) - सोम-शब्दात् **शाखादिभ्यो यत्** (पा.सू. 5-3-103) इति यत्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, ततः **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदि-वृद्धिः, सोम इत्यत्र सू-धातोः (षू प्रेरणे, तुदादिः, सि.कौ. - धा.सं. 1408) **अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3677. स्कन्दः (10-24) - स्कन्द्-धातोः (स्कन्दिर् गतिरोषणयोः, भ्वादिः, सि.कौ. - धा.सं. 979) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3678. स्तब्धः (18-28) - स्तम्भ्-धातोः (ष्टभि प्रतिबन्धे, भ्वादिः, सि.कौ. - धा.सं. 386) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधा-नकारस्य लोपः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन भकारस्य बकारः। पुं. प्र.वि. ए.व.।

3679. स्तब्धाः (16-17) - स्तम्भ्-धातोः (ष्टभि प्रतिबन्धे, भ्वादिः, सि.कौ. - धा.सं. 386) **निष्ठा** (पा.सू. 3-2-102) इति सूत्रेण क्त-प्रत्ययः, **अनिदितां हल उपधायाः क्ङिति** (पा.सू. 6-4-24) इति उपधा-नकारस्य लोपः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन भकारस्य बकारः पुं. प्र.वि. ब.व.।

3680. स्तुतिभिः (11-21) - स्तु-धातोः (ष्टुञ् स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1043) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। स्त्री. तृ.वि. ए.व.।

3681. स्तुवन्ति (11-21) - स्तु-धातोः (ष्टुञ् स्तुतौ, अदादिः, सि.कौ. - धा.सं. 1043) लट्, लटः झिः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **झोऽन्तः** (पा.सू. 7-1-3) इति झस्य अन्तादेशः, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति धातोः उकारस्य उवङादेशः। लट्. प्र.पु. ब.व.।

3682. स्तेनः (3-12) - स्तेन्-धातोः (स्तेन चौर्ये, चुरादिः, सि.कौ. - धा.सं. 1897) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इत्यनेन णिच्, ततः **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णिचः लोपः। पुं. प्र.वि. ए.व.।

3683. स्त्रियः (9-32) - स्त्यै-धातोः (स्त्यै शब्दसंघातयोः, भ्वादिः, सि.कौ. - धा.सं. 910) **स्त्यायतेर्ड्रट्** (उणा. 4-166) इति ड्रट्-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। स्त्री. प्र.वि. ब.व.।

3684. स्त्रीषु (1-41) - स्त्री इत्यत्र स्त्यै-धातोः (स्त्यै शब्दसंघातयोः, भ्वादिः, सि.कौ. - धा.सं. 910) **स्त्यायतेर्ड्रट्** (उणा. 4-166) इति ड्रट्-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **लोपो व्योर्वलि** (पा.सू. 6-1-66) इति यलोपः, **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः** (पा.सू. 4-1-15) इति ङीप्, **यस्येति च** (पा.सू. 6-4-148) इति इ-लोपः। स्त्री. स.वि. ब.व.।

3685. स्थाणुः (2-24) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थो णुः** (उणा. 3-37) इति णु-प्रत्ययः। पुं. प्र.वि. ए.व.।

3686. स्थानम् (5-5, 8-28, 9-28, 18-62) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। नपुं. प्र.वि. ए.व.।

3687. स्थाने (11-36) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **ल्युट् च** (पा.सू. 3-3-115) इति सूत्रेण ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. स.वि. ए.व.।

3688. स्थापय (1-21) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्, तस्मात् लोट्, लोटः सिप्, स्थापि सिप्, **सेर्ह्यपिच्च** (पा.सू. 3-4-87) इति सेः हिः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति इकारस्य गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः, **अतो हेः** (पा.सू. 6-4-105) इति हेः लुक्। लोट्. म.पु. ए.व.।

3689. स्थापयित्वा (1-24) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ** (पा.सू. 7-3-36) इति पुक्, ततः स्थापि-धातोः **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **न क्त्वा सेट्** (पा.सू. 1-2-18) इति सूत्रेण सेटः क्त्वः अकित्त्वातिदेशे **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति इकारस्य गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। अव्ययम्।

3690. स्थावरजङ्गमम् (13-26) - स्थावरं च जङ्गमं च अनयोः समाहारः, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। स्थावर इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। जङ्गम इ गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **नित्यं कौटिल्ये गतौ** (पा.सू. 3-1-23) इति यङ्, तस्मात् **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **यङोऽचि च** (पा.सू. 2-4-74) इति यङः लुक्, **सन्यङोः** (पा.सू. 6-1-9) इति द्वित्वम्, **कुहोश्चुः** (पा.सू. 7-4-62) इति अभ्यासस्य चुत्वम्, **अभ्यासे चर्च** (पा.सू. 8-4-54) इति चर्त्वम्। नपुं. प्र.वि. ए.व.।

3691. स्थावराणाम् (10-25) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थेशभासपिसकसो वरच्** (पा.सू. 3-2-175) इति वरच्-प्रत्ययः। पुं. ष.वि. ब.व.।

3692. स्थास्यति (2-53) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) लृट्, लृटः तिप्, स्था ति, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। लृट्. प्र.पु. ए.व.।

3693. स्थितधीः (2-54,56) - स्थिता धीः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति स्थिता इति पदस्य पुंवद्भावः स्थित इति। स्थिता इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। धी इत्यत्र ध्यै-धातोः (ध्यै चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं.908) **ध्यायतेः सम्प्रसारणं च** (वा. 2151) इति क्विप्-प्रत्ययः सम्प्रसारणं च, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **हलः** (पा.सू. 6-4-2) इति दीर्घः। पुं. प्र.वि. ए.व.।

3694. स्थितप्रज्ञस्य (2-54) - स्थिता प्रज्ञा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति स्थिता इति पदस्य पुंवद्भावः स्थित इति। स्थिता इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। प्रज्ञा इत्यत्र प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. ष.वि. ए.व.।

3695. स्थितप्रज्ञः (2-55) - स्थिता प्रज्ञा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इति स्थिता इति पदस्य पुंवद्भावः स्थित इति। स्थिता इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। प्रज्ञा इत्यत्र प्र-पूर्वकात् ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **आतश्चोपसर्गे** (पा.सू. 3-1-136) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

3696. स्थितम् (5-19, 17-16, 15-10) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। नपुं. प्र.वि. ए.व.।

3697. स्थितः (5-20, 6-10,14,21,22, 10-42, 18-73) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. प्र.वि. ए.व.।

3698. स्थितान् (1-26) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. प्र.वि. ब.व.।

3699. स्थिताः (5-19) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। पुं. प्र.वि. ब.व.।

3700. स्थितिम् (6-33) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थागापापचो भावे** (पा.सू. 3-3-95) इति क्तिन्-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। स्त्री. द्वि.वि. ए.व.।

3701. स्थितिः (2-72, 17-27) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थागापापचो भावे** (पा.सू. 3-3-95) इति क्तिन्-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। स्त्री. प्र.वि. ए.व.।

3702. स्थितौ (1-14) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **स्थागापापचो भावे** (पा.सू. 3-3-95) इति क्तिन्-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। स्त्री. स.वि. ए.व.।

3703. स्थित्वा (2-72) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति किति** (पा.सू. 7-4-40) इति धातोः आकारस्य इकारः। अव्ययम्।

3704. स्थिरबुद्धिः (5-20) - स्थिरा बुद्धिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इत्यनेन पूर्वपदस्य पुंवद्भावः। स्थिरा इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। बुद्धि इत्यत्र बुध्-धातोः (बुध अवगमने, भ्वादिः, सि.कौ. - धा.सं. 858) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इट्-आगमः प्राप्तः, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धादेशः, **झलां जश् झशि** (पा.सू. 8-4-53) इति पूर्वधकारस्य जश्त्वेन दकारः। पुं. प्र.वि. ए.व.।

3705. स्थिरमतिः (12-19) - स्थिरा मतिः यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु** (पा.सू. 6-3-34) इत्यनेन पूर्वपदस्य पुंवद्भावः। स्थिरा इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। मति इत्यत्र मन्-धातोः (मन ज्ञाने, दिवादिः, सि.कौ. - धा.सं. 1176) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

3706. स्थिरम् (6-11, 12-9) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। नपुं. द्वि.वि. ए.व.।

3707. स्थिरः (6-13) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ए.व.।

3708. स्थिराम् (6-33) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। स्त्री. द्वि.वि. ए.व.।

3709. स्थिराः (17–8) - स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। पुं. प्र.वि. ब.व.।

3710. स्थैर्यम् (13-7) - स्थिर-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-123) इति ष्यञ्-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अ-कारलोपः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, स्थिर इत्यत्र स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः** (उणा. 1-53) इति सूत्रेण किरच्-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः। नपुं. प्र.वि. ए.व.।

3711. स्निग्धाः (17-8) - स्निह्-धातोः (ष्णिह प्रीतौ, दिवादिः, सि.कौ. - धा.सं. 1200) **मतिबुद्धिपूजार्थेभ्यश्च** (पा.सू. 3-2-188) इति क्त-प्रत्ययः, **वा द्रुहमुहष्णुहष्णिहाम्** (पा.सू. 8-2-33) इति सूत्रेण हस्य घकारः, **झषस्तथोर्धोऽधः** (पा.सू. 8-2-40) इति तकारस्य धकारः, **झलां जश् झशि** (पा.सू. 8-4-53) इति जश्त्वेन घकारस्य गकारः। पुं. प्र.वि. ब.व.।

3712. स्पर्शनम् (15-9) - स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **ल्युट् च** (पा.सू. 3-3-115) ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, अथवा **बहुलमन्यत्रापि** (उणा. 2-78) इति युच्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति यु-स्थाने अनादेशः। नपुं. द्वि.वि. ए.व.।

3713. स्पर्शान् (5-27) - स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ब.व.।

3714. स्पृशन् (5-8) - स्पृश्-धातोः (स्पृश संस्पर्शने, तुदादिः, सि.कौ. - धा.सं. 1422) लट्, **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **तुदादिभ्यः शः** (पा.सू. 3-1-77) इति श-प्रत्ययः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। पुं. प्र.वि. ए.व.।

3715. स्पृहा (4-14, 14-22) - स्पृह्-धातोः (स्पृह ईप्सायाम्, चुरादिः, सि.कौ. - धा.सं. 1872) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, ततः **षिद्भिदादिभ्योऽङ्** (पा.सू. 3-3-106) इति अङ्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

3716. स्म (2-3) - स्मि-धातोः (ष्मिङ् ई‌षद्धसने, भ्वादिः, सि.कौ. - धा.सं. 948) **अन्येभ्योऽपि दृश्यते** (वा. 2072) इति वार्तिकेन ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अव्ययम्।

3717. स्मरति (8-14) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ए.व.।

3718. स्मरन् (3-3, 8-5,6) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति लटः शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्। पुं. प्र.वि. ए.व.।

3719. स्मृतम् (17-20,21, 18-38) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। नपुं. प्र.वि. ए.व.।

3720. स्मृतः (17-23) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। पुं. प्र.वि. ए.व.।

3721. स्मृता (6-19) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. प्र.वि. ए.व.।

3722. स्मृतिभ्रंशात् (2-63) - स्मृतेः भ्रंशः तस्मात्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्मृति इत्यत्र स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। भ्रंश इत्यत्र भ्रंश्-धातोः (भ्रंशु अधःपतने, दिवादिः, सि.कौ. - धा.सं.1225) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. पं.वि. ए.व.।

3723. स्मृतिविभ्रमः (2-63) - स्मृतेः विभ्रमः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्मृति इत्यत्र स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। विभ्रम इत्यत्र वि-पूर्वकात् भ्रम्-धातोः (भ्रमु चलने, भ्वादिः, सि.कौ. - धा.सं. 850) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धौ प्राप्तायाम्, **नोदात्तोपदेशस्य मान्तस्याचमेः** (पा.सू. 7-3-34) इति सूत्रेण उपधायाः वृद्धेः निषेधः। पुं. प्र.वि. ए.व.।

3724. स्मृतिः (10-34, 15-15, 18-73) - स्मृ-धातोः (स्मृ चिन्तायाम्, भ्वादिः, सि.कौ. - धा.सं. 933) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः। स्त्री. प्र.वि. ए.व.।

3725. स्यन्दने (1-14) - स्यन्द्-धातोः (स्यन्दू प्रस्रवणे, भ्वादिः, सि.कौ. - धा.सं. 761) **बहुलमन्यत्रापि** (उणा. 2-78) इति युच्, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। पुं. स.वि. ए.व.।

3726. स्यात् (1-36, 2-7, 3-17, 10-31, 11-22, 15-20, 18-40) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लिङ्, लिङः तिप्, अस् ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अस्-धातोः अलोपः, **इतश्च** (पा.सू. 3-4-100) इति इकारस्य लोपः। विधिलिङ्. प्र.पु. ए.व.।

3727. स्याम (1-370) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लिङ्, लिङः मस्, अस् मस्, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अस्-धातोः अलोपः, **नित्यं ङितः** (पा.सू. 3-4-99) इति सलोपः। विधिलिङ्. उ.पु. ब.व.।

3728. स्याम् (3-24, 18-7) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लिङ्, लिङः मिप्, अस् मि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च**

(पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अस्-धातोः अलोपः, **तस्थस्थमिपां तांतंतामः** (पा.सू. 3-4-101) इति मिपः अम्-आदेशः। विधिलिङ्. उ.पु. ए.व.।

3729. स्युः (9-32) - अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) लिङ्, लिङः झि, अस् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः, **श्नसोरल्लोपः** (पा.सू. 3-4-111) इति अस्-धातोः अलोपः, **झेर्जुस्** (पा.सू. 3-4-108) इति झेः जुसादेशः। विधिलिङ्. प्र.पु. ब.व.।

3730. स्रंसते (1-30) - स्रंस्-धातोः (स्रंसु अवस्रंसने, भ्वादिः, सि.कौ. - धा.सं. 754) लट्, लटः त, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। लट्. प्र.पु. ए.व.।

3731. स्रोतसाम् (10-31) - स्रु-धातोः (स्रु गतौ, भ्वादिः, सि.कौ. - धा.सं. 940) **स्रुरीभ्यां तुट् च** (उणा. 4-202) इति असुन्-प्रत्ययः प्रत्ययस्य च तुट्-आगमः, **सार्वधाधुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. ष.वि. ब.व.।

3732. स्वकर्मणा (18-46) - स्वस्य कर्म तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. तृ.वि. ए.व.।

3733. स्वकर्मनिरतः (18-45) - स्वकर्मणि निरतः, **सप्तमी** (पा.सू. 2-1-40) इति योगविभागेन समासः। स्वकर्म इत्यत्र स्वस्य कर्म स्वकर्म इति विग्रहे **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, कर्मन् इत्यत्र कृ-धातोः (डुकृञ् करणे, तनादिः, सि.कौ. - धा.सं. 1472) **सर्वधातुभ्यो मनिन्** (उणा. 4-144) इति मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। निरत इत्यत्र नि-पूर्वकात् रम्-धातोः (रमु क्रीडायाम्, भ्वादिः, सि.कौ. - धा. सं.853) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) (पा.सू. 6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

3734. स्वकम् (11-50) - स्व-शब्दात् **सर्वप्रातिपदिकेभ्यः स्वार्थे कन् वक्तव्यः** इति कन्-प्रत्ययः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। नपुं. द्वि.वि. ए.व.।

3735. स्वचक्षुषा (11-8) - स्वस्य चक्षुः तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। चक्षुस् इत्यत्र चक्ष्-धातोः (चक्षिङ् व्यक्तायां वाचि, अदादिः, सि.कौ. - धा.सं. 1017) **चक्षेः शिच्च** (उणा. 3-119) इति उसि-प्रत्ययः। नपुं. तृ.वि. ए.व.।

3736. स्वजनम् (1-28,31,37,45) - स्वस्य जनः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। जन इत्यत्र जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3737. स्वतेजसा (11-19) - स्वस्य तेजः तेन, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। तेज इत्यत्र तिज्-

धातोः (तिज निशाने क्षमायां च, भ्वादिः, सि.कौ. - धा.सं. 971) **सर्वधातुभ्योऽसुन्** (उणा. 4-188) इति असुन्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। नपुं. तृ.वि. ए.व.।

3738. स्वधर्मम् (2-31,33) - स्वस्य धर्मः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. द्वि.वि. ए.व.।

3739. स्वधर्मः (3-35, 18-47) - स्वस्य धर्मः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण मन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3740. स्वधर्मे (3-35) - स्वस्य धर्मः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। धर्म इत्यत्र धृ-धातोः (धृञ् धारणे, भ्वादिः, सि.कौ. - धा.सं. 900) मन्-प्रत्ययः **अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** (उणा. 1-137) इति सूत्रेण, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. स.वि. ए.व.।

3741. स्वधा (9-16) - स्वद्-धातोः (ष्वद आस्वादने, भ्वादिः, सि.कौ. - धा.सं. 1800) बाहुलकात् आ-प्रत्ययः, पृषोदरादित्वात् (पा.सू. 6-4-109) धातोः दकारस्य धकारः। अव्ययम्।

3742. स्वनुष्ठितात् (3-35, 18-47) - शोभनम् अनुष्ठितं तस्मात्, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। अनुष्ठित इत्यत्र अनु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **द्यतिस्यतिमास्थामित्ति** पा.सू. 7-4-40) किति इति इत्वम्, **उपसर्गात् सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्** (पा.सू. 8-3-65) इति धातोः सकारस्य षत्वम्। पुं. पं.वि. ए.व.।

3743. स्वपन् (5-8) - स्वप्-धातोः (ञिष्वप शये, अदादिः, सि.कौ. - धा.सं. 1068) लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शतृ-आदेशः, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्। पुं. प्र.वि. ए.व.।

3744. स्वप्नम् (18-35) - स्वप्-धातोः (ञिष्वप शये, अदादिः, सि.कौ. - धा.सं. 1068) **स्वपो नन्** (पा.सू. 3-3-91) इति नन्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3745. स्वबान्धवान् (1-37) - स्वस्य बान्धवाः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। बान्धव इत्यत्र बन्धुः एव बान्धव इति विग्रहे बन्धु शब्दात् **प्रज्ञादिभ्यश्च** (पा.सू. 5-4-38) इति अण्, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदि-वृद्धिः, **ओर्गुणः** (पा.सू. 6-4-146) इति उकारस्य गुणः ओकारः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः, बन्धु इत्यत्र बन्ध्-धातोः (बन्ध बन्धने, क्र्यादिः, सि.कौ. - धा.सं. 1508) **शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च** (उणा. 1-10) इति उ-प्रत्ययः। पुं. द्वि.वि. ब.व.।

3746. स्वभावजम् (18-42,43,44,44) - स्वस्य भावः स्वभावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्वभावात् जातः तम् इति विग्रहे स्वभाव-उपपदात् जन्-धातोः **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेः

लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। नपुं. प्र.वि. ए.व.।

3747. स्वभावजा (17-2) - स्वस्य भावः स्वभावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्वभावात् जाता इति विग्रहे स्वभाव-उपपदात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। स्त्री. प्र.वि. ए.व.।

3748. स्वभावजेन (18-60) - स्वस्य भावः स्वभावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्वभावात् जातः तेन इति विग्रहे स्वभाव-उपपदात् जन्-धातोः (जनी प्रादुर्भावे, दिवादिः, सि.कौ. - धा.सं. 1149) **पञ्चम्यामजातौ** (पा.सू. 3-2-98) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् अभस्यापि टेः लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति उपपदसमासः। स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। नपुं. तृ.वि. ए.व.।

3749. स्वभावनियतम् (18-47) - स्वभावेन नियतम्, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। स्वस्य भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्वभाव इत्यत्र स्वस्य भावः स्वभावः इति विग्रहे **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। नियत इत्यत्र नि-पूर्वकात् यम्-धातोः (यम उपरमे, भ्वादिः, सि.कौ. - धा.सं. 984) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। नपुं. द्वि.वि. ए.व.।

3750. स्वभावप्रभवैः (18-41) - स्वभावात् प्रभवाः, **पञ्चमी** (पा.सू. 2-2-37) इति योगविभागेन समासः। स्वस्य भावः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्वभाव इत्यत्र स्वस्य भावः स्वभावः इति विग्रहे **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। प्रभव इत्यत्र प्र-पूर्वकात् भू-धातोः (भू प्राप्तौ, चुरादिः,

सि.कौ. - धा.सं. 1845) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अवादेशः। पुं. तृ.वि. ए.व.।

3751. स्वभावः (5-14, 8-3) - स्वस्य भावः स्वभावः इति विग्रहे **षष्ठी** (पा.सू. 2-2-8) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। भाव इत्यत्र भू-धातोः (भू प्राप्तौ, चुरादिः, सि.कौ. - धा.सं. 1845) **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** (पा.सू. 3-1-25) इति णिच्, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, अथवा **श्रिणीभुवोनुपसर्गे** (पा.सू. 3-3-24) इति घञ्-प्रत्ययः। पुं. प्र.वि. ए.व.।

3752. स्वयम् (4-38, 10-13,15, 18-75) - सु-पूर्वकात् अय्-धातोः (अय गतौ, भ्वादिः, सि.कौ. - धा.सं.474) बाहुलकात् अम्-प्रत्ययः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अव्ययम्।

3753. स्वया (7-20) - स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

3754. स्वर्गतिम् (9-20) - स्वर् एव गतिः ताम्, **सह सुपा** (पा.सू. 2-1-4) इति समासः। स्वर् इत्यत्र स्वृ-धातोः (स्वृ शब्दोपतापयोः, भ्वादिः, सि.कौ. - धा.सं. 932) **अन्येभ्योऽपि दृश्यन्ते** (पा.सू. 3-2-75) इति सूत्रेण विच्-प्रत्ययः, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, स्वर् इति अव्ययम्। गति इत्यत्र गम्-धातोः (गमॢ गतौ, भ्वादिः, सि.कौ. - धा.सं. 982) **स्त्रियां क्तिन्** (पा.सू. 3-3-94) इति क्तिन्-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू. 6-4-37) इति अनुनासिकलोपः। स्त्री. द्वि.वि. ए.व.।

3755. स्वर्गद्वारम् (2-32) - स्वर्गस्य द्वारम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्वर्ग इत्यत्र सु-पूर्वकात् अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। द्वार इत्यत्र द्वृ-धातोः (द्वृ स्थगने, भ्वादिः इति शब्दकल्पद्रुमः) **हेतुमति च** (पा.सू. 3-1-26) इति णिच्, **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः, **अचो ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **णेरनिटि** (पा.सू. 6-4-51) इति णेर्लोपः। नपुं. प्र.वि. ए.व.।

3756. स्वर्गपराः (2-43) - स्वर्गः एव परः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। स्वर्ग इत्यत्र सु-पूर्वकात् अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पर इत्यत्र पॄ-धातोः (पॄ पालनपूरणयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1086) **ऋदोरप्** (पा.सू. 3-3-57) इति अप्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

3757. स्वर्गम् (2-37) - सु-पूर्वकात् अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। पुं. द्वि.वि. ए.व.।

3758. स्वर्गलोकम् (9-21) - स्वर्गः इति लोकः, **मयूरव्यंसकादयश्च** (पा.सू. 2-1-72) इति समासः। स्वर्ग इत्यत्र सु-पूर्वकात् अर्ज्-धातोः (अर्ज अर्जने, भ्वादिः, सि.कौ. - धा.सं. 224) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-3-19) इति घञ्-प्रत्ययः, **न्यङ्क्वादीनां च** (पा.सू. 7-3-53) इति कुत्वम्, **इको यणचि** (पा.सू. 6-1-77) इति यण्। लोक इत्यत्र लोकृ-धातोः (लोकृ भाषायाम्, भ्वादिः, सि.कौ. - धा.सं. 76) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3759. स्वल्पम् (2-40) - सुष्ठु अल्पः, **कुगतिप्रादयः** (पा.सू. 2-2-18) इति समासः, समासे सुष्ठु इत्यर्थे सु-शब्दः प्रयुज्यते। अल्प इत्यत्र अल्-धातोः (अल भूषणपर्याप्तिवारणेषु, भ्वादिः, सि.कौ. - धा.सं. 515) बाहुलकात् प-प्रत्ययः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

3760. स्वस्ति (11-21) - अव्ययम्। सु-पूर्वकात् अस्-धातोः (अस भुवि, अदादिः, सि.कौ. - धा.सं. 1065) **क्तिच्क्तौ च संज्ञायाम्** (पा.सू. 3-3-174) इति क्तिच्-प्रत्ययः, **इको यणचि** (पा.सू. 6-1-77) इति यण्। अव्ययम्।

3761. स्वस्थः (14-24) - स्वस्थ इत्यत्र स्वस्मिन् तिष्ठति इति विग्रहे स्व-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, स्व इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। पुं. प्र.वि. ए.व.।

3762. स्वस्याः (3-33) - स्वा इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

3763. स्वम् (6-13) - स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्त्वसामर्थ्यात् टेः लोपः। डित्त्वात् टेः लोपः। पुं. द्वि.वि. ए.व.।

3764. स्वाध्यायज्ञानयज्ञाः (4-28) - स्वाध्यायस्य ज्ञानम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्वाध्यायज्ञानं यज्ञः येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। स्वाध्याय इत्यत्र सुष्ठु अतीव अथवा आवृत्त्या अध्याय इति विग्रहे सु-आङ्-अधि-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **इङश्च** (पा.सू. 3-3-21) इति-सूत्रेण घञ्-प्रत्ययः, **ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। यज्ञ इत्यत्र यज्-धातोः (यज देवपूजासङ्गतिकरणदानेषु, भ्वादिः, सि.कौ. - धा.सं. 1002) **यजयाचयतविच्छप्रच्छरक्षो नङ्** (पा.सू. 3-3-90) इति नङ्, **स्तोः श्चुना श्चुः** (पा.सू. 8-4-40) इति श्चुत्वम्। सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ब.व.।

3765. स्वाध्यायः (16-1) - सुष्ठु अतीव अथवा आवृत्त्या अध्याय इति विग्रहे सु-आङ्-अधि-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **इङश्च** (पा.सू. 3-3-21) इति-सूत्रेण घञ्-प्रत्ययः, **ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। पुं. प्र.वि. ए.व.।

3766. स्वाध्यायाभ्यसनम् (17-15) - स्वाध्यायस्य अभ्यसनम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। स्वाध्याय इत्यत्र सुष्ठु अतीव अथवा आवृत्त्या अध्याय इति विग्रहे सु-आङ्-अधि-पूर्वकात् इ-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1045) **इङश्च** (पा.सू. 3-3-21) इति-सूत्रेण घञ्-प्रत्ययः, **ञ्णिति** (पा.सू. 7-2-115) इति वृद्धिः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति आयादेशः, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। अभ्यसन इत्यत्र

अभि-पूर्वकात् अस्-धातोः (असु क्षेपणे, दिवादिः, सि.कौ. - धा.सं. 1209) **ल्युट् च** (पा.सू. 3-3-115) ल्युट्-प्रत्ययः, **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः। सुष्ठु इत्यत्र सु-पूर्वकात् स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **अपदुःसुषु स्थः** (उणा. 1-26) इति सूत्रेण कु-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आलोपः, **सुषामादिषु च** (पा.सू. 8-3-98) इति षत्वम्, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। नपुं. प्र.वि. ए.व.।

3767. स्वाम् (4-6, 9-8) - स्वा इत्यत्र स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्वसामर्थ्यात् टेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. द्वि.वि. ए.व.।

3768. स्वे (18-45,45) - स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्वसामर्थ्यात् टेः लोपः। डित्वात् टेः लोपः। नपुं. स.वि. ए.व.।

3769. स्वेन (18-60) - स्वन्-धातोः (स्वन शब्दे, भ्वादिः, सि.कौ. - धा.सं. 827) **अन्येभ्योपि दृश्यते** (वा. 2072) इति ड-प्रत्ययः, डित्वसामर्थ्यात् टेः लोपः। डित्वात् टेः लोपः। नपुं. तृ.वि. ए.व.।

3770. ह (2-9) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **अन्येभ्योऽपि दृश्यते** (वा. 2072) इति वार्तिकेन ड-प्रत्ययः, डित्वसामर्थ्यात् टेः लोपः। अव्ययम्।

3771. हतम् (2-19) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. द्वि.वि. ए.व.।

3772. हतः (2-37, 16-14) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ए.व.।

3773. हतान् (11-34) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। पुं. प्र.वि. ब.व.।

3774. हत्वा (1-31,36,37, 2-5,6, 18-17) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति** (पा.सू.6-4-37) इति अनुनासिकलोपः। अव्ययम्।

3775. हनिष्ये (16-14) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लृट्, लृटः इट्, हन् इ, **स्यतासी लृलुटोः** (पा.सू. 3-1-33) इति स्य-प्रत्ययः, **ऋद्धनोः स्ये** (पा.सू. 7-2-70) इति इडागमः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्, **अतो गुणे** (पा.सू. 6-1-97) इति पररूपम्, **आदेशप्रत्यययोः** (पा.सू. 8-3-59) इति सस्य षत्वम्। यद्यपि हन्-धातुः परस्मैपदी तथापि अत्र आत्मनेपदप्रयोगः आर्षः मन्तव्यः। लृट्. उ.पु. ए.व.।

3776. हन्त (10-19) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) बाहुलकात् त-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः। अव्ययम्।

3777. हन्तारम् (2-19) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **ण्वुल्तृचौ** (पा.सू. 3-1-133) इति तृच्-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति

इटः निषेधः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः। पुं. द्वि.वि. ए.व.।

3778. हन्ति (2-19,21, 18-17) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लट्, लटः तिप्, **कर्तरि शप्** (पा.सू. 3-1-68), इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः। लट्. प्र.पु. ए.व.।

3779. हन्तुम् (1-35,37,45) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** (पा.सू. 3-3-10) इति तुमुन्-प्रत्ययः, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः, **अनुस्वारस्य ययि परसवर्णः** (पा.सू. 8-4-58) इति अनुस्वारस्य परसवर्णः नकारः। अव्ययम्।

3780. हन्यते (2-19,20) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) कर्मणि लट्, लटः त, हन् त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदम्, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

3781. हन्यमाने (2-20) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) कर्मणि लट्, लटः स्थाने **लटः शतृशानचावप्रथमासमानाधिकरणे** (पा.सू. 3-2-124) इति शानच्-आदेशः, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **आने मुक्** (पा.सू. 7-2-82) इति मुक्-आगमः। नपुं. स.वि. ए.व.।

3782. हन्युः (1-43) - हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) लिङ्, लिङः झि, हन् झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **अदिप्रभृतिभ्यः शपः** (पा.सू. 2-4-72) इति शपः लुक्, **यासुट् परस्मैपदेषूदात्तो ङिच्च** (पा.सू. 3-4-103) इति यासुट्, **झेर्जुस्** (पा.सू. 3-4-108) इति झेः जुस्, **लिङः सलोपोनन्त्यस्य** (पा.सू. 7-2-79) इति सस्य लोपः। विधिलिङ्. प्र.पु. ब.व.।

3783. हयैः (1-14) - हय्-धातोः (हय गतौ, भ्वादिः, सि.कौ. - धा.सं. 512) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इति अच्-प्रत्ययः। पुं. तृ.वि. ब.व.।

3784. हरति (2-67) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) लट्, लटः तिप्, हृ ति, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ए.व.।

3785. हरन्ति (2-60) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) लट्, लटः झि, हृ झि, **कर्तरि शप्** (पा.सू. 3-1-68) इति शप्, **झोऽन्तः** (पा.सू. 7-1-3) इति अन्तादेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। लट्. प्र.पु. ब.व.।

3786. हरिः (11-9) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** (उणा. 4-118) इन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3787. हरेः (18-77) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च** (उणा. 4-118) इन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. ष.वि. ए.व.।

3788. हर्षशोकान्वितः (18-27) - हर्षश्च शोकश्च, **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। हर्षशोकाभ्याम् अन्वितः, **तृतीया तत्कृतार्थेन गुणवचनेन** (पा.सू. 2-1-30) इति समासः। हर्ष इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **भावे** (पा.सू. 3-3-18) इत घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। शोक इत्यत्र शुच्-धातोः (शुच शोके, भ्वादिः, सि.कौ. - धा.सं. 1930) **भावे** (पा.सू. 3-3-18) इत घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86)

इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। अन्वित इत्यत्र अनु-पूर्वकात् इण्-धातोः (इण् गतौ, अदादिः, सि.कौ. - धा.सं. 1054) कर्तरि क्त-प्रत्ययः **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति सूत्रेण, **इको यणचि** (पा.सू. 6-1-77) इति यण्, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमः प्राप्तः, **एकाच उपदेशेनुदात्तात्** (पा.सू. 7-2-10) इति इडागमस्य निषेधः। पुं. प्र.वि. ए.व.।

3789. हर्षम् (1-12) - हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **भावे** (पा.सू. 3-3-18) इत घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। पुं. द्वि.वि. ए.व.।

3790. हर्षामर्षभयोद्वेगैः (12-15) - हर्षश्च अमर्षश्च भयं च उद्वेगश्च **चार्थे द्वन्द्वः** (पा.सू. 2-2-29) इति समासः। हर्ष इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **भावे** (पा.सू. 3-3-18) इत घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। अमर्ष इत्यत्र न मर्षः इति विग्रहे **नञ्** (पा.सू 2-2-6) इति समासः, **नलोपो नञः** (पा.सू. 6-3-73) इति नलोपः, मर्ष इत्यत्र मृष्-धातोः (मृष तितिक्षायाम्, दिवादिः, सि.कौ. - धा.सं. 1164) **भावे** (पा.सू. 3-3-18) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः। भय इत्यत्र भी-धातोः (ञिभी भये, जुहोत्यादिः, सि.कौ. - धा.सं. 1084) **एरच्** (पा.सू. 3-3-56) इति अच्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। उद्वेग इत्यत्र उद्-पूर्वकात् विज्-धातोः (ओविजी भयचलनयोः, तुदादिः, सि.कौ. - धा.सं. 1289) **हलश्च** (पा.सू. 3-3-121) इति घञ्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः, **चजोः कु घिण्यतोः** (पा.सू. 7-3-52) इति कुत्वम्। पुं. तृ.वि. ब.व.।

3791. हविः (4-24) - हु-धातोः (हु दानादानयोः, जुहोत्यादिः, सि.कौ. - धा.सं.1086) **अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः** (पा.सू. 2-108) इति इसि-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। नपुं. प्र.वि. ए.व.।

3792. हस्तात् (1-30) - हस्-धातोः (हसे हसने, भ्वादिः, सि.कौ. - धा.सं. 721) **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (पा.सू. 3-86) इति तन्-प्रत्ययः। पुं. पं.वि. ए.व.।

3793. हस्तिनि (5-18) - हस्त-शब्दात् **हस्ताज्जातौ** (पा.सू. 5-2-133) इति इनि-प्रत्ययः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, हस्त इत्यत्र हस्-धातोः (हसे हसने, भ्वादिः, सि.कौ. - धा.सं. 721) **हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्** (पा.सू. 3-86) इति तन्-प्रत्ययः। पुं. स.वि. ए.व.।

3794. हानिः (2-65) - हा-धातोः (ओहाक् त्यागे, जुहोत्यादिः, सि.कौ. - धा.सं. 1090) **ग्लाम्लाज्याहाभ्यो निः** (वा. 4048) इति वार्तिकेन नि-प्रत्ययः। स्त्री. प्र.वि. ए.व.।

3795. हि (1-11,37,42, 2-8,5,15,27,31,41,49,51,60,61,65,67, 3-5,5,8,12,19,20,23,34, 4-3,7,12,17,38, 5-3,19,22, 6-2,4,5,27,34,39,40,42,44, 7-14,17,18,22, 8-26, 9-34,30,32, 10-2,14,16,18,19, 11-2,20,21,24,31, 12-5,12, 13-21,28, 14-27, 18-4,11,48) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **अन्येभ्योऽपि दृश्यन्ते** (पा.सू. 3-2-75) इति सूत्रेण विच्-प्रत्ययः, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः परन्तु **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति परिभाषया न भवति। अव्ययम्।

3796. हितकाम्यया (10-1) - हितस्य काम्या, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हित इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरूहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, अथवा धा-धातोः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, (पा.सू. 7-4-42) इति धा-स्थाने हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। काम्या इत्यत्र कम्-

धातोः (कमु कान्तौ, भ्वादिः, सि.कौ. - धा.सं. 443) **कमेर्णिङ्** इति णिङ्, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः, **अचो यत्** (पा.सू. 3-1-124) इति यत्-प्रत्ययः, **णेरनिटि** (पा.सू. 6-4-51) इति णेः लोपः, **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्। स्त्री. तृ.वि. ए.व.।

3797. हितम् (18-64) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, अथवा धा-धातोः **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, (पा.सू. 7-4-42) इति धा-स्थाने हि-आदेशः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ए.व.।

3798. हित्वा (2-33) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **समानकर्तृकयोः पूर्वकाले** (पा.सू. 3-4-21) इति क्त्वा-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। अव्ययम्।

3799. हिनस्ति (13-28) - हिन्स्-धातोः (हिसि हिंसायाम्, रुधादिः, सि.कौ. - धा.सं. 1456) लट्, लटः तिप्, हिन्स् **रुधादिभ्यः श्नम्** (पा.सू. 3-1-78) इति श्नम्, **श्नान्नलोपः** (पा.सू. 6-4-23) इति नलोपः। लट्. प्र.पु. ए.व.।

3800. हिमालयः (10-25) - हिमस्य आलयः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हिम इत्यत्र हन्-धातोः (हन हिंसागत्योः, अदादिः, सि.कौ. - धा.सं. 1012) **हन्तेर्हि च** (उणा. 1-144) इति मक्-प्रत्ययः धातोः हि इति आदेशः च, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। आलय इत्यत्र आङ्पूर्वकात् ली-धातोः (लीङ् श्लेषणे, दिवादिः, सि.कौ. - धा.सं. 1139) **पुंसि संज्ञायां घः प्रायेण** (पा.सू. 3-3-118) इति घ-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः, **एचोऽयवायावः** (पा.सू. 6-1-78) इति अयादेशः। पुं. प्र.वि. ए.व.।

3801. हिंसात्मकः (18-27) - हिंसा आत्मा यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः, **शेषाद्विभाषा** (पा.सू. 5-4-154) इति समासान्तः कप्, **नलोपः प्रातिपदिकान्तस्य** (पा.सू. 8-2-7) इति नलोपः। हिंसा इत्यत्र हिस्-धातोः (हिसि हिंसायाम्, रुधादिः, सि.कौ. - धा.सं. 1456) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **गुरोश्च हलः** (पा.सू. 3-3-103) इति अप्रत्ययः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः। आत्मन् इत्यत्र अत्-धातोः (अत सातत्यगमने, भ्वादिः, सि.कौ. - धा.सं. 38) **सातिभ्यां मनिन्मनिणौ** इति (उणा. 4-152) मनिण्-प्रत्ययः, **अत उपधायाः** (पा.सू. 7-1-116) इति वृद्धिः। स्त्री. प्र.वि. ए.व.।

3802. अहैतुकम् (18-22) – अविद्यमानं हैतुकं यस्य, **नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः** (वा.1361) इति बहुव्रीहिः, उत्तरपदलोपश्च। हैतुकम् इत्यत्र हेतु-शब्दात् **चरति** (पा.सू.5-4-38) इति सूत्रेण ठक्-प्रत्ययः, **ठस्येकः** (पा.सू. 7-3-50) इति ठस्य इक-आदेशः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (उणा. 1-72) इति तु-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3803. हिंसाम् (18-25) - हिस्-धातोः (हिसि हिंसायाम्, रुधादिः, सि.कौ. - धा.सं. 1456) इदित्त्वात्, **इदितो नुम् धातोः** (पा.सू. 7-1-58) इति नुम्, **गुरोश्च हलः** (पा.सू. 3-3-103) इति अप्रत्ययः, स्त्रियाम् **अजाद्यतष्टाप्** (पा.सू. 4-1-4) इति टाप्, **नश्चापदान्तस्य झलि** (पा.सू. 8-3-24) इति नकारस्य अनुस्वारः। स्त्री. प्र.वि. ए.व.।

3804. हुतम् (4-24, 9-16, 17-28)- हु-धातोः (हु दानादानयोः, जुहोत्यादिः, सि.कौ. - धा.सं. 1083) **नपुंसके भावे क्तः** (पा.सू. 3-3-114) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्**

(पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. प्र.वि. ए.व.।

3805. हतज्ञानाः (7-20) - हतं ज्ञानं येषां ते, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। हत इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **निष्ठा** (पा.सू. 3-2-102) इति क्त-प्रत्ययः, **आर्धधातुकस्येड्वलादेः** (पा.सू. 7-2-35) इति इडागमे प्राप्ते, **एकाच उपदेशेऽनुदात्तात्** (पा.सू. 7-2-10) इति इटः निषेधः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ज्ञान इत्यत्र ज्ञा-धातोः (ज्ञा अवबोधने, क्र्यादिः, सि.कौ. - धा.सं. 1507) **ल्युट् च** (पा.सू. 3-3-115) इति ल्युट्-प्रत्ययः, यु-स्थाने **युवोरनाकौ** (पा.सू. 7-1-1) इति अनादेशः, **अकः सवर्णे दीर्घः** (पा.सू. 6-1-101) इति दीर्घः। पुं. प्र.वि. ब.व.।

3806. हृत्स्थम् (4-42) - हृदि स्थितम् इति विग्रहे हृद्-उपपदे स्था-धातोः (ष्ठा गतिनिवृत्तौ, भ्वादिः, सि.कौ. - धा.सं. 928) **सुपि स्थः** (पा.सू. 3-2-4) इति क-प्रत्ययः, **आतो लोप इटि च** (पा.सू. 6-4-64) इति आ-लोपः, **उपपदमतिङ्** (पा.सू. 2-2-19) इति समासः, **खरि च** (8-4-55) इति दकारस्य तकारः, हृद् इत्यत्र **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** (पा.सू. 6-1-63) इति हृदयस्य हृद्-आदेशः, अथवा हृ-धातोः बाहुलकात् दुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. द्वि.वि. ए.व.।

3807. हृदयदौर्बल्यम् (2-3) - हृदयस्य दौर्बल्यम्, **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणे** (पा.सू. 2-2-11) इत्यनेन **षष्ठी** (पा.सू. 2-2-8) इति समासनिषेधः भवति परन्तु **तदशिष्यं संज्ञाप्रमाणत्वात्** (पा.सू. 1-2-53) इति निर्देशात् समासः अत्र उच्यते। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। दौर्बल्य इत्यत्र दुर्बल-शब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च** (पा.सू. 5-1-123) इति ष्यञ्-प्रत्ययः, **तद्धितेष्वचामादेः** (पा.सू. 7-2-117) इति आदिवृद्धिः, **यस्येति च** (पा.सू. 6-4-148) इति अकारलोपः, दुर्बल इत्यत्र दुष्टं बलं इति विग्रहे **प्रादयः गताद्यर्थे प्रथमया** (वा. 1335) इति समासः, अत्र दुष्टार्थे दुर् इति शब्दः समासे प्रयुज्यते, बल इत्यत्र बल्-धातोः (बल प्राणने धान्यावरोधने च, भ्वादिः, सि.कौ. - धा.सं. 840) **अकर्तरि च कारके संज्ञायाम्** (पा.सू. 3-1-134) इति घञ्-प्रत्ययः, **संज्ञापूर्वको विधिरनित्यः** (परि. 94) इति कारणात् **अत उपधायाः** (पा.सू. 7-2-116) इति वृद्धिः न। नपुं. द्वि.वि. ए.व.।

3808. हृदयानि (1-19) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. द्वि.वि. ब.व.।

3809. हृदि (8-12, 13-17, 15-15) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, हृदय ङि, ततः **पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** (पा.सू. 6-1-63) इति हृदयस्य हृद्-आदेशः, अथवा हृ-धातोः बाहुलकात् दुक्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। नपुं. स.वि. ए.व.।

3810. हृद्देशे (18-61) - हृदयस्य हृदः वा देशः तस्मिन्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः, ततः

**पद्दन्नोमास्हन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु** (पा.सू. 6-1-63) इति हृदयस्य हृद्-आदेशः, अथवा हृ-धातोः बाहुलकात् दुक्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। देश इत्यत्र दिश्-धातोः (दिश अतिसर्जने, तुदादिः, सि.कौ. - धा.सं. 1283) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** (पा.सू. 3-1-134) इत्यनेन अच्-प्रत्ययः, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति सूत्रेण उपधागुणः। पुं. स.वि. ए.व.।

3811. हृद्याः (17-8) - हृदय-शब्दात् **हृदयस्य प्रियः** (पा.सू. 4-4-95) इति यत्-प्रत्ययः, **हृदयस्य हृल्लेखयदण्लासेषु** (पा.सू. 6-3-50) हृदयस्य स्थाने हृद्-आदेशः भवति, हृदय इत्यत्र हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) **वृह्रोः षुक्दुकौ च** (उणा. 4-100) इति सूत्रेण कयन्-प्रत्ययः धातोः दुगागमश्च, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। पुं. प्र.वि. ब.व.।

3812. हृषितः (11-45) - हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **विस्मितप्रतिघातयोश्च** (वा. 4417) इति वार्तिकेन इट् विकल्पेन भवति। पुं. प्र.वि. ए.व.।

3813. हृषीकेश (11-36, 18-1) - हृषीकाणाम् ईश!, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हृषीक इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **अनिहृषिभ्यां किच्च** (उणा. 4-17) इति सूत्रेण ईकन्-प्रत्ययः स च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ईश इत्यत्र ईश्-धातोः (ईश ऐश्वर्ये, अदादिः, सि.कौ. - धा.सं. 1020) **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. सम्बो.वि. ए.व.।

3814. हृषीकेशम् (1-21, 2-9) - हृषीकाणाम् ईशः तम्, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हृषीक इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **अनिहृषिभ्यां किच्च** (उणा. 4-17) इति सूत्रेण ईकन्-प्रत्ययः स च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ईश इत्यत्र ईश्-धातोः **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. द्वि.वि. ए.व.।

3815. हृषीकेशः (1-15,24, 2-10) - हृषीकाणाम् ईशः, **षष्ठी** (पा.सू. 2-2-8) इति समासः। हृषीक इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **अनिहृषिभ्यां किच्च** (उणा. 4-17) इति सूत्रेण ईकन्-प्रत्ययः स च कित्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः, **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः। ईश इत्यत्र ईश्-धातोः **इगुपधज्ञाप्रीकिरः कः** (पा.सू. 3-1-135) इति क-प्रत्ययः। पुं. प्र.वि. ए.व.।

3816. हृष्टरोमा (11-14) - हृष्टानि रोमाणि यस्य सः, **अनेकमन्यपदार्थे** (पा.सू. 2-2-24) इति समासः। हृष्ट इत्यत्र हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) **गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च** (पा.सू. 3-4-72) इति क्त-प्रत्ययः, **विस्मितप्रतिघातयोश्च** (वा. 4417) इति वार्तिकेन इड्विकल्पः, **ष्टुना ष्टुः** (पा.सू. 8-4-41) इति ष्टुत्वम्। रोमन् इत्यत्र रु-धातोः (रुङ् गतिरोषणयोः, भ्वादिः, सि.कौ. - धा.सं. 959) **नामन्-सीमन्-व्योमन्-रोमन्-लोमन्-पाप्मन्-ध्यामन्** (उणा. 4-150) इति सूत्रेण मनिन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3817. हृष्यति (12-17) - हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) लट्, लटः तिप्, हृष् ति, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः परन्तु **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङिद्वद्भावकारणात् **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः प्रवर्तते। लट्. प्र.पु. ए.व.।

3818. हृष्यामि (18-76,77) - हृष्-धातोः (हृष तुष्टौ, दिवादिः, सि.कौ. - धा.सं. 1229) लट्, लटः मिप्, **दिवादिभ्यः श्यन्** (पा.सू. 3-1-69) इति श्यन्, **पुगन्तलघूपधस्य च** (पा.सू. 7-3-86) इति गुणः प्राप्तः परन्तु **सार्वधातुकमपित्** (पा.सू. 1-2-4) इति श्यनः ङिद्वद्भावकारणात् **क्ङिति च** (पा.सू. 1-1-5) इति गुणनिषेधः प्रवर्तते, **अतो दीर्घो यञि** (पा.सू. 7-3-101) इति अदन्तस्य अङ्गस्य दीर्घः। लट्. उ.पु. ए.व.।

3819. हे (11-41,41,41) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **अन्येभ्योऽपि दृश्यन्ते** (पा.सू. 3-2-75) इति सूत्रेण विच्-प्रत्ययः, विचः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति चकारस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। अव्ययम्।

3820. हेतवः (18-15) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (पा.सू. 1-72) इति तुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ब.व.।

3821. हेतुना (9-10) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (पा.सू. 1-72) इति तुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. तृ.वि. ए.व.।

3822. हेतुमद्भिः (13-4) - हेतु-शब्दात् **तदस्यास्त्यस्मिन्निति मतुप्** (पा.सू. 5-2-94) इति मतुप्-प्रत्ययः, हेतु इत्यत्र हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (पा.सू. 1-72) इति तुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। नपुं. तृ.वि. ब.व.।

3823. हेतुः (13-20,20) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (पा.सू. 1-72) इति तुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. प्र.वि. ए.व.।

3824. हेतोः (1-35) - हि-धातोः (हि गतौ वृद्धौ च, स्वादिः, सि.कौ. - धा.सं. 1258) **कमिमनिजनिगाभायाहिभ्यश्च** (पा.सू. 1-72) इति तुन्-प्रत्ययः, **सार्वधातुकार्धधातुकयोः** (पा.सू. 7-3-84) इति गुणः। पुं. पं.वि. ए.व.।

3825. ह्रियते (6-44) - हृ-धातोः (हृञ् हरणे, भ्वादिः, सि.कौ. - धा.सं. 899) कर्मणि लट्, **भावकर्मणोः** (पा.सू. 1-3-13) इति आत्मनेपदपदम् इत्यतः लटः त, हृ त, **सार्वधातुके यक्** (पा.सू. 3-1-67) इति यक्, **रिङ् शयग्लिङ्क्षु** (पा.सू. 7-4-28) इति ऋकारस्य रिङ्-आदेशः भवति, **अचि श्नुधातुभ्रुवां य्वोरियङुवङौ** (पा.सू. 6-4-77) इति इयङादेशः, **टित आत्मनेपदानां टेरे** (पा.सू. 3-4-79) इति टेः एत्वम्। कर्मणि लट्. प्र.पु. ए.व.।

3826. ह्रीः (16-2) - ह्री-धातोः (ह्री लज्जायाम्, जुहोत्यादिः, सि.कौ. - धा.सं. 1085) **सम्पदादिभ्यः क्विप्** (वा. 2233) इति क्विप्-प्रत्ययः, क्विपः सर्वलोपः - **हलन्त्यम्** (पा.सू. 1-3-3) इति पस्य **उपदेशेऽजनुनासिक इत्** (पा.सू. 1-3-2) इति इकारस्य **लशक्वतद्धिते** (पा.सू. 1-3-8) इति ककारस्य च इत्संज्ञा, **तस्य लोपः** (पा.सू. 1-3-9) इति इत्संज्ञकानां लोपः, **वेरपृक्तस्य** (पा.सू. 6-1-67) इति वलोपः। स्त्री. प्र.वि. ए.व.।